"पञ्चाशल्लिपिभिः पुरा भगवति ! त्वया यदङ्गी-
कृतं तच्चाद्यं सफलोऽधुनापि विमतिस्तत्पादपङ्क-
स्तुते: ॥" )
पञ्चास्यः, पुं, (पञ्चं विस्तृतं आस्यं यस्य ।) सिंहः ।
इत्यमरः । २ । ५ । १० ॥ ( पञ्चानि आस्यानि
यस्य । शिवः ॥ पञ्चमुखविशिष्टे, त्रि । यथा,
गो: रामायणे । ५ । ७४ । २३ ।
"लङ्घितेयं विशालाक्षी मया शोकपरायणा ।
आदायैतां न जानीमे पञ्चास्यामिव भोगि-
नीम् ॥" )
पञ्चीकरणं, क्ली, पञ्चभूतानां भागविशेषेण मिश्री-
करणम् । यथा । "पञ्चीकरणन्तु आकाशादि-
पञ्चस्वेकैकं द्विधा समं विभज्य तेषु दशसु
भागेषु मध्ये प्राथमिकान् पञ्चभागान् प्रत्येकं
चतुर्द्धा समं विभज्य तेषां चतुर्णां भागानां
स्वस्वद्वितीयार्द्धभागं परित्यज्य भागान्तरेषु
संयोजनम् । तदुक्तम् ।
द्विधा विधाय चैकैकं चतुर्द्धा प्रथमं पुनः ।
स्वस्वेतरद्वितीयांशैर्योजनात् पञ्च पञ्च ते ॥ इति ॥
अस्याप्रामाण्यं नाशङ्कनीयं त्रिवृत्करणश्रुतेः
पञ्चीकरणस्याप्युपलक्षणार्थत्वात् । पञ्चानां पञ्चा-
त्मकत्वे समानेऽपि तेषु च वैशिष्ट्यात्तु तद्वादस्त-
द्वाद इति न्यायेन आकाशादिव्यपदेशः सम्भवति ।
तदानीमाकाशे शब्दोऽभिव्यज्यते । वायौ शब्द-
स्पर्शौ । अग्नौ शब्दस्पर्शरूपाणि । अप्सु शब्द-
स्पर्शरूपरसाः । पृथिव्यां शब्दस्पर्शरूपरस-
गन्धाश्च । एतेभ्यः पञ्चीकृतेभ्यो भूतेभ्यः
भूर्भुवःस्वर्महर्जनस्तपःसत्यमित्येतन्नामकानामु-
पर्य्युपरि विद्यमानानां अतलवितलसुतलरसा-
तलतलातलमहातलपातालनामकानां अधोऽधो
विद्यमानानां लोकानां ब्रह्माण्डस्य तदन्तर्गत-
चतुर्विधस्थूलशरीराणां तदुचितानामन्नपानादीनाञ्चोत्पत्ति-
र्भवति ।" इति वेदान्तसारः । ३६-४२ ॥
पञ्चेन्द्रियं, क्ली, पञ्चानां ज्ञानेन्द्रियाणां समाहारः ।
यथा । "श्रोत्रत्वङ्नेत्ररसनघ्राणं पञ्चेन्द्रियाणि
च ।" इति शब्दचन्द्रिका । पञ्चकर्मेन्द्रियञ्च ॥
पञ्चेषुः, पुं, ( पञ्च इषवो यस्य । ) कामदेवः । इति
हलायुधः ॥
पञ्चोपविषं, क्ली, ( पञ्चसंख्यकं उपविषम् । ) उप-
विषपञ्चकम् । यथा, राजनिर्घण्टे ।
"स्नुह्यर्ककरवीराणि लाङ्गली विषमुष्टिका ।
एतान्युपविषाण्याहुः पञ्च माणिक्यभाषिणः ॥"
पञ्चोष्माणः, पुं, ( पञ्च उष्माणः । ) आहारपाचक-
शरीरस्थपञ्चाग्नयः । यथा, चारकौमुद्याम् ।
"भौमाप्याग्नेयवायव्याः पञ्चोष्माणः सनाभसाः ।
पञ्चाहारगुणान् स्वान् स्वान् पार्थिवादीन् पचन्त्यनु ।
पार्थिवाः पार्थिवानेव शेषाः शेषांश्च देहगान् ॥"
पञ्जरं, क्ली, (पञ्ज्यते रुध्यते उदरयन्त्रमनेन । पजि-
रोधे + अरन् ।) कायास्थिबन्धम् । शरीरास्थि-
पञ्जरम् । (यथा, पञ्चदशी । ६ । १७३ ।
"देहादिपञ्जरं यन्त्रं तदारोहोऽभिमानिता ।
विहितप्रतिषिद्धेषु प्रवृत्तिर्भ्रंसयं भवेत ॥"

पञ्ज्यते रुध्यते पक्ष्यादिरत्र ।) पक्ष्यादियन्त्रणगृहम् ।
इत्यमरभरतौ । पिँजरा इति भाषा । तत्-
पर्य्यायः । शालारम् २ । इति जटाधरः ॥ (यथा,
हे: रामायणे । २ । ६५ । ५ ।
"तेन शब्देन विहगाः प्रतिबुद्धाः स्वस्वनुः ।
शाखास्थाः पञ्जरस्थाश्च ये राजकुलगोचराः ॥")
पञ्जरः, पुं, ( पञ्ज्यते रुध्यते आत्मा यस्मिन् । पजि-
रोधे + अरन् । ) शरीरम् । इति त्रिकाण्ड-
शेषः ॥ ( यथा, हठयोगदीपिकायाम् । ४ । १८ ।
"ब्रह्मग्रन्थिस्ततोऽग्रे नाडीद्वाराणि पञ्जरे ।
सुषुम्णा शाम्भवी शक्तिः शेषास्त्वेव निरर्थकाः ॥"
"पञ्जरे पञ्जरबद्धिरास्थिभिर्भवति शरीरे ।" इति
तट्टीका ॥ ) देहास्थिसमूहः । तत्पर्य्यायः ।
कङ्कालः २ देहबन्धास्थि ३ । इति जटाधरः ॥
कलियुगम् । गवां नीराजनगर्भविधिः । इति सार-
स्वताभिधानम् ॥
पञ्जराखेटः, पुं, (पञ्जरेणेव यन्त्रेण आखेटो मृगया
यस्मात् ।) मत्स्यमारणोपाययन्त्रम् । पोलो
इति भाषा । तत्पर्य्यायः । प्रवः २ पलवः ३ ।
इति त्रिकाण्डशेषः ॥ [ राजनिर्घण्टः ॥
पञ्जलः, पुं, ( पञ्ज + अलच् । ) कोलकन्दः । इति
पञ्जिः, स्त्री, ( पञ्ज + इन् । ) तूलनालिका । इति
शब्दमाला । पाँइज इति भाषा । पञ्जिका च ॥
पञ्जिका, स्त्री, (पञ्जि + स्वार्थे कन् टाप् ।) तूलना-
लिका । इति रत्नावली ॥ पाँइज इति भाषा ॥
टीकाविशेषः । यथाह हेमचन्द्रः ।
"टीका निरन्तरव्याख्या पञ्जिका पदभञ्जिका ॥"
अग्रसन्धानी । इति त्रिकाण्डशेषः ॥ पञ्चाङ्गम् ।
पाँजि इति भाषा । तच्छ्रवणफलं यथा,—
"वारो हरति दुःस्वप्नं नक्षत्रं पापनाशनम् ।
तिथिर्भवति गङ्गाया योगः सागरसङ्गमः ।
करणं सर्व्वतीर्थानि श्रूयते दिनपञ्जिका ॥"
इति देवज्ञाः ॥
अपि च ज्योतिस्तत्त्वे पराशरवचनम् ।
"दुःस्वप्ननाशको वारो नक्षत्रं पापनाशनम् ।
तिथिरायुष्करी प्रोक्ता योगो बुद्धिविवर्द्धकः ॥
चन्द्रः करोति सौभाग्यमर्कः शुभदायकः ।
करणाल्लभते लक्ष्मीं यः शृणोति दिने दिने ॥"
निःशेषपदव्याख्यात्री । तिथिवारादिज्ञापिका ।
आयव्ययलिखनार्था च । इत्यमरटीकायां भरतः ॥
पञ्जिकारकः, पुं, (पञ्जिं करोतीति । कृ + ण्वुल् ।)
कायस्थजातिः । यथाह जटाधरः ।
"अथ कायस्थः करणः पञ्जिकारकः ॥"
(अस्य पञ्जिकरणकथा कायस्थशब्दे द्रष्टव्या ॥)
पञ्जिकाकारश्च ॥
पञ्जी, स्त्री, (पञ्जि + वा ङीप् ।) पञ्जिः । नालिका ।
इति शब्दमाला ॥ पञ्जिका । पाँजि इति
भाषा । यथोक्तं देवज्ञैः ।
"देवज्ञवक्त्रेण शृणोति पञ्जीं
मनुष्यं याति शशीव सख्यो ॥"
ग्रन्थविशेषः । यथाह ध्रुवानन्दमिश्रः ।
"प्रणम्य विनिम्बरपादपद्मौ
सरस्वतीं तां कुलदेवताञ्च ।
शिशुप्रबोधाय कुलस्य पञ्जी
विविच्यते श्रीध्रुवमिश्रकेण ॥"
पञ्जीकारः, पुं, ( पञ्जीं पञ्जिकां करोतीति । कृ +
ट । ) कायस्थः । यथा । "कायस्थे कूटकृत्-
पञ्जीकारौ ।" इति त्रिकाण्डशेषः ॥
पट, गतौ । इति कविकल्पद्रुमः ॥ (भ्वा-परं-
सकं-सेट् ।) पटति । इति दुर्गादासः ॥
पट, क लिपि । इति कविकल्पद्रुमः ॥ ( चुरा-परं-
अकं-सेट् । ) क, पाटयति । लिपि दीप्तौ ।
इति दुर्गादासः ॥
पट, त् क वेष्टने । इति कविकल्पद्रुमः ॥ ( अदन्त-
चुरा०-परं-सकं-सेट् । ) ग्रन्थने । इत्यन्ये । पट-
यति वासांसि सात्त्विकः । इति दुर्गादासः ॥
पटं, क्ली, (पटतीति । पट + पचाद्यच् । ) छदिः ।
चालम् । इति पटलशब्दटीकायां भरतः ॥
पटः, पुं, क्ली, (पटयत्यनेन । पट वेष्टने घञर्थे कः ।)
शोभनवस्त्रम् । तत्पर्य्यायः । सुचेलकः २ ।
इत्यमरः । ।२।६।११६॥ (यथा, पञ्चदशी ।६ ।२ ।
"यथा धौतो घट्टितश्च लाञ्छितो रञ्जितः पटः ।
चिदन्तर्यामिसूत्रात्मविराट् चात्मा तथेर्य्यते ॥")
चित्रपटः । इति मेदिनी ॥ तस्य लक्षणं यथा,—
"पटस्य लक्षणं वक्ष्ये यथा सिध्यन्ति साधकाः ।
ग्रन्थिकेशविहीने तु अजीर्णे समतन्तुके ॥
अस्फाटिते अच्छिन्ने तु स्वर्णेनैव समालिखेत् ।
योगिनी रूपिणी कार्य्या जयाद्यैः परिवारिता ॥
दृष्टेन च भवेद्वृद्धो व्याधिते व्याधितो भवेत् ।
कुरूपेण कुरूपस्तु रूपेण तु न पूर्य्यते ॥
लेखकस्य तु यद्रूपं चित्रे भवति तादृशम् ॥"
इति देवीपुराणम् ॥
पटः, पुं, पियालवृक्षः । इति मेदिनी ॥ पुरस्कृतः ।
इति विश्वः ॥
पटकः, पुं, (पटेन छदनेन कायति प्रकाशते इति ।
कै + कः ।) शिबिरम् । इति शब्दमाला ॥
पटकारः, पुं, ( पटं शोभनवस्त्रं चित्रं वा करोति
यः । पट + कृ + अण् ।) तन्तुवायः । चित्रकरः ॥
पटकुटी, स्त्री, (पटस्य पटनिर्मिता वा कुटी । )
वस्त्रवेश्म । ताँबु इति भाषा । तत्पर्य्यायः ।
केणिका २ गुणालयनिका ३ । इति हेमचन्द्रः ॥
पटच्चरं, क्ली, (भूतपूर्व्वं पटत् । भूतपूर्व्वे चरट् ।
यद्वा पटदित्यव्यक्तं शब्दं चरतीति । पटत् + चर
+ अच् ।) जीर्णवस्त्रम् । इत्यमरः ।२।६।११५॥
( पच्यते व्याविध्यते इति । पट + बाहुलकात्
च्चन् । पटदिव चरति यः । चर + अच् । )
चौरे पुं इत्यमरटीकायां रमानाथः ॥
पटमण्डपः, पुं, ( पटानां वस्त्राणां मण्डपः । ) पट-
कुटी । इति शब्दचन्द्रिका ॥
पटमयं, क्ली, (पट + मयट् ।) वस्त्रगृहम् । यथा,—
"पटवापः पटमयं दूष्यं वस्त्रगृहं स्मृतम् ॥"
इति त्रिकाण्डशेषः ॥
शाटी । यथा, शब्दरत्नावल्याम् ।
"पटवासः पटमयं शाटी शाटक इत्यपि ॥"

पटरक', पु, ( पटर+स्वार्थे कन् । ) गुन्द्रतृण । इति राजनिघण्टः ॥

पटल, क्ली, ( पट विस्तृत लाति । पट+ला+ "आतोनुपेति" ।३।२।३। क । यद्वा पटतीति । पट+' कृषादिभ्यश्चित ।" उणां ।१।१०८। इति कलच ।) छदिः । चाल इति भाषा । नेत्ररोग । इत्यमर ।३।३।२०० ॥ पिटक । परिच्छद । तिलक' । ( यथा कलाविलासे । १ । २५ । "अस्तमिते दिवसकरे तिमिरभरहरिदसहस्ता । सिन्दूरपटलपाटलकान्तिरिवाभौ बभौ सन्ध्या ॥") समूहे क्ली स्त्री । इति मेदिनी । ( यथा, भागवते । ३ । १४ । २६ ।

"यस्यानवद्याचरितं मनीषिणो
गृणन्त्यविद्यापटलं बिभित्सव ।
निरस्तसाम्यातिशयोऽपि यत् स्वयं
पिशाचचर्य्यामचरत गतिः सताम् ॥" )

दृष्टेरावरकम् । चक्षुर परदा इति भाषा । यथाह माधवकरः ।

'प्रथमे पटले दोषो यस्य दृष्ट्या व्यवस्थित' ।
अव्यक्तानि स रूपाणि कदाचिदथ पश्यति ॥"

दृष्टौ चत्वारि पटलानि । रसरक्ताश्रयं वाह्य द्वितीयं मांसमाश्रयं तृतीयं मेदःसमाश्रितं चतुर्थं कालकास्थिसमाश्रितम् । तथा च सुश्रुत ।

"तेजोजलाश्रितं बाह्यं तेष्वन्यत् पिशिताश्रितम् ।
मेदस्तृतीयं पटलमाश्रितं त्वस्थि चापरम् ।
पञ्चमांशसमं दृष्टेस्तेषां बाहुल्यमिष्यते ॥"

इति । अत्र तेजःशब्देन रक्तं जलशब्देन रसो व्याख्यात' । तेषु पटलेषु बाह्यादिभेदेनाधिष्ठान विशेषप्रभावात् दोषाणां लिङ्गविशेषमाह प्रथमे पटले इत्यादि । प्रथमे पटले सव्याभ्यन्तरे न तु बाह्ये । इति विजयरक्षित ।

पटल , पुं, क्ली, ( पाटयति दीप्यते य । पट+ कलच ।) यत्न' । तृण । इति शब्दरत्नावली । तृणस्थाने दृणोऽपि पाठ' ।

पटलप्रान्त, क्ली (पटलस्य छदिष प्रान्तम् ।) गृह चालिकान्तभागः । छानि इति भाषा । तत्पर्य्याय । वलीकम् २ नीध्रम् ३ । इत्यमर । २ । २ । १४ ॥

पटली, स्त्री, (पटल+ङीष् ।) छदिः । इति भरत हेमचन्द्रौ । चाल इति भाषा ।

पटवाप , पुं,(पट उप्यते प्रायुर्येण दीयते यत्र । पट +वप+घञ् ।) वस्त्रगृहम् । इति त्रिकाण्डशेषः ।

पटवास',पु (पटस्य पर्य्याप्तिर्मितो वा वास' गृहम् ।) वस्त्रगृहम् । शाटी । इति शब्दरत्नावली ।

पटवासक', पुं पटो वास्यतेऽनेनेति धनि पटवास तत स्वार्थे कन् । पटवासचूर्णम् । तत्पर्य्याय । पिष्टात १ । पिष्टेन कुसुमचूर्णान्तिका अततीति पिष्टात पचाद्यच् । इत्यमरभरतौ ।

पटह, क्ली पुं (पटेन हन्यते इति । पट+हन् +ड ।) पटत्शब्द जहाति पटह' इत्यपि तस्मात् तलोप' । इति भरत ॥ आनकमादाम । इत्यमर' । १ । ७ । ६ ॥

पटह , पुं (पट इत्यस्फुट शब्दं जहाति त्यज तीति । पट+हा+ड ।) पाटयति गमयति योधान् युद्धाय उत्साहवर्द्धकत्वात पट गतौ णाम्नोति अच् । इति भरत' ॥ युद्धे वाद्यमान ढक्का । तत्पर्य्याय । आडम्बर २ । इत्यमर' । २ । ८ । १०८ ॥ समारम्भ । हिंसनम । इति शब्दरत्नावली ॥

पटाक , पुं, (पटति गच्छतीति । पट+निपातनात् आक ।) पक्षिविशेष' । इत्युणादिकोष ॥

पटाका, स्त्री, (पटाक+टाप ।) पताका । इति शब्दरत्नावली ॥

पटालुका, स्त्री, (पट इव अलतीति । पट+अलु लकात उक ततष्टाप ।) जलौका । इति त्रिकाण्डशेष ॥

पटि , स्त्री, ( पट+इन् । ) पटभेद । वागुलि । कुम्भिकाद्यम । इति मेदिनी ॥

पटिका स्त्री,(पटि+स्वार्थे कन् तत टाप ।) पटि । वस्त्रम । यथा, लीलावती । [ षे

'विस्तारे त्रिकरा कराष्टकमिता दैर्घ्ये विचित्राश्च दृग्मे रतकटमट्टसूत्रपटिका अष्टौ लभन्ते शतम् । दैर्घ्ये सार्द्धकरत्रया परपटी हस्तार्द्धविस्तारिणी तादृक किं लभते द्रुत वद वणिक वाणिज्यकं वेत्सि चेत् ॥"

पटिष्ठ', त्रि, (अयमेषामतिशयेन पटु । पट+ "अतिशायने तमबिष्ठनौ ।"५ । ३ । ५५ । इति इष्ठन् ।) अतिशयपटु । इति व्याकरणम ॥

पटी, स्त्री, ( पट+इन् । वा ङीष । ) वस्त्रभेद । इति शब्दरत्नावली । यवनिका । इति त्रिकाण्डशेष ॥

पटीयान्, [स्] त्रि, (अयमेषामतिशयेन पटु' । पटु +' द्विवचनविभज्योपपदे तरबीयसुनौ । ५।३। ५७ । इति ईयसुन् । ) अतिशयपटु' । इति व्याकरणम ॥

पटीर, क्ली, (पटतीति । पट गतौ । ' कृ पृकटि पटिशौटिभ्य ईरन् ।" उणां । ४ । ३० । इति ईरन् ।) तितउ । कुङ्कुम । मूलकम । कदार । वारिद । वेणुसार' । वातिक । चन्दनम । इति शब्दरत्नावली ॥ खदिरम् । उदरम् । कन्दर्प । इरणीयम् । इति संक्षिप्तसारोणादिवृत्ति ॥

पटु, क्ली, (पाटयति । पट गतौ ण्यन्त ।"फलिपा टीति । ' उणा ।१।१८। इति उ पटादेशश्च ।) छत्रा । लवणम । इति मेदिनी ॥ पांशुलवणम । इति रत्नमाला ॥

पटु' पु ( पाटयतीति । पट+णिच+' फलि पाटीति ।' उणा । १ । १८ । इति उ' पटा देशश्च । ) पटोल' । इत्यमर' । २ । ४ । १५५ ॥ पटोलपत्रम । इति विश्व' ॥ कारवेल्लता । कारवेल । चोरक । इति राजनिर्घण्ट ॥

पटु' त्रि ( पाटयतीति । पट गतौ । ण्यन्त । 'फलिपाटीति ।"उणा।१ ।१८। इति उ' पटा देशश्च ) दक्ष । (यथा रघु । ९ । ६६ ।

"अनुभवन् नवदोलमृतूत्सवं
पटुरपि प्रियकण्ठजिघृक्षया ।
अनयदासनरज्जुपरिग्रहे
भुजलतां जडतामबलाजन ॥")

नीरोग । चतुर । इति मेदिनी ॥ ( मधुर । यथा, रघु । ९ । ७३ ।

"कुसुमपूरनव पटुरुचे
रुरवार विनदौऽभिमि सखा ॥")

तीक्ष्ण । स्फुट' । इति हेमचन्द्र ॥ निष्ठुर' । इति जटाधर' ॥ धूर्त' । इति त्रिकाण्डशेष ॥

पटुक , पु ( पटु+स्वार्थे कन् । ) पटोल । इति शब्दरत्नावली ॥

पटुकल्प', त्रि ईषदून' पटु' । (पटु+कल्पप ।) इति व्याकरणम ॥

पटुजातीय', त्रि, पटुप्रकार' । (पटु+जातीयर ।) इति व्याकरणम् ॥

पटुत्वक क्ली, (पटु लवणं तत्प्रचुरं त्वचम् । तत कन् ।) लवणतृणम् । इति राजनिर्घण्ट ॥

पटुपत्रिका, स्त्री, (पटु पत्रमस्या कप । टापि अत इत्वम ।) "गुन्द्रपुष्प' । इति राजनिर्घण्ट ॥

पटुपर्णिका, स्त्री, (पटु पर्णमस्या । कप टाप अत इत्वम ।) चोरिचोरिका । इति राजनिघण्ट ॥

पटुपर्णी, स्त्री, ( पटुपर्ण+"पाककर्णपर्णपुष्प फलेति ।" ४।१।६४। इति ङीष ।) स्वर्णक्षीरी । इत्यमर' । २ । ४ । १३८ ॥

पटुरूप',त्रि,(प्रशस्त पटु' । पटु+रूपप ।) अतिशयपटु' । इति व्याकरणम ॥

पटोटज, क्ली, (पटस्य छदिष उटे तृणादौ जायते यत् । ' सप्तम्यां जनेर्ड ।" ३।२।९७ । इति ड' ।) छत्राक' । इति शब्दरत्नावली ॥

पटोल, क्ली, ( पट गतौ+"कपिगडिगण्डीति ।" उणां ।१।६७। इति ओलच । ) वस्त्रभेद' । इति मेदिनी ॥ तत्तु गुर्ज्जरदेशीयविचित्रपट्टवस्त्रम ।

पटोल', पु, (पटति बहुगुणान् प्राप्नोतीति । पट गतौ+"कपिगडिगण्डीति ।" उणा १ । ६७ । इति ओलच । ) स्वनामप्रसिद्धलतिकाफलम । परवल इति हिन्दी भाषा ॥ ( यथा, पञ्चतन्त्रे १ । ३०८ ।

' साम्येन यत्र लिखितं तव दर्भ्भो बुधेन विनियोज्य । पित्त यदि शर्करया शाम्यति कोऽर्थं पटोलेन ॥")

तत्पर्य्याय । कुलकम् २ तिक्तक' ३ पटु' ४ । इत्यमर' । २।४।१५५ ॥ कर्कशच्छद ५ कुलज ६ वाजिमान् ७ लताफल' ८ राजफल' ९ वरतिक्त' १० अमृताफल' ११ । इति रत्नमाला ॥ कटुफल १२ कटुक' १३ कर्कशच्छद' १४ राजनामा १५ अमृतफल' १६ पाण्डु' १७ पाण्डुफल १८ बीजगर्भ १९ नागफल २० कुलाटि' २१ कासमर्द्दन' २२ पञ्जर २३ ज्योतिष्फल' २४ ज्योत्स्नी २५ कर्कटी २६ । अस्य गुणा' । कटुत्वम् । तिक्तत्वम् । उष्णत्वम् । सारकत्वम् । पित्तबलाग्निकफकर' निरूपणगन्धज्वरदाहार्ति नाशित्वञ्च । इति राजनिघण्ट ॥ अपि च ।

पाचनत्वम्। रूक्षत्वम्। उष्णत्वम्। लघुत्वम्। अग्निदीपनत्वम्। स्निग्धत्वम्। कासदोषत्रय-क्रिमिनाशित्वञ्च। तस्य मूलादिगुणाः।
"पटोलस्य भवेन्मूलं विरेचनकरं सुखात्।
नालं श्लेष्महरं पत्रं पित्तहारि फलं पुनः॥
दोषत्रयहरं प्रोक्तं तद्वत्तिक्ता पटोलिका॥"
इति भावप्रकाशः॥

अपि च राजवल्लभः।
"पटोलं कफपित्तास्रज्वरकुष्ठव्रणापहम्।
विसर्पनयनव्याधिचिदोषगरनाशिनी।
पटोलफलकार्व्वेति किञ्चिद्गुणान्तरायुभौ॥"

पटोलकः, पुं, (पटोल इव कायति प्रकाशते इति कै+कः।) शुक्तिः। इति शब्दमाला॥

पटोलिका, स्त्री, (पटोल+कन्+टाप्+अत इत्वञ्च।) फलविशेषः। झिङ्गा इति भाषा। धोरलि इति ख्याता। इति केचित्। इति भरतः॥ तत्पर्य्यायः। ज्योत्स्नी २ जाली ३। इत्यमरः। २।४।११८॥ ज्योत्स्ना ४। इति स्वामी॥

पटोली, स्त्री, (पटोल+जातित्वात् ङीष्।) ज्योत्स्नी। इति मेदिनी॥ (झिङ्गा इति भाषा॥ यथा, गारुडे १६८ अध्याये।
"पटोलीसुरसकाभ्याञ्च वासकेन च नाशयेत्॥")

पट्टं, क्ली, (पट् गतौ+क्तः। नेट्।) नगरम्। इति शब्दरत्नावली॥

पट्टः, पुं, (पट्+क्तः। नेट्।) पेषणपाषाणः। शिल् इति भाषा॥ (यथा, रघुः। १८।१७।
"तस्याभवत् स्नुरुदारशीलः
शिलः शिलापट्टविशालवक्षाः॥")
व्रणादीनां बन्धनम्। पटी इति भाषा॥ चतुष्पथः। चौमाता रास्ता इति भाषा॥ राजादिशासनान्तरम्। पाट्टा इति भाषा॥ (यथा, मार्कण्डेये। ३६।८।
"तदास्मात् पुत्त्र! निष्कृष्य मद्धस्तादङ्गुलीयकात्।
वाचयन्ते शासनं पट्टे सूक्ष्माचरनिवेशितम्॥")
पीठः। इति मेदिनी॥ पिडि इति भाषा॥ फलकः। इति त्रिकाण्डशेषः॥ ढाल इति भाषा॥ उष्णीषादिः। इति स्वामी॥ पाग् इत्यादि भाषा॥ उत्तरीयादिः। इति सुभूतिः॥ एक पाट्टा इति भाषा॥ (यथा, भट्टिः। १०।६०।
"गलितमिव भुवो विलोक्य रामं
धरणिधरस्तनशुक्लपट्टचीनम्॥")
कौषेयः। इति सङ्कटः॥ पाट रेशम् इति च भाषा। लोहितकौषेयसुष्णीषादि। इति भरतः॥ राङ्गा रेशमी पाग् इत्यादि भाषा॥ (नृपादीनां किरीटविशेषस्वरूपपट्टलक्षणं बृहत्संहितायां ४८ अध्याये उक्तम्। तद्यथा,—
"विस्तरशो निर्द्दिष्टं पट्टानां लक्षणं यदाचार्य्यैः।
तत् संक्षेपः क्रियते मयात्र सकलार्थसम्पन्नः॥
पट्टः शुभदो राज्ञां मध्येऽष्टावङ्गुलानि विस्तीर्णः।
सप्तनरेन्द्रमहिष्याः षड्युवराजस्य निर्द्दिष्टः॥
चतुरङ्गुलविस्तारः पट्टः सेनापतेर्भवति मध्ये।
द्वे च प्रसादपट्टः पञ्च ते कीर्त्तिताः पट्टाः॥
सर्व्वे द्विगुणायामा मध्यादर्द्धेन पार्श्वविस्तीर्णाः।
सर्व्वे च शुद्धकाञ्चनविनिर्म्मिताः श्रेयसो वृद्ध्यै॥
पञ्चशिखो भूमिपतेस्त्रिशिखो युवराजपार्थिवमहिष्योः।
एकशिखः सैन्यपतेः प्रसादपट्टो विना शिखया॥
क्रियमाणं यदि पत्रं सुखेन विस्तारमेति पट्टस्य।
वृद्धिजयौ भूमिपतेस्तथा प्रजानाञ्च सुखसम्पत्॥
जीवितराज्यविनाशं करोति मध्ये व्रणः समुत्पन्नः।
मध्ये स्फुटितस्त्याज्यो विघ्नकरः पार्श्वयोः स्फुटितः॥
अशुभनिमित्तोत्पत्तौ शास्त्रज्ञः शान्तिमादिशेद्राज्ञः।
शुभनिमित्तः पट्टो नृपराष्ट्रविवृद्धये भवति॥")

पट्टकः, पुं, पट्ट एव इत्यर्थे स्वार्थे कन्। पट्टः॥

पट्टजं, क्ली, (पट्टात् कौषेयात् जायते इति। पट्ट+जन्+ड।) वस्त्रभेदः। पट्टवस्त्रम्। इति जटाधरः॥ (यथा, महाभारते। २।५०।२३।
"और्णाञ्च राङ्कवाञ्चैव पट्टजं कीटजन्तथा।
कुटीकृतं तथैवात्र कमलाभं सहस्रशः॥")

पट्टदेवी, स्त्री, (पट्टा सिंहासनार्हा देवी।) महादेवी। इति राजनिर्घण्टः॥ पाटराणी इति भाषा॥

पट्टनं, क्ली, (पटन्ति गच्छन्ति वणिजो यत्र। पट गतौ+बाहुलकात् तनन्।) पत्तनम्। इति हिरूप-कोषः॥

पट्टनी, स्त्री, (पट्टन+गौरादित्वात् ङीष्।) पत्तनम्। इति हिरूपकोषः॥

पट्टरञ्जं, क्ली, (पट्टं वस्त्रं रज्यतेऽनेन। पट्ट+रञ्ज+घञ्।) पत्तरङ्गम्। इति राजनिर्घण्टः॥ बकम् इति भाषा॥

पट्टरञ्जनकं, क्ली, (पट्टानां वस्त्राणां रञ्जनम्। ततः कन्।) पत्तरङ्गम्। इति राजनिर्घण्टः॥

पट्टशाकं, क्ली पुं, (पट्टस्य पट्टवृक्षस्य शाकम्।) नालिताशाकम्। इति शब्दमाला भावप्रकाशश्च॥ अस्य गुणाः नाडीचशब्दे द्रष्टव्याः॥

पट्टार्हा, स्त्री, (पट्टे नृपासने अर्हा योग्या।) महादेवी। इति राजनिर्घण्टः॥ पाटराणी इति भाषा॥

पट्टिका, स्त्री, (पट्टिरिव कायति प्रकाशते इति। पट्टि+कै+कः। स्त्रियां टाप्।) पट्टिकाख्यलोध्रः। इत्यमरटीकायां वाचस्पतिः॥ (क्षुद्रः पट्टः। ह्रस्वार्थे कन्। स्त्रियां टाप् इत्वञ्च। वितस्तिविस्तारं वस्त्रम्। इति चिन्तामणिः॥ पट्टः। पाटा इति भाषा। यथा, नैषधे। १६।६१।
"सर्व्वं विसृज्य दैवात् स्तुति-
सुमसि गतां चोययन् यो घसंज्ञां
प्राक् संस्कारेण सम्प्रत्यपि धुवति
शिरः पट्टिकापाठनेन॥")

पट्टिकाख्यः, पुं, (पट्टिका आख्या यस्य।) रक्तलोध्रः। पाटियालोध इति भाषा। तत्पर्य्यायः। क्रमुकः २ पट्टी ३ लाक्षाप्रसादनः ४। इत्यमरः। २।४।४१॥

पट्टिकालोध्रः, पुं, (पट्टिका एव लोध्रः।) रक्तलोध्रः। पाटिया लोध इति भाषा। तत्पर्य्यायः। क्रमुकः २ वल्कलोध्रः ३ बृहद्दलः ४ जीर्णबुध्नः ५ बृहद्वल्कः ६ शीर्णपत्रः ७ अक्षिभेषजः ८ शावरः ९ श्वेतलोध्रः १० गालवः ११ बृहत्त्वचः १२ पट्टी १३ लाक्षाप्रसादः १४ वल्कः १५। इति राजनिर्घण्टः॥ स्थूलवल्कलः १६ जीर्णपत्रः १७ बृहत्पत्रः १८। इति भावप्रकाशः॥ लोध्रद्वयगुणाः। कषायत्वम्। शीतलत्वम्। वातकफासविषनाशित्वम्। चक्षुष्यत्वम्। तत्र वल्कलोध्रको विशिष्टः। इति राजनिर्घण्टः॥ ग्राहित्वम्। लघुत्वम्। पित्तरक्तपित्तातीसारशोथनाशित्वञ्च। इति भावप्रकाशः॥

पट्टिलः, पुं, (पट्टी विद्यतेऽस्य। पट्ट+अस्त्यर्थे इलच्।) पूतिकरजः। इति जटाधरः॥

पट्टिलोध्रः, पुं, (पट्टिरेव लोध्रः।) पट्टिकालोध्रः। इति शब्दरत्नावली॥

पट्टिलोध्रकः, पुं, (पट्टिलोध्र+स्वार्थे कन्।) पट्टिकालोध्रः। इति शब्दरत्नावली॥

पट्टिशः, पट्टिसः, पुं, (पट् गतौ+बाहुलकात् टिश(स)च।) अस्त्रविशेषः। यथा,—
"परशुः पट्टिसो नाम स एव च परश्वधः॥"
इत्यमरटीकायां भरतः॥
(यथा, भागवते। ८।१०।३६।
"भुशुण्डिभिश्चक्रगदार्ष्टिपट्टिशैः
शक्त्युल्मुकैः प्रासपरश्वधैरपि।
निस्त्रिंशभल्लैः परिघैः समुद्गरैः
सभिन्दिपालैश्च शिरांसि चिच्छिदुः॥")

पट्टी, स्त्री, (पट्टि+वा ङीष्।) पट्टिकालोध्रः। इति राजनिर्घण्टः॥ ललाटभूषा। इति विश्वः॥ तलसारकम्। अश्ववक्षःस्थलबन्धनरज्जुः। इति शब्दमाला॥

पट्टी, [न्] पुं, (पट्टोऽस्यास्तीति। इनिः।) रक्तलोध्रः। इति स्वामी॥ इत्यमरटीकायां भरतः॥

पट्टोलिका, स्त्री (पट्टं पट्टाख्यं उलति प्राप्नोतीति। उल गतौ+ण्वुल् टापि इत्वम्।) कुल्यकीला। पयस्यापत्रं इति केचित्। पाट्टा। इति च केचित्। इति त्रिकाण्डशेषः॥

पठ, वाचि। इति कविकल्पद्रुमः॥ (भ्वां-परं-सकं-सेट्।) पठति श्लोकं धीरः। इति दुर्गादासः॥

पठनं, क्ली, (पठ+भावे ल्युट्।) वाचनम्। पड़न् इति भाषा। यथा, मार्कण्डेये। ६२। १८।
"भूतप्रेतपिशाचानां पठनादेव नाशनम्॥"

पठमञ्जरी, स्त्री, श्रीरागस्य चतुर्थरागिणी। तस्या न्यासांशग्रहाः पञ्चमः। गानसमयस्तु एकप्रहरदिवसोत्तरम्। इति सङ्गीतदर्पणः॥ लक्षणं यथा, सङ्गीतदामोदरे।
"वियोगिनी कान्तवितीर्णपुष्पां
स्रजं वहन्ती वपुषातिमुग्धा।
आश्वास्यमाना प्रियया च सख्या
विधूसराङ्गी पठमञ्जरीयम्॥"

पठसमञ्जरी, स्त्री, रागिणीविशेषः। इति हलायुधः॥

न चाशोभन्त पण्यानि नापचन् गृहमेधिनः ॥”) व्यवहार्य्यम्। स्तोतव्यम्। इति पणधात्वर्थदर्शनात् ॥ (क्ली, पण्यते व्यवह्रियतेऽत्र। पण+यत्। विपणिः। यथा, मनुः। ५। १२९।
“नित्यं शुद्धः कारुहस्तः पण्यं यच्च प्रसारितम्॥”
“पण्यं पण्यवीथिकायाम्।” इति कुल्लूकभट्टः ॥)

पण्यवीथिका, स्त्री, (पण्यानां विक्रेयद्रव्याणां वीथिका गृहम्।) विपणिः। इत्यमरः।२।२।२॥ पण्यविक्रयशाला। इति हलायुधः॥ हट्टः। इत्यन्ये॥ विक्रयार्थप्रसारितनानाद्रव्याणां वणिग्वीथी। वाणियाविथी इति बाजार इति च ख्यातः। इति केचित्। हट्टमध्यम्। इति केचित्। हट्टमध्यस्थपण्यविक्रयवीथी। इति केचित्। इति तट्टीकायां भरतः॥
“आपणः पण्यवीथी च द्वयं वीथीति संज्ञितम्॥”
इति शाश्वतः॥

पण्यवीथी, स्त्री, (पण्यानां वीथी विक्रयगृहम्।) क्रयविक्रयस्थानम्। इति शब्दमाला॥

पण्यशाला, स्त्री, (पण्यानां विक्रेयद्रव्याणां शाला गृहम्।) हट्टः। इति हेमचन्द्रः॥ विक्रयगृहञ्च॥

पण्यस्त्री, स्त्री, (पण्या मूल्येन लभ्या या स्त्री। यद्वा पण्ये हट्टादिस्थले स्थिता स्त्री।) वेश्या। इति कोषान्तरम्॥

पण्या, स्त्री, (पण्यते स्तूयते रोगहन्तृत्वात्। पण ङ व्यवहारे स्तुतौ च+कर्म्मणि यत् ततष्टाप्।) पिण्या। इति द्विरूपकोषः॥

पण्याङ्गना, स्त्री, (पण्या पण्येन मूल्येन लभ्या या अङ्गना।) वेश्या। इति हेमचन्द्रः॥

पण्याजीवः, पुं, (पण्यैः क्रयविक्रयद्रव्यैराजीवति प्राणिति। आ+जीव+कः।) क्रयविक्रयिकः। वणिक्। इत्यमरः। २। ९। ७८॥

पण्याजीवकं, क्ली, (पण्यैः क्रयविक्रयद्रव्यैराजीवति तिष्ठतीति। पण्याजीवस्ततः स्वार्थे कन्। अभिधानात् क्लीवत्वम्। यद्वा, पण्याजीवैर्वणिग्भिः कायति शब्दायते इति। कै+कः।) हट्टः। इति त्रिकाण्डशेषः॥ पण्याजीवकमित्यपि पाठः॥

पण्यान्धा, स्त्री, (पण्यं अन्धयति स्वगुणेन या। अन्ध+अच्।) तृणविशेषः। तत्पर्य्यायः। कङ्गुनीपत्रा २ पण्यधा ३ पणधा ४। अस्या गुणाः। समवीर्य्यत्वम्। तिक्तत्वम्। चारत्वम्। सारकत्वम्। तत्कालशुक्रघातत्रयसंरोपणत्वञ्च।
“दीर्घा मध्या तथा ह्रस्वा पण्यान्धा त्रिविधा स्मृता। रसवीर्य्यविपाकेषु मध्यमा गुणदायिका॥”
इति राजनिर्घण्टः॥
पण्यन्धा इत्यपि पाठः॥

पत् [द्] पुं, (पद्यते गच्छत्यनेन। पद्यौ ङ गतौ+करणे क्विप्।) पादः। इत्यमरः। २।६।७१॥ (यथा, मनुः। ४। २०७।
“मत्तक्रुद्धातुराणाञ्च न भुञ्जीत कदाचन। केशकीटावपन्नञ्च पदा स्पृष्टञ्च कामतः॥”
केचित्तु पादशब्दस्य पद् इत्यादेशो भवतीति वदन्ति। अन्येस्तु न मन्यन्ते अतः “पदादयः पृथक्शब्दा इत्येके।” इति मुग्धबोधे वोपदेवेनोक्तम्॥)

पत, ल ज गतौ। ऐश्ये। इति कविकल्पद्रुमः॥ (भ्वां-परं-अकं-सेट्।) ल, अपतत्। ज, पातः पतः। गतिरिह पतनम्। पतति पत्रं वृन्तात्। इति दुर्गादासः॥

पत, त क गतौ। ऐश्ये। इति कविकल्पद्रुमः॥ (अदन्तचुरां-परं-अकं-सेट्।) ऐश्यमिश्वरीभावः। गतिरिह पतनम्। पतयति पत्रं वृन्तात्। इति दुर्गादासः॥

पत, य ङ ऐश्ये। इति कविकल्पद्रुमः॥ (दिवां-आत्मं-अकं-सेट्।) य ङ, पत्यते। ऐश्यमैश्वर्य्यमिश्वरीभावः। इति दुर्गादासः॥

पतं, त्रि, (पततीति। पत्+अच्।) पुष्पम्। इति जटाधरः॥ (पतनकर्त्तरि च, त्रि॥)

पतगः, पुं, (पत उत्पतितः सन् गच्छति। यद्वा पतेन पक्षेण गच्छतीति। गम्+डः।) पक्षी। इत्यमरः।२।५।३३॥ (यथा, मनुः।७।२३।
“देवदानवगन्धर्व्वा रक्षांसि पतगोरगाः।
तेऽपि भोगाय कल्पन्ते दण्डेनैव निपीड़िताः॥”)

पतङ्गं, क्ली, (पत् ल गत्यैश्वर्य्ययोः। बाहुलकात् अङ्गच्।) सूतम्। पारदम्। इति मेदिनी॥ चन्दनभेदः। इति शब्दचन्द्रिका॥

पतङ्गः, पुं, (पतति गच्छतीति। “पतेरङ्गच् पक्षिणि।” उणां। १। ११८। इति अङ्गच्।) पक्षी। (यथा, मार्कण्डेये। १०। ८६।
“ततः सर्व्वेषु निस्तीर्णः पापी तिर्य्यक्त्वमश्नुते। कृमिकीटपतङ्गेषु श्वापदे मशकादिषु॥”) सूर्य्यः। (यथा, माघे। १। १२।
“पतत्पतङ्गप्रतिमस्तपोनिधिः
पुरोऽस्य यावन्न भुवि व्यलीयत॥”
“कथं पतङ्गः सूर्य्यः। खगत्वसामान्योपचारात्। ‘पतङ्गः शलभे सूर्य्ये पतङ्गः पक्षिणि स्मृतः॥’ इति कोषान्तरम्॥” इत्युज्ज्वलदत्तः॥) शलभः। इत्यमरः। ३। ३। २०॥ शालिप्रभेदः। इति मेदिनी॥ जलमधूकवृक्षः। इति राजनिर्घण्टः॥

पतङ्गमः, पुं, (पत उत्पतितः सन् गच्छतीति। गम्+खच्। मुम् च।) पक्षी। इति व्याकरणम्॥ (शलभः। यथा, भागवते। ६। ८। २४।
“अलचितोऽग्नौ पतितः पतङ्गमो
यथा नृसिंहौजसि सोऽसुरस्तदा॥”)

पतङ्गिका, स्त्री, (पतङ्ग+स्वल्पार्थे संज्ञायां वा कन्। स्त्रियां टाप् अत इत्वञ्च।) मधुमक्षिकाविशेषः। तत्पर्य्यायः। पुत्तिका २। इत्यमरः। २। ५। २७॥ (यथा, महाभारते। १। १०८। १०।
“पतङ्गिकायां पुच्छेषु त्वयेषीका प्रवेशिता। कर्म्मणस्तस्य ते प्राप्तं फलमेतत्तपोधन!॥”)

पतञ्चिका, स्त्री, (पतमभिगतं शत्रुमित्यर्थः चिक्रयति पीड़यति स्वारोपितशरैरेति यावत्। पृषोदरात् साधुः।) धनुर्ज्या। इति शब्दरत्नावली॥

पतञ्जलिः, पुं, (पतः पतन् वा अञ्जलिः नमस्कार्य्यतया यस्मिन्। शकन्ध्वादित्वात् साधुः।) मुनिविशेषः। स तु पातञ्जलदर्शनपाणिनिटीकामहाभाष्यादिग्रन्थकर्त्ता। तत्पर्य्यायः। गोनर्दीयः २। इति हेमचन्द्रः॥ चूर्णिकृत् ३ भाष्यकारः ४। इति त्रिकाण्डशेषः॥ वररुचिः ५। इति शब्दरत्नावली॥ (केचित्तु मन्यन्ते योगसूत्रकारकपतञ्जलेर्भाष्यकृत् पतञ्जलिर्भिन्न एव। अनयोरभेदतान्तु निर्द्दिशन्ति माधवाद्याः॥ पातञ्जलयोगशास्त्रन्तु पादचतुष्टयात्मकं तत्र प्रथमे पादे “अथ योगानुशासनम्।” इति योगशास्त्रारम्भप्रतिज्ञां विधाय “योगश्चित्तवृत्तिनिरोधः।” इत्यादिना योगलक्षणसहितं सप्रपञ्चसमाधिनिर्द्देशं कृतवान् भगवान् पतञ्जलिः। द्वितीये तु “तपः स्वाध्यायेश्वरप्रणिधानानि क्रियायोगः।” इत्यादिना व्युत्थितचित्तस्य क्रियायोगं यमादीनि पञ्च बहिरङ्गाणि साधनानि च निरदिशत्। तृतीये “देशबन्धश्चित्तस्य धारणा।” इत्यादिना धारणाध्यानसमाधित्रयरूपमन्तरङ्गं संयमपदवाच्यं तत्र अवान्तरफलं विभूतिजातञ्च उपदिदेश। चतुर्थे पादे तु “जन्मौषधिमन्त्रतपःसमाधिजाः सिद्धयः।” इत्यादिना सिद्धिपञ्चकं सुखं प्रयोजनं कैवल्यं प्रधानादीनि पञ्चविंशतितत्त्वानि क्लेशकर्म्मविपाकाशयैरसंश्लिष्टं पुरुषं स्वेच्छया निर्म्माणकायमधिष्ठाय लौकिकादिसम्प्रदायप्रवर्त्तकं संसारदहने दह्यमानां जीवानां निस्तारकञ्च उपदिष्टवान्॥)

पतत्रं, क्ली, (पतन्तं त्रायते इति। पतत्+त्रै+कः।) पक्षः। पाखा इति भाषा। इत्यमरः। २। ५। ३६। (यथा, भागवते। ८। ११। ३४।
“येन मे पूर्व्वमद्रीणां पक्षच्छेदः प्रजात्यये। कृतो निविशतां भारैः पतत्रैः पततां भुवि॥”
(त्रं) पत ल गतौ। “अमिनक्षियजिवधिपतिभ्योऽत्रन्।” उणां। ३। १०५। इति अत्रन्। वाहनम्। इत्युज्ज्वलदत्तः॥)

पतत्री, [न्] पुं, (पतत्रं पक्षो विद्यतेऽस्य। पतत्र+इनिः।) पक्षी। इत्यमरः। २। ५। ३३॥ (यथा, कुमारे। ५। ४।
“पदं सहेत भ्रमरस्य पेलवं
शिरीषपुष्पं न पुनः पतत्रिणः॥”)

पतत्रिः, पुं, (पतति उत्पततीति। “पतेरत्रिन्।” उणां। ४। ६९। इति अत्रिन्।) पक्षी। इत्यमरः। २। ५। ३३॥

पतद्ग्रहः, पुं, (पतत् मुखादिभ्यः स्खलत् गण्डूषादि गृह्णातीति। पतत्+ग्रह+अप्।) प्रतिग्राहः। इत्यमरः। २। ९। १३९॥ पिकदानी इति भाषा॥

पतद्भीरुः, पुं, (पतन् पक्षी भीरुर्यस्मात्।) श्येनः। इति शब्दरत्नावली॥

पतन् [त्] पुं, (पततीति। पत्+शतृ।) पक्षी। (यथा, महाभारते। २। ३८। २८।
“नक्षत्राणां मुखं चन्द्र आदित्यस्तेजसां मुखम्

पर्व्वतानां मुखं मेरुर्गरुडः पततां मुखम् ॥ )
पतनशीले त्रि । इति मेदिनी ॥

**पतन** क्ली (पत + भावे ल्युट् ।) पातः । पडन् इति भाषा । यथा — [द सहन् ॥

अयुने पतने न वेदना पतनं प्रानमतीव दुःसहम् ॥

'द्विजातिकर्म्मभ्यो हानिः पतनं परत्र चासिद्धिस्तमेके नरकम् । इति हारीतवचनम् ॥ पापम् । यथा प्रायश्चित्तविवेके ।

विहितस्याननुष्ठानान्निन्दितस्य च सेवनात् ।
अनिग्रहाच्चेन्द्रियाणां नरः पतनमृच्छति ॥

**पतम** पुं (पतति कर्म्मक्षये यस्मात् । पत + अम । क्षीणपुण्यानां चन्द्रलोकात् पतनं शास्त्रे प्रसिद्धम् ।) चन्द्रः । (पततीति । पत + अम ।) पक्षी । पतङ्गः । इति संक्षिप्तसारोणादिवृत्तिः ॥

**पतयालु** त्रि (पत + स्पृहिगृहिपतिदयीति । ३।२।१५८ । इति आलुच् ।) पतनशीलः । तत्पर्य्यायः । पातुकः २ । इत्यमरः ।३।१।२७ ॥

**पतस** पुं (पततीति । अत्यविचमीति । उणां ३।११७ । इति असच् ।) पक्षी । इत्युणादिवृत्तिः ॥ चन्द्रः । पतङ्गः इति संक्षिप्तसारोणादिवृत्तिः ॥

**पताका,** स्त्री पत्यते ज्ञायते कस्यचित् भेदोऽनया । (पत + बलाकादयश्च । उणां ४।१४ । इति आक प्रत्ययेन साधुः ।) ध्वजः । निशान् इति भाषा । (यथा महाभारते ।६।१७।१५ ।

रथैश्चैव पताकाभिध्वजवारणवाजिभिः ।
तान्यनीकान्यशोभन्त रणनृपमहारातिभिः ॥ )

तत्पर्य्यायः । वैजयन्ती २ केतनम् ३ ध्वजम् ४ इत्यमरः ।२।८।९६ ॥ पटाका ५ जयन्ती ६ वैजयन्तिका ७ कम्ली ८ कन्दुली ९ कतुः १० कदलिका ११ व्योममण्डलम् १२ । इति शब्दरत्नावली ॥ चिह्नम् १३ । इति जटाधरः ॥ केतनं ध्वज एतद्द्वय पताकादण्डे । इति भरतः ॥ सौभाग्यम् । नाटकाङ्गम् । इति मेदिनी ॥ (यथा साहित्यदर्पणे । ६ । २७ ।

पताकास्थानकं योज्यं सुविचार्य्येह वस्तुनि ॥
इह नाट्ये ॥ तल्लक्षणं यथा तत्रैव । ६ । २८ ।
'यत्रार्थे चिन्तितेऽन्यस्मिंस्तल्लिङ्गोऽन्यः प्रयुज्यते ।
आगन्तुकेन भावेन पताकास्थानकन्तु तत् ॥
तद्भेदानाह तत्रैव । ६ । २९—३२ ।
'सहसैवार्थसम्पत्तिर्गुणवत्युपकारतः ।
पताकास्थानकमिदं प्रथमं परिकीर्त्तितम् ॥
यथा रत्नावल्यां वासवदत्तेयमिति राजा यदा तत्कण्ठपाशं मोचयति तदा तदुक्त्या सागरिकेयमिति प्रत्यभिज्ञाय कथं प्रिया मे सागरिका अलमलमतिमात्रम् इत्यादि फलरूपार्थसम्पत्तिः पूर्व्वापेक्षया उपचारातिशयात् गुणवती उत्कृष्टा । १ ।
वचः सातिशयश्लिष्टं नानाबन्धसमाश्रयम् ।
पताकास्थानकमिदं द्वितीयं परिकीर्त्तितम् ॥
यथा, वेणीसंहारे सूत्रधारः ।

रक्तप्रसाधितभुवः क्षतविग्रहाश्च
स्वस्था भवन्तु कुरुराजसुताः सभृत्याः ।

अत्र रक्तादीनां रुधिरशरीरार्थहेतुकश्लेषवशेन बीजार्थप्रतिपादनात् नेतृमङ्गलप्रतिपत्तौ सत्यां द्वितीयं पताकास्थानम् । २ ।
अर्थोपक्षेपकं यत्तु लीनं सविनयं भवेत् ।
श्लिष्टप्रत्युत्तरोपेतं तृतीयमिदमुच्यते ॥
लीनं अव्यक्तार्थं श्लिष्टेन सम्बन्धयोग्येनाभिप्रायान्तरप्रयुक्तेन प्रत्युत्तरेणोपेतं सविनयं विशेषनिश्चयप्राप्त्या सहितं सम्पद्यते यत् तत् तृतीयं पताकास्थानम् । यथा वेणीसंहारे २ अङ्के । कञ्चुकी । देव भग्नं भग्नम् । राजा । केन । कञ्चुकी । भीमेन । राजा । कस्य । कञ्चुकी । भवतः । राजा । आः किं प्रलपसि? कञ्चुकी । (सभयम्) देव । ननु ब्रवीमि । भग्नं भीमेन भवतः । राजा । धिक् वृद्धापसद । कोऽयमद्य ते व्यामोहः । कञ्चुकी । देव । न व्यामोहः सत्यमेव ।
भग्नं भीमेन भवतो मरुता रथकेतनम् ।
पतितं किङ्किणीक्वाणबद्धाक्रन्दमिवावनौ ॥
अत्र दुर्य्योधनोरुभङ्गरूपप्रस्तुतसङ्क्रान्तमर्थोपक्षेपणम् । ३ ।
द्व्यर्थो वचनविन्यासः सुश्लिष्टः काव्ययोजितः ।
प्रधानार्थान्तराक्षेपी पताकास्थानकं परम् ॥ ४ ।)
अङ्कः । कतुः । इति हेमचन्द्रः ॥ अस्य विवरणं ध्वजशब्दे द्रष्टव्यम् ॥

**पताकी** [न्] त्रि (पताका विद्यतेऽस्य । पताका + इनिः ।) वैजयन्तिकः । पताकाधारी । इत्यमरः । २ । ८ । ७१ ॥ (यथा महाभारते । ६ । १७ । २० ।

स तु गोवासनः शैब्यः सहितः सर्व्वराजभिः ।
ययौ मातङ्गराजेन राजार्हेण पताकिना ॥ )

रिष्टारिष्टबोधकचक्रविशेषः । तस्य लिखनक्रमो यथा —

तिर्य्यगूर्द्ध्वगता रेखास्तिस्रो देयाः पताकया ।
युताः काम्या वेधविदा सर्व्वसङ्गतरेखया ॥
दक्षश्रोर्द्ध्वरेखातो वामं मेषादिराशयः ।
पश्चात्शुभ्रविशाश्च शक्रदग्नन्द्राग्निसागराः ।
कर्कटान्मीनपर्य्यन्तमङ्का देया यथाक्रमम् ॥




बालस्य जन्मकालीनग्रहलग्नभसादिषु ।
विन्यस्य चिन्तयेत् प्राज्ञः शुभाशुभं यथाविधानात् ॥
तत्र शुभाशुभज्ञानं यथा —

शुभग्रहयोगवेधैर्लग्नाङ्कराणस्य शोभनम् ।
पापग्रहयोगवेधैरायुर्ज्ञानादिरिष्टकालवित् ।
वर्षोऽधिके दिनं मध्यं मासी होने च हायनम् ॥"

वेधज्ञानं यथा —

कर्कमीनधनुर्भ्याश्च हरेः कीटघटेन च ।
स्त्रियास्तौलिनृगाभ्याश्च घटे मीनेन कन्यया ।
धनुषो नृगकर्किभ्यां मकरे धनुषा स्त्रिया ।
मीने कर्किंतुलाभ्याश्च मीनस्यौधनुषाल्पधी ।
तुलाकर्किंनृगेऽन्द्रे कीटकुम्भवृषेषु च ।
सिंहवदेव एर्षु वामान्तिशशमुखे ।
राहुकेतुकसौरारैः पापैर्विद्धो युताऽशुभ ।
तद्भ्येयुंतविद्धस्तु लग्नराशिः शुभप्रदः ॥"

रिष्टकालो यथा —

'एकोनविंशतिः कर्के सिंहे सप्तदशैव तु ।
घटचिंशद्दलायाच्च षड्विंशतिस्तुलाधरे ।
वृश्चिके षिंहवत्ज्ञेयमष्टवर्त्रिंशद्धनुरासने ।
षड्विंशत् मकरे ज्ञेय कुम्भे सप्तदश स्मृताः ।
नव युग्मे तथा मीने मेषे षड्दशभिक्रया ।
वृषभे च तथा सिंहे युग्मे ऽङ्कदरलोपने ।
त्रितयाङ्कादिय सङ्ख्या दिनमासाब्दनिर्णये ।
एकाङ्काद्विदशाङ्कादा कश्चिच्छेष सम्भवः ॥
अथ यामाङ्काधिपज्ञानम् ।

वारेशान्दयामेषु राचाङ्को पञ्चषट् क्रमात् ।
अधिपाः स्युर्यदाजत्र यथाकाङ्क्षे भवन्ति ते ।
रवौ षेन्दुभृगुल्लानशनिज्ञरवयो निशि ।
रविशुक्रज्ञरात्रीशशनीज्यकुजभास्कराः ।
न्नि जन्मा परेष्वेन तत्राधस्यात्स्तुर्यंशः ।
अथ दशाधिपज्ञानम् ।
'पापग्रहे भवेद्दिष्टिः शुभग्रहे शुभं भवेत् ।
शुभग्रहस्य दशे तु कम्मारम्भाच्छुभं भवेत् ।
यस्यादियामसस्यैव नागदशा सन्दा सत ।
षट् षट् परीत्य दशाश्च त्रयो रात्रौ मता यथा ।
आदित्ये भृगुजो बुधोऽपि च शशी सौमे शनीज्यौ कुजौ
भौमेऽर्के सितसौम्यजौ च शशिनि सोमः शनि र्ज्योकमतिः ।
जीवाङ्गारखौ भृगुश्च बुधतं सौम्येन्दुमाकरजा काले जीवमहीजसिंह किरणा रात्रौ च दशाधिपाः ॥
यामाद्याधिपसत्यातो द्वितीयस्तु तदङ्कंक ।
तदङ्कात्तु तृतीयः स्यात्तदङ्कात्तु तुरीयकः ॥
अङ्काभावे तु राहुः स्यात् तदङ्को वसुसङ्ख्यकः ।
भमाङ्कस्य परित्यागाद्दिवादशाधिपा यथा ।

रविदगुजबुधश्चौचन्द्रकूरासुरज्ञा
कुजरविदनुधज्ञाचेन्दुसुरासुराश्च ।
गुरुशशिरविन्द्वा शुक्रभौमाकदैत्याः
शनिकुजरविन्द्वा दैत्यपाश्चाङ्कयामे ।

शुभाशुभग्रहज्ञानं यथा —

शेषावकेस्य दशा सततशुभकरावादशःमा तयेन्दोः
शेषो दशा कुजस्याप्यथ गुरुबुधयोरादमर्द्धं प्रशस्तम् ।
आदिदेर्द्धे कायेशे भृगुकुजकृपयोः सर्व्वकार्य्येषु शस्तो
दशाष्टवार एषे कश्चिदपि समये नैव शौरे प्रशस्ता ॥'

यम उवाच ।
न तस्या नियमो विप्र ! तपो नैव च सुव्रत ! ।
उपवासो न दानञ्च न दमो वा महामते ! ॥
यादृशी तु भवेद्विप्र ! शृणु तत्त्वं समासतः ।
प्रसुप्ते या प्रस्वपिति विबुद्धे जागरति स्वयम् ॥
भुङ्क्ते तु भोजिते विप्र ! सा खलु जयति ध्रुवम् ।
मौने मौना भवेद्या तु स्थिते तिष्ठति या स्वयम् ।
सा खलु जयते विप्र ! नान्यत् पश्यामि किञ्चन ॥
एकाग्रचित्तैकमना भर्त्तुर्वचनकारिणी ।
तस्या बिभीमहे सर्व्वे ये तथान्ये तपोधन ! ॥
देवानामपि सा साध्वी पूज्या परमशोभना ।
भर्त्रा वाभिहिता वापि प्रणयाख्यायिनी भवेत् ॥
वर्त्तमानापि विप्रेन्द्र ! प्रत्याख्यानापि सा यदा ।
तदैव तं संश्रयति पतिं नान्यं कदाचन ॥
भर्त्तुर्मुखं प्रधान ! या पश्यति वराङ्गना ।
एवं याति भवेन्नित्यं भर्त्तुः प्रियहिते रता ॥
अनुविष्टेन भावेन भर्त्तारमनुगच्छति ।
सा तु खलुमुखद्वारं न गच्छेद्ब्रह्मसम्भव ! ॥
एष माता पिता बन्धुरेष मे दैवतं परम् ।
एवं शुश्रूषते या तु सा मां विजयते सदा ।
पतिव्रता तु या साध्वी तस्याश्चाहं कृताञ्जलिः ॥
भर्त्तारमनुध्यायन्ती भर्त्तारमनुगच्छति ।
भर्त्तारमनुशोचन्ती खलुद्वारं न पश्यति ॥
गीतवादित्रनृत्यानि प्रेक्षणीयान्यनेकशः ।
न शृणोति न पश्येत खलुद्वारं न पश्यति ॥
स्नायन्ती तिष्ठती वापि कुर्व्वन्ती वा प्रसाधनम् ।
नान्यञ्च मनसा ध्यायेत् कदाचिदपि सुव्रता ॥
देवता अर्च्चयन्ती वा भोजयन्त्यथ वा द्विजान् ।
पतिं न त्यजते चित्तात् खलुद्वारं न पश्यति ॥
भानौ चानुदिते या तु उत्थाय च तपोधन ! ।
गृहं मार्ज्जयते नित्यं खलुद्वारं न पश्यति ॥
चक्षुर्देहः स्वभावश्च यस्या नित्यं सुसंहतम् ।
शौचाचारसमायुक्ता सापि खलुं न पश्यति ॥
भर्त्तुर्मुखं प्रपश्यन्ती भर्त्तुश्चित्तानुसारिणी ।
वर्त्तते च हिते भर्त्तुर्मृत्युद्वारं न पश्यति ॥
एवं कीर्त्तिमतां लोके दृश्यन्ते दिवि देवताः ।
मानुषाणाञ्च भार्य्या वै तत्र दृष्टिं तु दृश्यते ॥
कथितैवं पुरा विप्र ! आदित्येन पतिव्रता ।
मया तस्मात्तु विप्रर्षे ! यथावृत्तं यथाश्रुतम् ॥
गुह्यमेतत्ततो दृष्ट्वा पूजयामि पतिव्रताम् ॥”

इति वाराहे पतिव्रताचरित्रम् ॥ ७ ॥

पतिव्रताधर्म्मो यथा,—
“पतिव्रतानां यद्धर्म्मं तन्निबोध व्रजेश्वर ! ।
नित्यं भर्त्तुर्व्वृतसुवाया तत्पादोदकमीप्सितम् ।
भक्तिभावेन सततं भोक्तव्यं तदनुज्ञया ॥
व्रतं तपस्यां देवार्च्चां परित्यज्य प्रयत्नतः ।
कुर्य्याच्चरणसेवाञ्च स्तवनं परितोषणम् ॥
तदाज्ञारहितं कर्म्म न कुर्य्याद्दैवतः सती ।
नारायणात् परं कान्तं ध्यायते सततं सती ॥
परपुंसां पुरश्चैव सुवेशं पुरुषं परम् ।
यात्रामहोत्सवं नित्यं नर्त्तकं गायनं व्रज ।
नरक्रीडाञ्च सततं नहि पश्यति सुव्रता ॥
यद्भक्ष्यं स्वामिनां नित्यं तद्देवमपि योषिताम् ।
नहि त्यजेत्तु तत्सङ्गं क्षणमेव च सुव्रता ॥
उत्तरे नोत्तरं दद्यात् स्वामिनश्च पतिव्रता ।
न कोपं कुरुते शुद्धा ताडनाच्चापि कोपतः ॥
क्षुधितं भोजयेत् कान्तं दद्यात् पानञ्च तोषणे ।
न बोधयेत्तं निद्रालुं प्रेरयत्येव कर्म्मसु ॥
पुत्त्रानाञ्च शतगुणं स्नेहं कुर्य्यात् पतिं सती ।
पतिर्बन्धुर्गतिर्भर्त्ता दैवतं कुलयोषितः ॥
शुभं दृष्ट्या सुधातुल्यं कान्तं पश्यति सुन्दरी ।
सस्मितं वदनं कृत्वा भक्तिभावेन यत्नतः ॥
पुरुषाणां सहस्रञ्च सती स्त्री च समुद्धरेत् ।
पतिः पतिव्रतानाञ्च मुच्यते सर्व्वपातकात् ॥
नास्ति तेषां कर्म्मभोगः सतीनां व्रततेजसा ।
तया सार्द्धञ्च निष्कर्म्मी मोदते हरिमन्दिरे ॥
पृथिव्यां यानि तीर्थानि सतीपादेषु तान्यपि ।
तेजश्च सर्व्वदेवानां मुनीनाञ्च सतीषु च ॥
तपस्विनां तपः सर्व्वं व्रतिनां यत् फलं व्रज ! ।
दाने फलं यद्दातॄणां तत् सर्व्वं तासु सन्ततम् ॥
स्वयं नारायणः शम्भुर्विधाता जगतामपि ।
सुराः सर्व्वे समुनयो भीतास्ताभ्यश्च सन्ततम् ॥
सतीनां पादरजसा सद्यः पूता वसुन्धरा ।
पतिव्रतां नमस्कृत्य मुच्यते पातकान्नरः ॥
त्रैलोक्यं भस्मसात् कर्त्तुं क्षणेनैव पतिव्रता ।
स्वतेजसा समर्था सा महापुण्यवती सदा ॥
सतीनाञ्च पतिः साध्वीपुत्त्रो निःशङ्क एव च ।
नहि तस्य भयं किञ्चिद्दैवेभ्यश्च यमादपि ॥
शतजन्मपुण्यवतां गृहे जाता पतिव्रता ।
पतिव्रताप्रसूः पूता जीवन्मुक्तः पिता तथा ॥
सती स्त्री प्रातरुत्थाय त्यक्त्वा च रात्रिवाससम् ।
भर्त्तारञ्च नमस्कृत्य करोति स्तवनं मुदा ॥
गृहकार्य्यं ततः कृत्वा स्नात्वा धौते च वाससी ।
गृहीत्वा शुक्लपुष्पञ्च भक्तितः पूजयेत् पतिम् ॥
स्नापयित्वा सुपूतेन जलेन निर्म्मलेन च ।
तस्मै दत्त्वा धौतवस्त्रं तत्पादौ क्षालयेन्मुदा ॥
आसने वासयित्वा च दत्त्वा भाले च चन्दनम् ।
सर्व्वाङ्गलेपनं कृत्वा दत्त्वा माल्यं गलेऽपि च ॥
सामवेदोक्तमन्त्रेण भोगद्रव्यैः सुधोपमैः ।
संपूज्य भक्तितः कान्तं स्तुत्वा च प्रणमेन्मुदा ॥
‘ओँ नमः कान्ताय शान्ताय सर्व्वदेवाश्रयाय स्वाहा ॥’
इत्यनेनैव मन्त्रेण दत्त्वा पुष्पञ्च चन्दनम् ।
पाद्यार्घ्यधूपदीपांश्च वस्त्रं नैवेद्यमुत्तमम् ॥
जलं सुवासितं शुद्धं ताम्बूलञ्च सुसंस्कृतम् ।
दत्त्वा स्तोत्रञ्च प्रपठेत् यत् कृतं माध्यमेव च ॥
ओँ नमः कान्ताय शान्ते च शिवचन्द्रस्वरूपिणे ।
नमः शान्ताय दान्ताय सर्व्वदेवाश्रयाय च ॥
नमो ब्रह्मस्वरूपाय सतीप्राणपराय च ।
नमस्याय च पूज्याय हृदाधाराय ते नमः ॥
पञ्चप्राणाधिदेवाय चक्षुषस्तारकाय च ।
ज्ञानाधाराय पत्नीनां परमानन्दरूपिणे ॥
पतिर्ब्रह्मा पतिर्विष्णुः पतिरेव महेश्वरः ।
पतिश्च निर्गुणाधारो ब्रह्मरूप ! नमोऽस्तु ते ॥
क्षमस्व भगवन् ! दोषं ज्ञानाज्ञानकृतञ्च यत् ।
पत्नीबन्धो ! दयासिन्धो ! दासीदोषं क्षमस्व च ॥
इदं स्तोत्रं महापुण्यं सृष्ट्यादौ पद्मया कृतम् ।
सरस्वत्या च धरया गङ्गया च पुरा व्रज ॥
सावित्र्या च कृतं पूर्व्वं ब्रह्मणे चापि नित्यशः ।
पार्व्वत्या च कृतं भक्त्या कैलासे शङ्कराय च ॥
मुनीनाञ्च सुराणाञ्च पत्नीभिश्च कृतं पुरा ।
पतिव्रतानां सर्व्वासां स्तोत्रमेतत् शुभावहम् ॥
इदं स्तोत्रं महापुण्यं या शृणोति पतिव्रता ।
नरोऽन्यो वापि नारी वा लभते सर्व्ववाञ्छितम् ॥
अपुत्त्रो लभते पुत्त्रं निर्धनो लभते धनम् ।
रोगी च मुच्यते रोगात् बद्धो मुच्येत बन्धनात् ॥
पतिव्रता च स्तुत्वा च तीर्थस्नानफलं लभेत् ।
फलञ्च सर्व्वतपसां व्रतानाञ्च व्रजेश्वर ! ॥
इदं स्तुत्वा नमस्कृत्य भुङ्क्ते सा तदनुज्ञया ।
उक्तः पतिव्रताधर्म्मो गृहिणां शृणुतां व्रज ॥”
इति ब्रह्मवैवर्त्ते श्रीकृष्णजन्मखण्डे ८३ अध्यायः ॥ * ॥

पतिव्रतानामानि यथा,—
सूर्य्यस्य सुवर्च्चला १ शक्रस्य शची २ वशिष्ठस्य अरुन्धती ३ चन्द्रस्य रोहिणी ४ अगस्त्यस्य लोपामुद्रा ५ च्यवनस्य सुकन्या ६ सत्यवतः सावित्री ७ कपिलस्य श्रीमती ८ सौदासस्य मदयन्ती ९ सगरस्य केशिनी १० नलस्य दमयन्ती ११ रामस्य सीता १२ शिवस्य सती १३ नारायणस्य लक्ष्मीः १४ ब्रह्मणः सावित्री १५ रावणस्य मन्दोदरी १६ । इति पुराणान्तरम् ॥ (गायत्त्रीस्वरूपा भगवती । यथा, देवीभागवते । १२ । ६ । ८६ ।
“पतिव्रता पवित्राङ्गी पद्महासपरायणा ।
प्रज्ञावती सुता पौत्त्री पुत्त्रपूज्या पयस्विनी ॥”)

पतेरः, पुं स्त्री, (पतति गच्छतीति । पत्लृ गतौ + “पतिकठिकुठिगडिगुडिदंशिभ्य एरक् ।” उणा० १ । ५९ । इति कर्त्तरि एरक् ।) पक्षी । गन्तरि त्रि । इत्युणादिकोषः ॥

पतेरः, पुं, ( पतन्त्यस्मिन्निति । “पति काटीति ।” उणा० १ । ५९ । इति अधिकरणे एरक् ।) आनकः । गर्त्तः । इति संक्षिप्तसारोणादिवृत्तिः ॥

पतङ्गं, क्ली, (पतनमिव अङ्गं यस्य । पृषोदरात् साधु ।) रक्तचन्दनम् । इति शब्दरत्नावली ॥ वृक्षविशेषः । बकम् इति भाषा । तत्पर्य्यायः । पत्राङ्गम् २ रक्तकाष्ठम् ३ सुरङ्गदम् ४ पत्राख्यम् ५ पट्टरङ्गम् ६ भार्य्यावृक्षः ७ रक्तकः ८ लोहितम् ९ रङ्गकाष्ठम् १० रागकाष्ठम् ११ कुचन्दनम् १२ पट्टरञ्जनकम् १३ सुरङ्गम् १४ अस्य गुणाः । कटुत्वम् । रूक्षत्वम् । अम्लत्वम् । शीतलत्वम् । गौल्यत्वम् । वातपित्तज्वरविस्फोटोन्मादभूतनाशित्वञ्च । इति राजनिर्घण्टः ॥ अपि च भावप्रकाशे ।
“पतङ्गन्तु रक्तसारं सुरङ्गं रञ्जनं तथा ।
पटरञ्जनमाख्यातं पत्तूरञ्च कुचन्दनम् ॥
पतङ्गं मधुरं शीतं पित्तश्लेष्मव्रणास्रनुत् ।
हरिचन्दनवज्ज्ञेयं विशेषाद्दाहनाशनम् ॥”

सर्व्वेषामेव पत्रेषु लिखनञ्चैवमीरितम् ॥
सर्व्वेषामेव पत्राणां विधिं ज्ञात्वा लिखेत्तु यः ।
स्वदेशे कीर्त्तिमाप्नोति तथा देशान्तरेष्वपि ॥
एवं शास्त्रक्रमं ज्ञात्वा यो लिखेद्राजपत्रकम् ।
स राजमन्त्रिभिः सार्द्धं यशः प्राप्नोत्यनुत्तमम् ॥
शास्त्रसन्दर्भमज्ञात्वा यो लिखेद्राजपत्रकम् ।
स राजमन्त्रिभिः सार्द्धं दुर्यशो महदाप्नुयात् ॥” * ॥

अथ पत्रनयनक्रमः ।

“राजपत्रं नयेन्मूर्द्ध्नि ललाटे चात्रमन्त्रिणाम् ।
गुरुपत्रं नयेन्मूर्द्ध्नि आज्ञयानान्तथैव च ॥
यतिसन्न्यासिनाञ्चैव स्वामिनश्च तथैव च ।
सादरेणैव यत्नेन तथा मूर्द्धनि धारयेत् ॥
भार्य्यापुत्रस्य मित्रस्य हृदये धारयेत् सुधीः ।
प्रवीराणां कण्ठदेशे पत्रधारणमीरितम् ॥
एतेषाञ्चैव पत्राणामुक्तं धारणलक्षणम् ।
अन्येषामपि पत्राणां नियमो नात्र दर्शितः ॥”

अथ पत्रपठनप्रकारः ।

“पत्रं धृत्वा नमस्कृत्य पूर्व्वाग्रं स्थापयेत् सुधीः ।
दक्षिणाग्रेण सदसि नृपाग्रे राजलेखकः ॥
पत्रं विनाश्य सदसि द्विवारं मनसा पठेत् ।
स्फुटं पश्चात् प्रवक्तव्यमक्षोभो राजलेखकः ॥
रहसि श्रावयेत् पत्रं शुभं वा यदि वाशुभम् ।
पत्रं श्रुत्वा विदित्वार्थं सभायां श्रावयेत्ततः ॥
रहस्य-पत्रं रहसि नृपाग्रे श्रावयेद्द्विजः ।
अशुभं नैव सदसि शुभं पत्रं नृपाज्ञया ॥
एवं क्रमेण पत्रार्थं श्रावयित्वा द्विजोत्तमः ।
नृपतेः सन्निधौ स्थित्वा नृपाज्ञामनुवर्त्तते ॥”

अथ पत्रचिह्नानि ।

“ऊर्द्ध्वं षडङ्गुलं त्यक्त्वा वर्त्तुलं चन्द्रविम्बवत् ।
कस्तूरीकुङ्कुमैः कुर्य्याद्राजपत्रं सुचिह्नितम् ॥
मन्त्रिणां कुङ्कुमेनैव पण्डितस्यैव चन्दनैः ।
गुरूणां चन्दनेनैव सिन्दूरेणैव स्वामिनः ॥
भार्य्यायाश्चाप्यलक्तेन चन्दनैः पितृपुत्रयोः ।
सन्न्यासिनां चन्दनेन यतीनां कुङ्कुमेन च ॥
रक्तचन्दनपङ्केन भृत्यस्य समुदीरितम् ।
शोणितेनैव शत्रूणां पत्रचिह्नं प्रकल्पयेत् ॥
एतेषाञ्चैव सर्व्वेषां यथायोग्यानुसारतः ।
पत्रस्योर्द्ध्वे तु मतिमान् कुर्य्यात् चिह्नं सुवर्त्तुलम् ॥”

अथ राजपत्रस्य कोणच्छेदनप्रकारः ।

“दक्षिणे पत्रकोणस्य अधस्तात् छेदयेत् सुधीः ।
एकाङ्गुलप्रमाणेन राजपत्रस्य चैव हि ॥”

अथ राजपत्रादेः पदन्यासः ।

“महाराजाधिराजश्च राजशौण्डं तथैव च ।
तथा सच्चरितं योग्यं कल्पवृक्षादिकं न्यसेत् ॥
यथायोग्यानुसारेण तथैव गुणभेदतः ।
राजपत्रेषु सर्व्वेषु पदन्यासक्रमं विदुः ॥”

अथ मन्त्रिपत्रस्य ।

“प्रवरं गुणभेदेन तथा सच्चरितादिकम् ।
विन्यस्य विलिखेत् प्राज्ञो मन्त्रिपत्रे पदक्रमम् ॥”

अथ पण्डितस्य ।

“संख्यावद्वन्दितपदं शास्त्रार्थनिपुणादिकम् ।
पण्डितानाञ्च पत्रेषु विलिखेद्वै पदक्रमम् ॥”

अथ गुरुपत्रस्य ।

“सांख्यसिद्धान्तनिपुणं सनमस्कारकं पदम् ।
विन्यस्य विलिखेत् प्राज्ञो गुरुपत्रपदक्रमम् ॥”

अथ स्वामिपत्रस्य ।

“प्रवर्य्यं सनमस्कारं प्राणप्रियादिकं पदम् ।
विन्यस्य विलिखेद्धीमान् स्वामिपत्रपदक्रमम् ॥”

अथ भार्य्यापत्रस्य ।

“प्राणप्रियापदं सार्ध्वी तथा सच्चरितादिकम् ।
भार्य्यापत्रं लिखेद्विद्वान् पदक्रममनुत्तमम् ॥”

अथ पुत्रस्य ।

“प्राणपुत्रपदं तद्वत्तथा सच्चरितादिकम् ।
आशीर्व्वचनसंयुक्तं पुत्रपत्रपदक्रमम् ॥”

अथ पितृपत्रस्य ।

“प्रभुवर्य्यं नमस्कारं तथा सच्चरितादिकम् ।
विन्यस्य विलिखेत् पुत्रः पितृपत्रपदक्रमम् ॥”

अथ सन्न्यासियतिपत्रस्य ।

“सर्व्ववाञ्छाविनिर्मुक्तं सर्व्वशास्त्रार्थपारगम् ।
सन्न्यासियतिपत्रेषु विलिखेच्च पदक्रमम् ॥”

सामान्यस्य ।

“सौमान्यस्त्वथ शत्रूणां विनियोज्यानुकं प्रति ।
शश्वदाशीर्व्वचनपदं क्षेमकुशलादिकं तथा ॥
एतेषामेव पत्रेषु यथायोग्यानुसारतः ।
विन्यस्य विलिखेत् प्राज्ञः पदक्रममनुत्तमम् ॥”

श्रीशब्दविन्याससंख्या यथा,—

“षड् गुरोः स्वामिनः पञ्च द्वे भृत्ये चतुरो रिपौ ।
श्रीशब्दानां त्रयं मित्रे एकैकं पुत्रभार्य्ययोः ॥” * ॥

अथ राज्ञः प्रशस्तिः ।

स्वस्तिगीर्व्वाणचयचूडारत्नराजिरोचिश्चुम्बित-चन्द्रचूडचरणनखेन्दुवृन्दचन्द्रिकास्वादोन्मादचतुरचेतश्चकोरवरविषमसमरसञ्चरत्प्रबलतरतुरगखुरपुटपटलदलितभूपृष्ठोत्थितध्वजविष्टधूलिधाराधूसरितसकलहरिदन्तरप्रचण्डभुजदण्डभ्राजमानखरतरासिविन्यासितप्रत्यर्थिपृथ्वीपतिसार्थप्रार्थितानुकम्पासुधासम्पातानवरतविद्वद्दारिद्र्यविद्रावणक्षमविश्राणितविश्राणनसमुपार्ज्जितोर्ज्जितयशोमरालावलिकवलितवलिदधीचिसन्नितयशोन्नतवालजालभूपालकुलतिलकश्रीयुतमहाराजाधिराजेषु ॥ १ ॥

स्वस्तिप्रचण्डदोर्द्दण्डखण्डखण्डितारिमण्डलमुण्डोन्मुक्तमुक्तावलीमण्डितसंग्रामाङ्गनरिङ्गमाणानेकवारणवाहादिकायकाण्डवक्रतरनक्रचक्रचंक्रमणदुरतिक्रमणीयापगापतिप्रभृतयशश्चन्द्रचन्द्रिकाद्योतविद्योतिताखिलजगन्मण्डलविविधद्रविणार्पणसन्तोषितसूरिसन्दोहस्तूयमानावदातकीर्त्तिनर्त्तकीनर्त्तनलीलालेपलेपितगीतिधुरीणोर्व्वशरादिवेश्याननसविलासगीयमानगुणश्रवणान्दोलिताखण्डश्रवणकुण्डलपरिष्ठिःप्रसर्पितप्रतापतपनोत्तापितारातिततिसमध्यासितनिकुञ्जकुञ्जप्रस्तुतसौन्दर्य्यगाथाप्रमुदितश्रीमन्नारायणचरणकिङ्करश्रीयुतमहाराजराजशौण्डेषु ॥ २ ॥ * ॥

अथ मन्त्रिप्रशस्तिः ।

स्वस्तिश्रीमत्समस्तसामन्तसेवकानिर्व्वाहकेषु । कोषगोष्ठपिष्टपीवलराजवाजिरथपरिवारस्थैर्य्यहेतुनीतिसेतुरक्षणनिपुणेषु । अस्मद्विश्वासैकनिकेतनेषु श्रीश्रीमन्त्रिप्रवीरेषु आशीराशिनिवेदनकोऽयं यर्ण्णकृतोऽत्रत्यं भयमावेदयन् तत्रत्यं भवमथाद्यतमनुदिनमनुचर्य्यां पृच्छति स्म ॥ * ॥

अथ गुरुप्रशस्तिः ।

स्वस्तिश्रीनारायणपदपाथोरुहनिःसरन्मकरन्दमधुपायमानमानसेषु । विविधविद्याविद्योतिताखिलगुणगणालङ्कृतवेदवेदाङ्गपारगस्वाश्रमोचिताचारसम्पन्नपरमहंसपरिव्राजकाचार्य्यसेव्यमानश्रीगोविन्दस्वरूपगुरुचरणारविन्देषु कोटिशः प्रणामाः ॥ * ॥

अथ भार्य्यायाः स्वामिप्रशस्तिः ।

स्वस्तिश्रीमद्दासमशेषसौभाग्यभूषितास्मदादिभक्तजनेषु । कर्णयोरधिष्ठानेषु । नेत्रयोरधिदैवतेषु । कामस्य परिणामेषु । चतुर्व्वर्गप्रदायकेषु । ममापरस्वरूपेषु । श्रीमत्स्वामिचरणारविन्देषु । गोविन्द इवेन्दिरायाः शङ्कर इव गिरिजायाः महेन्द्र इव पुलोमजायाः प्रतिदिनं वर्द्धमाना समाराधना प्रणामपूर्व्वमास्ताम् ॥ * ॥

अथ भर्त्तुर्भार्य्याप्रशस्तिः ।

स्वस्तिश्रीमत्सकलप्रेमधारलावण्यमूर्त्तौ प्रियतमायां नेत्रयुगस्य कौमुदिकायामिव चन्द्रस्य चण्डदायामिव कमलाकरस्य कामलिन्यामिव पथिकस्य छायायामिव तृषातुरस्य शीतलामृतधारायामिव मम जीवने निवेदयन्ती पत्री शुभाशीराशीर्निवेदयतु सर्व्वदा ॥ * ॥

अथ पुत्रस्य पितरं प्रति प्रशस्तिः ।

स्वस्तिश्रीमदभिनवयशस्सदर्पित्ताचिन्तितस्वीयानुरागानुरञ्जितानुगृहीतस्वगणवर्गेषु । निजचरणसरोज-रञ्जितपरागसंरक्षास्मदादिभालस्थलविशालभाग्यसम्भावुकेषु । श्रीयुतपितृचरणसरोरुहेषु । अकिञ्चित्करकिङ्करस्य मम बद्धकरसम्पुटस्यावनीपृष्ठलग्नाः साष्टाङ्गप्रणतयः सहस्रमनसं विज्ञाप्यन्ते ॥ * ॥

अथ पितुः पुत्रं प्रति प्रशस्तिः ।

स्वस्तिश्रीविश्वेश्वरचरणसरोरुहानुग्रहसमासादितातिविततानवद्यविद्याविलासपीयूषपरम्परापराभावुकानुपममाधुरीधुरीणविविधगुणालङ्कृतनिजवंशावतंससकलविश्वासनिधाननिजकुलपवित्रीकृतात्मप्रायेषु । श्रीयुतशुद्धाचारपरिपूरितपुत्रेषु शुभाशिषां राशयः सन्तु विशाप्यन्ते ॥ * ॥

अथ सन्न्यासियतिप्रशस्तिः ।

स्वस्तिश्रीमत्परमहंसपरिव्राजकाचार्य्यकरणनिपुणतापराङ्मुखेषु । विषमविषयदोषदर्शनदूषितप्रपञ्चरचनाविभावेषु । वेदवेदान्तसांख्यसिद्धान्तबद्धदेवप्रकृतिपुरुषविवेकज्ञानशीलेषु । संख्यावन्मुख्यवन्दितचरणारविन्दस्वाश्रमोचिताचारपरिपालनपवित्रीकृतधरित्रीतलेषु । सकलभूदेव-पूजित-श्रीयुत-गोस्वामि-चरणारविन्देषु ।

सर्व्वेषामेव पत्रेषु लिखनञ्चैवमीरितम् ॥
सर्व्वेषामेव पत्राणां विधिं ज्ञात्वा लिखेत्तु यः ।
स्वदेशे कीर्त्तिमाप्नोति तथा देशान्तरेष्वपि ॥
एवं शास्त्रक्रमं ज्ञात्वा यो लिखेद्राजपत्रकम् ।
स राजमन्त्रिभिः सार्द्धं यशः प्राप्नोत्यनुत्तमम् ॥
शास्त्रसन्दर्भमज्ञात्वा यो लिखेद्राजपत्रकम् ।
स राजमन्त्रिभिः सार्द्धं दुर्य्यशो महदाप्नुयात् ॥”* ॥

अथ पत्रनयनक्रमः ।
“राजपत्रं नयेन्मूर्द्ध्नि ललाटे पात्रमन्त्रिणाम् ।
गुरुपत्रं नयेन्मूर्द्ध्नि ब्राह्मणानान्तथैव च ॥
यतिसन्न्यासिनाञ्चैव स्वामिनस्तु तथैव च ।
सादरेणैव यत्नेन तथा मूर्द्धनि धारयेत् ॥
भार्य्यापुत्त्रस्य मित्त्रस्य हृदये धारयेत् सुधीः ।
प्रवीणानां कण्ठदेशे पत्रधारणमीरितम् ॥
एतेषाञ्चैव पत्राणामुक्तं धारणलक्षणम् ।
अन्येषामपि पत्राणां नियमो नात्र दर्शितः ॥”

अथ पत्रपठनप्रकारः ।
“पत्रं धृत्वा नमस्कृत्य पूर्व्वाग्रं स्थापयेत् सुधीः ।
पश्चिमाग्रेण सदसि नृपाग्रे राजलेखकः ॥
पत्रं विनाय सदसि द्विवारं मनसा पठेत् ।
स्फुटं पश्चात् प्रवक्तव्यमक्षोभो राजलेखकः ॥
रहसि श्रावयेत् पत्रं शुभं वा यदि वाशुभम् ।
पत्रं धृत्वा निदित्वार्थं सभायां श्रावयेत्ततः ॥
रहस्य-पत्रं रहसि नृपाग्रे श्रावयेद्द्विजः ।
अशुभं नैव सदसि शुभं पत्रं नृपाज्ञया ॥
एवं क्रमेण पत्रार्थं श्रावयित्वा द्विजोत्तमः ।
नृपतेः सन्निधौ स्थित्वा नृपाज्ञामनुवर्त्तते ॥”

अथ पत्रचिह्नानि ।
“ऊर्द्ध्वं षडङ्गुलं त्यक्त्वा वर्त्तुलं चन्द्रबिम्बवत् ।
कस्तूरीकुङ्कुमैः कुर्य्याद्राजपत्रं सुचिह्नितम् ॥
मन्त्रिणां कुङ्कुमेनैव पण्डितस्यैव चन्दनैः ।
गुरूणां चन्दनेनैव सिन्दूरेणैव स्वामिनः ॥
भार्य्यायाश्चाप्यलक्तेन चन्दनैः पितृपुत्त्रयोः ।
सन्न्यासिनां चन्दनेन यतीनां कुङ्कुमेन च ॥
रक्तचन्दनपङ्केन भृत्यस्य समुदीरितम् ।
शोणितेनैव शत्रूणां पत्रचिह्नं प्रकल्पयेत् ॥
एतेषाञ्चैव सर्व्वेषां यथायोग्यानुसारतः ।
पत्रस्योर्द्ध्वे तु मतिमान् कुर्य्यात् चिह्नं सुवर्त्तुलम् ॥”

अथ राजपत्रस्य कोणच्छेदनप्रकारः ।
“दक्षिणे पत्रकोणस्य अधस्तात् छेदयेत् सुधीः ।
एकाङ्गुलप्रमाणेन राजपत्रस्य चैव हि ॥”

अथ राजपत्रादेः पदन्यासः ।
“महाराजाधिराजश्च दानशौण्डं तथैव च ।
तथा सच्चरितं योग्यं कल्पवृक्षादिकं न्यसेत् ॥
यथायोग्यानुसारेण तथैव गुणभेदतः ।
राजपत्रेषु सर्व्वेषु पदन्यासक्रमं विदुः ॥”

अथ मन्त्रिपत्रस्य ।
“प्रवरं गुणभेदेन तथा सच्चरितादिकम् ।
विन्यस्य विलिखेत् प्राज्ञो मन्त्रिपत्रे पदक्रमम् ॥”

अथ पण्डितस्य ।
“संख्यावद्वन्दितपदं शास्त्रार्थनिपुणादिकम् ।
पण्डितानाञ्च पत्रेषु विलिखेद्वै पदक्रमम् ॥”

अथ गुरुपत्रस्य ।
“सांख्यसिद्धान्तनिपुणं सनमस्कारकं पदम् ।
विन्यस्य विलिखेत् प्राज्ञो गुरुपत्रपदक्रमम् ॥”

अथ स्वामिपत्रस्य ।
“प्रवर्यं सनमस्कारं प्राणप्रियादिकं पदम् ।
विन्यस्य विलिखेद्धीमान् स्वामिपत्रपदक्रमम् ॥”

अथ भार्य्यापत्रस्य ।
“प्राणप्रियापदं साध्वीं तथा सच्चरितादिकम् ।
भार्य्यापत्रं लिखेद्विद्वान् पदक्रममनुत्तमम् ॥”

अथ पुत्त्रस्य ।
“प्राणपुत्त्रपदं तद्वत्तथा सच्चरितादिकम् ।
आशीर्व्वचनसंयुक्तं पुत्त्रपत्रपदक्रमम् ॥”

अथ पितृपत्रस्य ।
“प्रभुवर्य्यं नमस्कारं तथा सच्चरितादिकम् ।
विन्यस्य विलिखेत् पुत्त्रः पितृपत्रपदक्रमम् ॥”

अथ सन्न्यासियतिपत्रस्य ।
“सर्व्ववाञ्छाविनिर्मुक्तं सर्व्वशास्त्रार्थपारगम् ।
सन्न्यासियतिपत्रेषु विलिखेच्च पदक्रमम् ॥”

सामान्यस्य ।
“सौभाग्यभृत्यशत्रूणां विनियोज्यानुकं प्रति ।
प्रज्ञावशेषितपदं छागतुल्यादिकं तथा ॥
एतेषामेव पत्रेषु यथायोग्यानुसारतः ।
विन्यस्य विलिखेत् प्राज्ञः पदक्रममनुत्तमम् ॥”

श्रीशब्दविन्याससंख्या यथा,—
“षड् गुरोः स्वामिनः पञ्च द्वे भृत्ये चतुरो रिपौ ।
श्रीशब्दानां त्रयं मित्रे एकैकं पुत्त्रभार्य्ययोः ॥”* ॥

अथ राज्ञः प्रशस्तिः ।

स्वस्तिगीर्व्वाणचयचूडारत्नराजिरोचिश्चुम्बित-चन्द्रचूडचरणनखेन्दुवृन्दचन्द्रिकामन्दोदास्वाद-चतुरचेतश्चकोरवरविषमसमरसङ्गरतुप्रबलतर-तुरगखुरपुटपटलदलितभूपृष्ठोत्तिष्ठद्रयिष्ठधूलि-धाराधूसरितसकलहरिदन्तरप्रचण्डभुजदण्ड-भाजमानखरतरासिविन्नासितप्रत्यर्थिपृथ्वीपति-नाथप्रार्थितानुकम्पासुधासन्धानानवरतविहद्दा-रिद्रविद्रावणद्रविणराशिनिश्राणनसमुपार्ज्जितो-र्ज्जितयशोमरालावलिकवलितवलिदधीचिसञ्चित-यशोन्दुजालजालभूपालकुलतिलकश्रीयुतमहा-राजाधिराजेषु ॥ १ ॥

स्वस्तिप्रचण्डदोर्दण्डखण्डखण्डितारिमण्डल-मुण्डोन्मुक्तमुक्तावलीमण्डितसंग्रामाङ्गनरङ्गमा-यानेकवारणवाहादिनायकाण्डदन्ततरणक्रचक्र-चंक्रमणचतुरतिक्रमणीयापगापतिप्रभृतयश्चन्द्र-चन्द्रिकाद्योतविद्योतिताखिलजगन्मण्डलविविध-द्रविणार्पणसन्तोषितसूरिसमूहस्तूयमानावदात-कीर्त्तिनर्त्तकीनर्त्तनलीलालेपलेपितगीतिधुरीणो-र्व्वश्यादिवेश्याजनसविलासगीयमानगुणश्रवणा-न्दोलिताखण्डश्रवणकुण्डलमरिक्षः प्रसर्पितप्रताप-तपनोत्तापितारातिततिसमध्यासितनिकुञ्जकुञ्ज-प्रस्तुतसौन्दर्य्यगाथाप्रमुदितश्रीमन्नारायणचरण-किङ्करश्रीयुतमहाराजदानशौण्डेषु ॥ २ ॥ * ॥

अथ मन्त्रिप्रशस्तिः ।

स्वस्तिश्रीमत्समस्तसामन्तसेवकानिर्व्वाहकेषु। कोषगोष्ठयिष्ठयौवलगजवाजिगृहपरिवारेषु हर्ष-हेतुर्नीतिसेतुमन्त्रणानिपुणेषु । अस्मद्विश्वासैक-निकेतनेषु श्रीश्रीमन्त्रिप्रवीरेषु आशीराशिनिवे-दनकोऽयं यद्भृतोऽत्रत्यं भव्यमावेदयन् तत्रत्यं भव्यमत्याहतमनुदिनमनुचरं पृच्छति स्म ॥ * ॥

अथ गुरुप्रशस्तिः ।

स्वस्तिश्रीनारायणपदपाथोरुहनिःसरन्मक-रन्दमधुपायमानमानसेषु । विविधविद्याविद्योति-ताखिलगुणगणालङ्कृतवेदवेदाङ्गपारगस्वाश्रमो-चिताचारसम्पन्नपरमहंसाग्निमाधकाचार्य्यसेव्य-मानश्रीगोविन्दस्य स्वगुरुचरणारविन्देषु कोटि शः प्रणामाः ॥ * ॥

अथ भार्य्यायाः स्वामिप्रशस्तिः ।

स्वस्तिश्रीमद्दाम्पत्यप्रेमभूषितास्मदादिभक्त-जनेषु । कर्णयोरधिष्ठानेषु । नेत्रयोरधिदेवतेषु । कामस्य परिणामेषु । चतुर्व्वर्गप्रदायकेषु । समा-परस्परेषु । श्रीमत्स्वामिचरणारविन्देषु । गोविन्द स्येवेन्दिरायाः शङ्करस्येव गिरिजायाः महेन्द्र इव पुलोमजायाः प्रतिदिनं वर्द्धमाना समाराधना प्रणामपूर्व्वमास्ताम् ॥ * ॥

अथ भर्त्तुर्भार्य्याप्रशस्तिः ।

स्वस्तिश्रीमत्समस्तप्रेमागारलावण्यमूर्त्तौ प्रिय-तमायां नेत्रयुगलस्य कनीनिकायामिव चन्द्रस्य चन्द्रिकायामिव दिनकरस्य कमलिन्यामिव पथिकस्य छायायामिव तृषातुरस्य शीतलामृत-धारायामिव मम नप्रेम निवेदयन्ती पत्री शुभाशीराशीर्निवेदयतु सर्व्वदा ॥ * ॥

अथ पुत्त्रस्य पितरं प्रति प्रशस्तिः ।

स्वस्तिश्रीमदभिनवयशस्सदाचिन्तितस्वी-यानुरागानुरञ्जितानुगृहीतस्वगणवर्गेषु । निज-चरणसरोज-रञ्जितपरागसंरक्षास्मदादिभाल-स्थलनिशालभाग्यसम्भावकेषु । श्रीयुतपितृचरण-सरोरुहेषु । अविच्छिन्नवरकिङ्करस्य मम बद्ध-करसम्पुटस्यावनीपृष्ठलग्नाः साष्टाङ्गप्रणतयः सहस्रमनसं विज्ञाप्यश्च ॥ * ॥

अथ पितुः पुत्त्रं प्रति प्रशस्तिः ।

स्वस्तिश्रीविश्वेश्वरचरणसरोरुहानुग्रहसमा-सादितातिविततानवद्यविद्याविलासपीयूषपर-म्परापराभावुकाशुभसमाधुरीधुरीणविविधगुणा-लङ्कृतनिजवंशावतंससकलविश्वासनिधाननिज-कुलपवित्रीकृतात्मप्रायेषु । श्रीयुतशुद्धाचारपरि-पूरितपुत्त्रेषु शुभाशिषां राशयः सन्तु विज्ञा-प्यश्च ॥ * ॥

अथ सन्न्यासियतिप्रशस्तिः ।

स्वस्तिश्रीमत्परमहंसपरिव्राजकाचार्य्यकरण-निपुणतापराङ्मुखेषु । विषमविषयदोषदर्शन-दूषितप्रपञ्चरचनाविभावेषु । वेदवेदान्तसांख्य-सिद्धान्तबद्धदेवप्रकृतिपुरुषविवेकज्ञानशीलेषु । संख्यावन्मुख्यवन्दितचरणारविन्दस्वाश्रमोचिता-चारपरिपालनपवित्रीकृतपरिचीतगणेषु । सकल-भूदेव-पूजित-श्रीयुत-गोस्वामि-चरणारविन्देषु ।

सर्व्वेषामेव पत्रेषु लिखनञ्चैवमीरितम् ॥
सर्व्वेषामेव पत्राणां विधिं ज्ञात्वा लिखेत्तु यः ।
स्वदेशे कीर्त्तिमाप्नोति तथा देशान्तरेष्वपि ॥
एवं शास्त्रक्रमं ज्ञात्वा यो लिखेद्राजपत्रकम् ।
स राजमन्त्रिभिः सार्द्धं यशः प्राप्नोत्यनुत्तमम् ॥
शास्त्रसन्दर्भमज्ञात्वा यो लिखेद्राजपत्रकम् ।
स राजमन्त्रिभिः सार्द्धं दुर्यशो महदाप्नुयात् ॥"*॥

अथ पत्रनयनक्रमः ।

"राजपत्रं नयेन्मूर्द्ध्नि ललाटे पात्रमन्त्रिणाम् ।
गुरुपत्रं नयेन्मूर्द्ध्नि ब्राह्मणानान्तथैव च ॥
यतिसन्न्यासिनाञ्चैव स्वामिनश्च तथैव च ।
सादरेणैव यत्नेन तथा मूर्द्धनि धारयेत् ॥
भार्य्यापुत्त्रस्य मित्रस्य हृदये धारयेत् सुधीः ।
प्रवीराणां कण्ठदेशे पत्रधारणमीरितम् ॥
एतेषाञ्चैव पत्राणामुक्तं धारणलक्षणम् ।
अन्येषामपि पत्राणां नियमो नात्र दर्शितः ॥"

अथ पत्रपठनप्रकारः ।

"पत्रं धृत्वा नमस्कृत्य पृथ्व्याग्रं स्थापयेत् सुधीः ।
दक्षिणाग्रेण सदसि नृपाग्रे राजलेखकः ॥
पत्रं विनम्य सदसि द्विवारं मनसा पठेत् ।
स्फुटं पश्चात् प्रवक्तव्यमथोभौ राजलेखकः ॥
रहसि श्रावयेत् पत्रं शुभं वा यदि वाऽशुभम् ।
पत्रं श्रुत्वा विदित्वार्थं सभायां श्रावयेत्ततः ॥
रहस्य-पत्रं रहसि नृपाग्रे श्रावयेद्द्विजः ।
अशुभं नैव सदसि शुभं पत्रं नृपाज्ञया ॥
एवं क्रमेण पत्रार्थं श्रावयित्वा द्विजोत्तमः ।
दूतैः सन्निधौ स्थित्वा नृपाज्ञामनुवर्त्तते ॥"

अथ पत्रचिह्नानि ।

"ऊर्द्धे षडङ्गुलं त्यक्त्वा वर्त्तुलं चन्द्रबिम्बवत् ।
कस्तूरीकुङ्कुमैः कुर्य्याद्राजपत्रं सुचिह्नितम् ॥
मन्त्रिणां कुङ्कुमेनैव पण्डितस्यैव चन्दनैः ।
गुरूणां चन्दनेनैव सिन्दूरेणैव स्वामिनः ॥
भार्य्यायाश्चाप्यलक्तेन चन्दनैः पितृपुत्त्रयोः ।
सन्न्यासिनां चन्दनेन यतीनां कुङ्कुमेन च ॥
रक्तचन्दनपङ्केन भृत्यस्य समुदीरितम् ।
शोणितेनैव शत्रूणां पत्रचिह्नं प्रकल्पयेत् ॥
एतेषाञ्चैव सर्व्वेषां यथायोग्यानुसारतः ।
पत्रस्योर्द्धे तु मतिमान् कुर्य्यात् चिह्नं सुवर्त्तुलम् ॥"

अथ राजपत्रस्य कोणच्छेदनप्रकारः ।

"दक्षिणे पत्रकोणस्य अधस्तात् छेदयेत् सुधीः ।
एकाङ्गुलप्रमाणेन राजपत्रस्य चैव हि ॥"

अथ राजपत्रादेः पदन्यासः ।

"महाराजाधिराजस्य दानशौण्डं तथैव च ।
तथा सच्चरितं योग्यं कल्पवृक्षादिकं न्यसेत् ॥
यथायोग्यानुसारेण तथैव गुणभेदतः ।
राजपत्रेषु सर्व्वेषु पदन्यासक्रमं विदुः ॥"

अथ मन्त्रिपत्रस्य ।

"प्रवरं गुणभेदेन तथा सच्चरितादिकम् ।
विन्यस्य विलिखेत् प्राज्ञो मन्त्रिपत्रे पदक्रमम् ॥"

अथ पण्डितस्य ।

"संख्यावद्वन्दितपदं शास्त्रार्थनिपुणादिकम् ।
पण्डितानाञ्च पत्रेषु विलिखेद्वै पदक्रमम् ॥"



अथ गुरुपत्रस्य ।

"सांख्यसिद्धान्तनिपुणं नमस्कारकं पदम् ।
विन्यस्य विलिखेत् प्राज्ञो गुरुपत्रपदक्रमम् ॥"

अथ स्वामिपत्रस्य ।

"प्रवर्य्यं नमस्कारं प्राणप्रियादिकं पदम् ।
विन्यस्य विलिखेद्धीमान् स्वामिपत्रपदक्रमम् ॥"

अथ भार्य्यापत्रस्य ।

"प्राणप्रियापदं साध्वीं तथा सच्चरितादिकम् ।
भार्य्यापत्रं लिखेद्विद्वान् पदक्रममनुत्तमम् ॥"

अथ पुत्त्रस्य ।

"प्राणपुत्त्रपदं तद्वत्तथा सच्चरितादिकम् ।
आशीर्व्वचनसंयुक्तं पुत्त्रपत्रपदक्रमम् ॥"

अथ पितृपत्रस्य ।

"प्रभुवर्य्यं नमस्कारं तथा सच्चरितादिकम् ।
विन्यस्य विलिखेत् पुत्त्रः पितृपत्रपदक्रमम् ॥"

अथ सन्न्यासियतिपत्रस्य ।

"सर्व्ववाञ्छाविनिर्म्मुक्तं सर्व्वशास्त्रार्थपारगम् ।
सन्न्यासियतिपत्रेषु विलिखेच्च पदक्रमम् ॥"

सामान्यस्य ।

"सौमान्यस्त्वथ सद्वर्णो विनियोज्याशुकं प्रति ।
शस्त्रावशेषिणपदं त्यागतुल्यादिकं तथा ॥
एतेषामेव पत्रेषु यथायोग्यानुसारतः ।
विन्यस्य विलिखेत् प्राज्ञः पदक्रममनुत्तमम् ॥"

श्रीशब्दविन्याससंख्या यथा,—

"षड् गुरोः स्वामिनः पञ्च द्वे भृत्ये चतुरो रिपौ ।
श्रीशब्दानां त्रयं मित्रे एकैकं पुत्त्रभार्य्ययोः ॥"६॥

अथ राज्ञः प्रशस्तिः ।

स्वस्तिश्रीसर्व्वगीर्व्वाणचयचूडारत्नराजिरोचिस्सुमित-चन्द्रचूडचरणनखेन्दुवृन्दचन्द्रिकामन्दोहास्वाद-चतुरचेतश्चकोरवरविषमसमरसहरतुरङ्गप्रबलतर-तुरगखरपुटपटलदलितभूपृष्ठोत्थितप्रचण्डधूलि-धाराघर्षरितमलशरदिन्तरप्रचण्डभुजदण्ड-मण्डलमानवरतराशिविशासितप्रत्यर्थिपृथ्वीपति-सार्थप्रार्थितानुकम्पासुधासम्पातानवरतविद्वद्वा-रिद्राविद्रावणद्रविणराशिविश्राणनसमुपार्ज्जितो-र्ज्जितयशोमरालावलिकवलितवलिदधीचिसच्चित-यशोमृणालजालभूपालकुलतिलकश्रीयुतमहा-राजाधिराजेषु ॥ १ ॥

स्वस्तिप्रचण्डदोर्द्दण्डखण्डखण्डितारिमण्डल-मुण्डोन्मुक्तमुक्तावलीमण्डितसंग्रामाङ्गनरङ्गमा-न्यानेकवारणवाहादिकायकाण्डकातरनरराचक्र-चङ्क्रमणपटुतरविक्रमणीयामरगणपतिप्रभृतयशश्चन्द्र-चन्द्रिकाद्योतविद्योतिताखिलजगन्मण्डलविविध-द्रविणार्पणसन्तोषितहरिसमूहस्तूयमानावदात-कीर्त्तिनर्त्तकीनर्त्तनलीलाविलम्पितगीतिमधुरीयो-व्यष्टादिदैवेशाङ्गनाविलासगीयमानगुणश्रवणा-न्दोलितशाखण्डश्रवणकुण्डलमस्तिःप्रसर्पितप्रताप-तपनसोपापितारातिततिसमध्यासितनिकुञ्जकुञ्ज-ग्रस्तुतसौन्दर्य्यगाथाप्रमुदितश्रीमन्नारायणचरण-किङ्करश्रीयुतमहाराजदानशौण्डेषु ॥ २ ॥ * ॥

अथ मन्त्रिप्रशस्तिः ।

स्वस्तिश्रीमत्समस्तसामन्तसेवकनिर्व्वाहकेषु ।



कोपकोकणिक्षुर्थांजलनरुत्पत्तिदर्पितर्वर्वित्-दैत्युर्व्वीनिर्मितपुत्रवत्समिधेषु । [illegible] गिरितरेषु श्रीआर्यनिप्रनीरेषु [illegible] दनकोरणं वरंवृत्तौपत्र्वं मनकारेष्टय [illegible] भवमथादनमदुहितामनुत्तमं [illegible] ॥ * ॥

अथ गुरुप्रशस्तिः ।

स्वस्तिश्रीमाग[illegible]पादेर्विकारपरिस्फुट-स्फुटमधुपायमानमानसेषु । विविधविद्याविद्योति-ताखिलगुणगणालङ्कृतदेहेषु [illegible]-विनाशस्यपरस्य [illegible]-मार्त्तण्डमिहिर[illegible]ष्टेषु परिट घः प्रणामाः ॥ * ॥

अथ भार्य्यायाः स्वामिप्रशस्तिः ।

स्वस्तिश्रीमद्द्वादिश्रियन्तुम्बित[illegible]-जनेषु । कर्णयोरधिष्ठातृषु । नेत्रयोरधिदेवतेषु । कामस्य परिणामेषु । संयुक्तांप्रदायकेषु । समा-परस्तेषु । श्रीमत्स्वामिचरणारविन्देषु । शोभिन्द-दर्शेन्दुवचा: शफरा इव निदिवाश्रया: मलिन इव पुत्तलिकाया: प्रतिदिनं वर्द्धमाना भक्तापद्मप्रणामपूर्व्वमामासा ॥ * ॥

अथ भर्त्तुर्भार्य्यां प्रति प्रशस्तिः ।

स्वस्तिश्रीमानुकमलपीयूषपारसगर्भो प्रिय-तमायां नेत्रयुगलस्य कौमुदिकायामिव चन्द्रस्य चन्द्रिकायामिव पद्माकरस्य कमलिन्यामिव पथिकस्य छायायामिव तृषातुरस्य शीतलामृत-धारायामिव मम मनसि निविदन्ती मतौ शुभाशीर्वादपूर्व्वकमेतत्पत्रं मदीयम् ॥ * ॥

अथ पुत्रस्य पितरं प्रति प्रशस्तिः ।

स्वस्तिश्रीमदभिनवदेवगणदधिकापिता[illegible]-यानुरागानुरञ्जितानुमोदितनवचरणेषु । निष्क-पटकमलरीण-दक्षिणपदार[illegible]दारिभास-स्वलविशालभाव[illegible]षु । श्रीयुतपितृचरण-सरोरुहेषु । अकिञ्चनरकिङ्करस्य मम बहु-करसम्पुटसमर्पिता: साष्टाङ्गप्रणतय: सहस्रमवगन्तव्य विज्ञाप्यञ्च ॥ * ॥

अथ पितुः पुत्रं प्रति प्रशस्तिः ।

स्वस्तिश्रीविन्दीश्वरचरणकमलगधूपमधुपदसमा-सादितातिविततानवद्यविद्याविलासपीयूषपर-म्परापराभावुकानुपमसाधुर्य्यधुरीणविविधगुणा-लङ्कृतनिजवंशावतंसमवलम्बिश्वार्म्मणिभागनिज-कुलपवित्रीकृतात्मप्रायेषु । श्रीयुतकृष्णपारिपार्श्व-पूरितपुत्त्रेषु शुभाशिषां राशयः सन्तु विशा-प्यञ्च ॥ * ॥

अथ सन्न्यासियतिप्रशस्तिः ।

स्वस्तिश्रीमत्परमहंसपरिव्राजकाचार्य्यवर्य्य-निपुणतापराङ्मुखेषु । विषमविषयदोषघोर-दूषितप्रपञ्चरचनाविभावेषु । वेदवेदान्तशास्त्र-सिद्धान्तवद्धदेवप्रकृतिपुरुषविवेकज्ञानयोगेषु । संख्यावन्मुख्यवन्दितचरणारविन्दद्वन्द्वयोगिनाम्-आचारपरिपालनपवित्रीकृतधरित्रीतलेषु । सकल-भूदेव-पूजित-श्रीयुत-गोस्वामि-चरणारविन्देषु

समावनीसलग्नासाराङ्गग्रणामसहसमजस श्री नमो नारायणायेति मनोवाकलितमस्तु ॥ * ॥

अथ भृत्यप्रशस्ति ।

१" स्वस्तिभगवच्चरणपरायणमकलङ्कविगाधिरधकश्रीमहिष्यादिप्रतिपालकनिखिलवशाशुशेवकवशधरामुकभृत्य प्रति ॥ * ॥

अथारिप्रशस्ति ।

स्वस्तिसमराङ्गनभटप्रतिभटयशःपरिपूरितसकलसामन्तराजधानीविजृम्भितवीरशब्दावशेषितनिजवशाशुरसकमततपरिचरणभग्नामतामुक प्रति ॥ * ॥

अथ विवाकिनां प्रशस्ति ।

स्वस्तिश्रीभगवत्पदपङ्कजपूजनोपचितपुण्यपुञ्जपवित्रीकृतान्तःकरणनिर्मिमाषिनीविसरहन्मिलमिलभ्रमीमालाकलायशोधुवल्लिनिरदधिसुयिशाघनाधरीकृतसुरपुरभूमीशेषु ।

स्वस्तिश्रीमत्परमेश्वरपादपाथोरुहास्काचतुरचितचञ्चरीकभूवृन्दारकवृन्दावनवनितामितयशःपटीरपङ्कपटलालङ्कृतनिखिलाङ्गनागणस्तनतटप्रबलप्रसारोल्लसन्नाकुलपत्रावलिसाधनव्याकुमारपरेषु ।" इति वररुचिकृतपत्रकौमुदी ॥

पत्रक क्ली (पत्रमेव पत्र+स्वार्थे कन् ।) वृक्षस्य पत्रम् । पत्रावली । इति शब्दरत्नावली । तेजपत्रम् । अस्य गुणः । कफवायर्शोहृल्लासारुचिनाशित्वम् । इति राजवल्लभः । शालिञ्चशाके पुं इति रत्नमाला ॥

पत्रकाहला स्त्री (पत्रकाणां आहला शब्दः ।) पिञ्छोला । पत्रशब्दः । इति हारावली ॥

पत्रकृच्छ्रः पुं (पत्रैः पत्रकार्यैः साध्यः कृच्छ्रो व्रतविशेषः ।) पर्णकृच्छ्रः । यथा —

पर्णोडुम्बरराजीवबिल्वपत्रकुशोदकैः ।
प्रत्येकं प्रत्यहं पीतैः पर्णकृच्छ्र उदाहृतः ॥

इति याज्ञवल्क्यः ।

पलाशोडुम्बरारविन्दश्रीवृक्षपत्राणामेकैकेन क्वथितमुदकं प्रत्यहं पिबन् कुशोदकञ्च एकं क्षिपन्नश्नीति पञ्चाहसाध्यः पर्णकृच्छ्रः ।" इति मिताक्षरा ।

पत्रगुप्तः पुं (पत्राणि गुप्तानि यस्य ।) त्रिकण्टः । इति शब्दचन्द्रिका । तकाटा सिज इति भाषा ॥

पत्रघना स्त्री (पत्रमेव घनं यस्याः । पत्रबाहुल्यात्तथात्वम् ।) सातलावृक्षः । इति राजनिर्घण्टः ।

पत्राङ्ग क्ली (पत्रमज्यतेऽनेन । अञ्ज+करणे घञ् । यद्वा पत्रवत् अङ्गं यस्य । शकन्ध्वादित्वात् साधु ।) पत्राङ्गम् रक्तचन्दनम् । इति शब्दरत्नावली ।

पत्रझङ्कारः पुं (पत्रस्य झङ्कारस्तद्वत् शब्दो यस्य ।) पुरोटिः । इति त्रिकाण्डशेषः । राय भाटी इति भाषा ॥

पत्रणा स्त्री (पत्र प्राणे+णिच् युच् । टाप् । इष्व प्रक्षिप्तमकाय । पत्रैः कृतो जीवनमिव यत्र ।) शरपुङ्खरचना । यथाह हारावली ।
'शराणां पत्ररचना पत्रणा परिकीर्तिता ॥'

पत्रतण्डुली स्त्री (पत्रेषु तण्डुलवत् विद्यतेऽस्याः । अर्श आदित्वादच् । गौरादित्वात् ङीष् ।) यवतिक्ता । इति राजनिर्घण्टः ।

पत्रतरुः पुं (पत्रप्रधानस्तरुः । शाकपार्थिववत् समासः ।) दुर्गखदिरः । इति राजनिर्घण्टः ।

पत्रदारकः पुं (पत्राणि दारयति धृतानि इति । दृ+णिच्+ण्वुल् ।) क्रकचः । इति त्रिकाण्डशेषः । करात इति भाषा ॥

पत्रनाडिका स्त्री (पत्रस्य नाडिका ।) पत्रशिरा । इति जटाधरः ।

पत्रपरशुः पुं (पत्रे धातुनिर्मितपत्राकारे परशुरिव । सच्छेदकत्वात्तथात्वम् ।) स्वर्णकारादीनां स्वर्णादिच्छेदिका । छेनी इति भाषा । तत्पर्यायः । व्रश्चनः २ । इत्यमरः । २।१०।३४ ॥ पत्रपशुः ३ । इति शब्दरत्नावली ॥

पत्रपा स्त्री (अपत्रपणमिति । अप+त्रप+अच् । निपातनात् अकारलोपः ।) अपत्रपा । लज्जा । इति शब्दरत्नावली ॥

पत्रपालः पुं (पत्रवत् पल्यते प्राप्यतेऽसौ । पत्र+पल गतौ+घञ् ।) आयता छुरिका । इति हेमचन्द्रः । ३ । ४४८ ॥

पत्रपाली स्त्री (पत्रवत् पालिरग्रभागो यस्याः । ङीप् ।) कर्त्तरी । इति हलायुधः ॥ काँची इति भाषा ।

पत्रपाश्या स्त्री (पाशानां समूहः पाश्या । पत्रमिव पाश्या ।) स्वर्णादिरचितललाटाभरणम् । इत्यमरः । २।६।१०३ ॥ टीका इति भाषा ॥

पत्रपिशाचिका स्त्री (पत्रैः पत्रैर्वा पिशाचीव । इवार्थे कन् ।) जलधा । टोका इति भाषा । तत्पर्यायः । खर्परः २ वारिधा ३ मुण्डखोलम् ४ । इति त्रिकाण्डशेषः । मस्तके पलाशपत्रबन्धनम् । यदुक्तम्
"बन्धः पलाशपत्राणां शीर्षे पत्रपिशाचिका ॥"
इति हारावली ॥

पत्रपुष्पः पुं (पत्रं पुष्पमिव यस्य ।) रक्ततुलसी । इति शब्दचन्द्रिका ॥

पत्रपुष्पकः पुं (पत्रपुष्प इव कायते प्रकाशते इति । कै+क ।) भूर्जपत्रम् । इति शब्दमाला ॥

पत्रपुष्पा स्त्री (पत्रपुष्प+स्त्रियां टाप् ।) तुलसी । इति शब्दमाला ॥ क्षुद्रपत्रतुलसी । इति रत्नमाला ॥

पत्रबन्धः पुं (पत्राणां बन्धो बन्धनं यस्मिन् । पुष्परचनाकाले हि पत्राणां ग्रथनं स्यादतस्तथात्वम् ।) पुष्परचना । यथा शब्दरत्नावल्याम् ।
'रचना च परिस्यन्दः पत्रबन्ध इति त्रयम् ।
पत्रभङ्गप्रसूनादिरचनायां निगद्यते ॥'

पत्रबालः पुं (पत्रवत् बाल्यते धीयतेऽस्मिन् । बल रक्षणे+अधिकरणे घञ् । अग्रभागे पत्राकृतेस्तथात्वम् ।) तुलाधटः । इति त्रिकाण्डशेषः । दाँड इति भाषा ॥

पत्रभङ्गः पुं (पत्राणां लिखितपत्राकृतीनां भङ्गो विच्छित्तिः यत्र ।) स्तनकपोलादौ कस्तूरिकादिरचितपत्रावली । तत्पर्यायः । पत्रलेखा २ पत्रवल्ली ३ पत्रलता ४ पत्राङ्गुली ५ । इति हेमचन्द्रः । पत्राङ्गुलिः ६ पत्रभङ्गी ७ पत्रकम् ८ पत्रभङ्गिः ९ पत्रावली १० । इति शब्दरत्नावली ।

पत्रभङ्गी स्त्री (पत्रभङ्ग+गौरादित्वात् ङीष् ।) पत्रभङ्गः । इति शब्दरत्नावली ॥

पत्रयौवनं क्ली, (पत्राणां यौवनं यत्र ।) पल्लवम् । नूतनपत्रम् । यथा जटाधरः ।
'नवोद्गमे किशलयं किसलं पत्रयौवनम् ॥'

पत्ररथः पुं स्त्री (पत्रं पक्षो रथो यानमिव यस्य ।) पक्षी । इत्यमरः । २ । ५ । ३२ ॥ (यथा भागवते । १ । ६ । १३ ।
'चित्रस्वनैः पत्ररथैर्विभ्रमद्भ्रमरश्रियम् ।
नलवेणुशरस्तम्बकुशकीचकगह्वरम् ॥')

पत्रलं क्ली द्रप्सम् । अघनदधि । इति हेमचन्द्रः ॥

पत्रलेखा स्त्री (पत्राणां कस्तूरिकादिरचितपत्राकृतीनां लेखा रचना ।) पत्रभङ्गः । इत्यमरः । २ । ६ । १२२ ॥ (यथा रघुः ६ । ७२ ।
"महेन्द्रमास्थाय महोक्षरूपं
यः संयति प्राप्तपिनाकलीलः ।
चकार बाणैरसुराङ्गनानां
गण्डस्थलीः प्रोषितपत्रलेखाः ॥')

पत्रवल्ली स्त्री (पत्राणां रचितपत्राकृतीनां वल्ली लतेव ।) पत्रभङ्गः । इति हेमचन्द्रः । ३।३१९ ॥ (यथा माघे । ८ । ५९ ।
'गण्डेषु स्फुटरचनाकपत्रवल्ली
पर्याप्तं पयसि विभूषणं वधूनाम् ॥")
रुद्रजटा । पलाशी लता । इति राजनिर्घण्टः । पर्णलता च ॥

पत्रवाहः पुं, (पत्रेण पक्षच्छदेन उह्यते इति । वह+घञ् ।) बाणः । इति जटाधरः ॥ (पत्रं लिपिं वहतीति । वह+अण् ।) लिपिवाहके त्रि ।

पत्रशाकः पुं (पत्रप्रधानः शाकः । शाकपार्थिववत् समासः ।) बहुविधशाकान्तर्गतपत्रात्मकशाकः । यथाह राजवल्लभः ।
"पत्रं पुष्पं फलं नालं कन्दं संस्वेदजं तथा ।
शाकं षड्विधमुद्दिष्टं गुरु विद्याद्यथोत्तरम् ॥"

पत्रशिरा स्त्री (पत्रस्य शिरेव ।) पत्रभङ्गः । तत्पर्यायः । नाडिः २ । इति हारावली ॥ पत्रनाडी च ॥

पत्रश्रेणी स्त्री (पत्राणां श्रेणीव ।) मवली । इति राजनिर्घण्टः ॥ पर्णपङ्क्तिश्च ॥

पत्रश्रेष्ठः पुं (पत्रं श्रेष्ठं यस्य ।) बिल्वः । इति राजनिर्घण्टः ॥

पत्रसूचिः पुं (पत्राणां सूचिरिव ।) कण्टकम् । इति त्रिकाण्डशेषः ॥

पत्रहिमं क्ली (पत्रेषु हिमं यस्मिन् दिने ।) हिमदुर्दिनम् । इति त्रिकाण्डशेषः ॥

पत्राढ्यं क्ली, (पत्रमेव आढ्यं यस्य ।) तेजपत्रम् । इति शब्दचन्द्रिका ॥ तालीशपत्रम् । इति राजनिर्घण्टः ॥

...मक्तः। कषायः। हस्त्यश्ववाहनम्। अतिभ्रम-
णम्। रविकिरणः। व्यायामः॥ * ॥

प्रमेहे अपथ्यम्।

मूत्रवेगः। धूमपानम्। स्वेदः। रक्तमोक्षणम्।
...दावन्नम्। दिवानिद्रा। नवान्नम्। दधि।
आनूपमांसम्। निष्पावम्। पिष्टान्नम्। मैथु-
नम्। सौवीरकम्। सुरा। शुक्तम्। तैलम्।
क्षीरम्। घृतम्। गुडः। तुम्बी। तालास्थिमज्जा।
विरुद्धाशनम्। कुष्माण्डम्। इक्षुः। दुष्टाम्बु।
स्वादु। अम्लः। लवणम्। अभिष्यन्दि॥ * ॥

अथ मेदसि पथ्यम्।

चिन्ता। श्रमः। जागरणम्। व्यवायः। प्रोद्वर्त्त-
नम्। लङ्घनम्। आतपः। हस्त्यश्वयानम्।
भ्रमणम्। विरेकः। प्रच्छर्द्दनम्। अपतर्पणम्।
पुरातना वेणवकोरदूषश्यामाकनीवारप्रियङ्गु
जूर्णाः। यवः। कुलत्थः। चणकः। मसूरः।
मुद्गः। तुवरी। मधु। लाजाः। कटुतिक्तकषा-
याणि। तक्रम्। सुरा। चिङ्गटमत्स्यः। दग्ध-
वार्त्ताकुः। फलत्रयम्। यवासकम्। शिरीष-
लोध्रहरीतकीनां चूर्णेन गात्रविलेपनम्। कटु-
त्रयम्। सर्षपतैलम्। एला। सर्वाणि रूक्षाणि।
उष्णतैलम्। पत्रशाकः। अगुरुलेपनम्। प्रतप्त-
नीराणि। शिलाजतूनि। भोजनात् प्राक् वारि-
पानम्॥ * ॥

मेदसि अपथ्यम्।

स्नानम्। रसायनम्। शालिः। गोधूमः। सुख-
शीलता। क्षीरम्। इक्षुविकृतिः। माषः।
सौहित्यम्। स्वेदनानि। मत्स्यः। मांसम्।
दिवानिद्रा। स्रक्। गन्धः। मधुराणि। समग्र-
भोजनस्य पश्चात् जलपानम्। अतिमात्रोप-
चिते विशेषाद्दमनक्रिया॥ * ॥

अथोदररोगे पथ्यम्।

विरेचनम्। लङ्घनम्। अब्दसम्भवकुलत्थमुद्गा-
रुणशालियवाः। जाङ्गलमृगपक्षिणः। सिता।
सुरा। माक्षिकम्। सीधुः। माध्वीकम्।
षाड़वः। तक्रम्। रसोनम्। रुबुतैलम्। आर्द्र-
कम्। शालिञ्चशाकम्। कुलकम्। कठिल्लकम्।
पुनर्नवा। शिग्रुफलम्। हरीतकी। ताम्बू-
लम्। एला। यवशूकम्। आयसम्। अजा-
गवोष्ट्रीमहिषीणां पयः मूत्रञ्च। लघूनि।
तिक्तानि। दीपनानि। वस्त्रेण सम्वेष्टनम्।
अग्निकर्म्म। विषप्रयोगः। विशेषतः प्लीहसमु-
द्भवे वामे अग्रबाहौ धमनीव्यधः। बद्धाङ्ग्ये
उदकजे च तोत्थिते नाभेरधः यथाविधिशस्त्र-
विधिः। क्षीरयोत्थे आदितः घृतपानम्।
अभ्यञ्जनम्। अनुवासनम्॥ * ॥

उदररोगे अपथ्यम्।

सम्वेष्टनम्। धूमपानम्। जलपानम्। सिरा-
व्यधः। छर्द्दिः। यानम्। दिवानिद्रा। व्यायामः।
पिष्टवैकृतम्। औदकानूपमांसम्। पत्रशाकम्।
तिलः। उष्णानि। विदाहीनि। लवणाशनम्।
शमीधान्यम्। विरुद्धान्नम्। दुष्टनीरम्। गुरूणि।
महेन्द्रगिरिजातानां नदीनां जलम्। विष्ट-
म्भीनि। छिद्रसमुद्भवे विशेषतः स्वेदः॥ * ॥

अथ शोथे पथ्यम्।

संशोधनम्। लङ्घनम्। असमोक्षः। स्वेदः।
प्रलेपः। परिषेचनम्। पुरातनशालियवकुलत्थ
मुद्गाः। गोधा। शल्लकः। भुजङ्गभुकतित्तिरि-
ताम्रचूड़लावादयो जाङ्गलविष्किराः। कूर्म्मः।
शृङ्गी। प्रपुराणसर्पिः। तक्रम्। सुरा।
माक्षिकम्। आसवः। निष्पावः। कठिल्लकम्।
रक्तशिग्रु। रसोनम्। कर्कोटकम्। मानमूलम्।
सुवर्च्चला। गञ्जनकः। पटोलम्। वेत्राग्रम्।
वार्त्ताकुनम्। मूलकम्। पुनर्नवा। चित्रकम्।
पारिभद्रः। श्रीपर्णम्। निम्बः। क्षुरपल्लवम्।
एरण्डतैलम्। कटुका। हरिद्रा। हरीतकी।
क्षारनिषेवणम्। भल्लातकम्। गुग्गुलुः। आय-
सम्। कटूनि। तिक्तानि। दीपनानि। गोऽजा-
महिषीभवमूत्राणि। कस्तूरिका। शिलाजतु।
पाण्डुरोगोक्तवह्निकर्म्म॥ * ॥

शोथे अपथ्यम्।

नवनसलिलम्। वेगरोधः। विरुद्धपानाशनम्।
विषमाशनम्। स्वङ्गमणम्। ग्राम्याजानूप
पिशितलवणे। शुष्कशाकम्। नवान्नम्। गौड़म्।
पिष्टान्नम्। दधि। सशरम्। विज्जलम्। मद्यम्।
अम्लम्। धानाः। वल्लूरम्। गुरु। असात्म्यम्।
विदाहि। अरात्रौ स्वप्नः। मैथुनम्॥ * ॥

अथ वृद्धिब्रध्नाधिकारे पथ्यम्।

संशोधनम्। वस्तिः। अस्रविमोक्षः। स्वेदः।
प्रलेपः। अरुणशालयः। एरण्डतैलम्। सुरभी-
जलम्। धन्वामिषम्। शिग्रुफलम्। पटोलम्।
पुनर्नवा। गोक्षुरः। अग्निमन्थः। ताम्बूलम्।
पथ्या। सरला। रसोनम्। वाड़िङ्गनम्। गञ्ज-
नकम्। मधूनि। कौर्म्मं घृतम्। तप्तजलम्।
तक्रम्। आमवातापहमग्निकारि चान्नपानम्।
पुराणसुरा। वर्द्धेन्दुवदंवयोर्दाहः। आसा-
शये बाहुशिराव्यधः॥ * ॥

ब्रध्नवृद्ध्यावपथ्यम्।

विरुद्धपानान्नम्। असात्म्यसेवा। संक्षोभणम्।
हस्तिहयादियानम्। आनूपमांसानि। दधीनि।
माषाः। दुग्धानि। पिष्टान्नम्। उपोदिका।
गुरूणि। मूत्रोत्थितवेगरोधः॥ * ॥

अथ गलगण्डादौ पथ्यम्।

छर्द्दिः। विरेचनम्। नस्यम्। स्वेदः। धूमः।
शिराव्यधः। अग्निकर्म्म। क्षारयोगः। प्रलेपः।
लङ्घनम्। पुराणघृतपानम्। जीर्णलोहित-
शालयः। यवाः। मुद्गाः। पटोलम्। रक्त-
शिग्रु। कठिल्लकम्। शालिञ्चशाकम्। वेत्रा-
ग्रम्। रूक्षाणि। कटूनि। सर्व्वाणि दीपनानि।
गुग्गुलुः। शिलाजतु। विशेषतः जिह्वातलस्थ-
सिराद्वयच्छेदः। मणिबन्धोर्द्धे अङ्गुलान्तरास्तिस्रो
रेखाः कार्य्याः। गलगण्डगण्डमालापचीग्रन्थ्य-
र्व्वुदातुरे यथादोषं यथावस्थं एतत् सर्व्वं
पथ्यम्॥ * ॥

गलगण्डे अपथ्यम्।

सर्व्वक्षीरेक्षुविकृतिः। आनूपमांसम्। पिष्टा-
न्नम्। अम्लम्। मधुरम्। गुरुद्रव्यम्। अभि-
ष्यन्दिद्रव्यम्॥ * ॥

अथ श्लीपदे पथ्यम्।

प्रच्छर्द्दनम्। लङ्घनम्। असमोक्षः। स्वेदः।
विरेकः। परिलेपनम्। पुरातनषष्टिकशालयः।
यवाः। कुलत्थाः। लशुनम्। पटोलम्। वार्त्ताकुः।
शोभाञ्जनम्। कारवेल्लम्। पुनर्नवा। मूलकम्।
पूतिका। एरण्डतैलम्। सुरभीजलम्। कटूनि।
तिक्तानि। दीपनानि। वातोद्भवे गुल्फोपरि-
ष्टात् चतुरङ्गुले सिराव्यधः। पैत्तिके गुल्फतले
शिराव्यधः। कफजे अङ्गुष्ठमूले सिराव्यधः॥ * ॥

श्लीपदे अपथ्यम्।

पिष्टान्नम्। दुग्धविकृतम्। गुड़ः। आनूपमामि-
षम्। स्वादुरसः। पारिपात्रसह्यविन्ध्यनदी-
जलम्। पिच्छिलम्। गुरुद्रव्यम्। अभिष्यन्दि-
द्रव्यम्॥ * ॥

अथ विद्रधौ पथ्यम्।

आमावस्थे रेचनलेपस्वेदास्त्रमोक्षणानि। जीर्ण-
श्यामाककलमौ। कुलत्थः। लशुनम्। रक्त-
शिग्रु। निष्पावः। कारवेल्लः। पुनर्नवा।
श्रीपर्णी। चित्रकम्। क्षौद्रम्। शोथोक्तानि
सर्व्वाणि। पक्वावस्थे शस्त्रकर्म्म। पुराणरक्त-
शालिः। घृतम्। तैलम्। मुद्गरसः। विलेपी।
धन्वजरसाः। शालिञ्चशाकम्। कदलम्। पटो-
लम्। हिमवालुका। चन्दनम्। तप्ताम्बु।
शीताम्बु। व्रणोदितं सर्व्वम्॥ * ॥

विद्रधावपथ्यम्।

आमावस्थे शोथोक्तान्यपथ्यानि। पक्वावस्थे व्रणो-
क्तान्यपथ्यानि॥ * ॥

अथ व्रणशोथव्रणसद्योव्रणनाड़ीव्रणेषु
पथ्यम्।

विम्लापनम्। रक्तमुक्तिः। उपनाहः। विपा-
टनम्। शोधनम्। रोपणम्। पुराणसित-
शालयः। यवः। षष्टिकः। गोधूमः। जाङ्गलमृग-
पक्षिणः। विलेपी। लाजसक्तुः। कटुतैलम्।
घृतम्। मधु। तैलम्। मसूरम्। तुवरी।
मुद्गयूषः। शर्करा। आयाढ़फलम्। वार्त्ताकुः।
कर्कोटकम्। पटोलम्। कारवेल्लम्। निम्ब-
पत्रम्। वेत्राग्रम्। बालमूलकम्। सुनिषण्ण-
कम्। शालिञ्चशाकम्। तण्डुलीयः। वास्तू-
कम्। त्रिफला। पनसम्। चोचम्। दाड़ि-
मम्। कटुकाफलम्। जीवन्ती। सैन्धवम्।
द्राक्षा। स्वादुतिक्तकषायाः। स्निग्धोष्णद्रवो-
त्तरान्नम्। एषणम्। शमनम्। दाहः। स्वेद-
नम्। बन्धनक्रिया। व्रणावचूर्णनम्। लेपः।
धूपनम्। पत्रधारणम्। उष्णीषम्। तालवृन्त-
नम्। चन्दनम्। तिलजपनम्। तप्तशीताम्बु।
कर्पूरम्। पक्वतः परा वेधता॥ * ॥

व्रणशोथव्रणसद्योव्रणनाड़ीव्रणेषु अपथ्यम्।

नवधान्यम्। तिलः। कलायः। माषः। कुलत्थः।

मस्तुर्यामपथ्यम् ।

रतम् । स्वेदः । श्रमः । तैलम् । गुर्व्वन्नम् । क्रोधः । आतपः । दुष्टाम्बु । दुष्टपवनः । विरुद्धाशनम् । निष्पावः । आनूपशाकम् । लवणम् । विषमाशनम् । कटु । अम्लम् । वेगरोधः ॥ * ॥

अथ क्षुद्ररोगे पथ्यापथ्यम् । यथा,—
क्षुद्ररोगेषु सर्व्वेषु नानारोगानुकारिषु ।
दोषान् दुष्यानवस्थाञ्च निरीक्ष्य मतिमान् भिषक् ।
तस्य तस्य च रोगस्य पथ्यापथ्यानि सर्व्वशः ।
यथादोषं यथादुष्टं यथावस्थञ्च कल्पयेत् ॥ * ॥

अथ मुखरोगे पथ्यम् ।

स्वेदः । विरेकः । वमनम् । गण्डूषः । प्रतिसारणम् । कवलः । अस्तृक्स्रुतिः । नस्यम् । धूमः । शस्त्राग्निकर्म्मणी । तृणधान्यम् । यवः । मुद्गः । कुलत्थः । जाङ्गलरसः । इष्टतृप्रोष्ठी । कारवेल्लम् । पटोलम् । बालमूलकम् । कर्पूरनीरम् । ताम्बूलम् । तप्ताम्बु । खदिरः । घृतम् । कटु । तिक्तम् ॥ * ॥

मुखरोगे अपथ्यम् ।

दन्तकाष्ठम् । स्नानम् ॥ अम्लम् । मत्स्यः । आनूपामिषम् । दधि । क्षीरम् । गुड़ः । माषम् । रूक्षान्नम् । कठिनाशनम् । अधोमुखशयनम् । गुरु । अभिष्यन्दकारि । दिवानिद्रा ॥ * ॥

अथ कर्णरोगे पथ्यम् ।

स्वेदः । विरेकः । वमनम् । नस्यम् । धूमः । शिराव्यधः । गोधूमः । शालिः । मुद्गः । यवः । प्रतनहविः । लावः । मयूरः । हरिणः । तित्तिरिः । वनकुक्कुटः । पटोलम् । शिग्रु । वार्त्ताकुः । सुनिषण्णम् । कठिल्लकम् । रसायनपथ्यम् । ब्रह्मचर्य्यम् । अभाषणम् ॥ * ॥

कर्णरोगे अपथ्यम् ।

विरुद्धान्नपानम् । वेगरोधः । प्रजल्पनम् । दन्तकाष्ठम् । शिरःस्नानम् । व्यवायः । श्लेष्मलम् । गुरु । कण्डूयनम् । तुषारः ॥ * ॥

अथ नासारोगे पथ्यम् ।

निर्व्वातनिलयस्थितिः । प्रगाढ़ोष्णीषधारणम् । गण्डूषः । लङ्घनम् । नस्यम् । धूमः । छर्द्दिः । शिराव्यधः । कटुचूर्णं नासारन्ध्रे निःक्षिप्य क्षिः प्रवेशनम् । स्वेदः । स्नेहः । शिरोऽभ्यङ्गः । पुराणा यवशालयः । कुलत्थमुद्गयोर्यूषः । ग्राम्यजाङ्गलजा रसाः । वार्त्ताकुः । कुलकम् । शिग्रु । कर्कोटः । बालमूलकम् । लशुनम् । दधि । तप्ताम्बु । वारुणी । कटुत्रयम् । कटु । अम्लम् । लवणम् । स्निग्धम् । उष्णम् । लघुभोजनम् ॥ * ॥

नासारोगे अपथ्यम् ।

विरुद्धान्नम् । दिवास्वप्नः । अभिष्यन्दि । गुरूणि । स्नानम् । क्रोधः । शकृन्मूत्रवाय्वाद्यानां वेगधारणम् । शोकः । द्रवम् । भूशय्या ॥ * ॥

अथ नेत्ररोगे पथ्यम् ।

आश्च्योतनम् । लङ्घनम् । अञ्जनम् । स्वेदः । विरेकः । प्रतिसारणम् । प्रपूरणम् । नस्यम् । असृङ्मोक्षः । शस्त्रक्रिया । लेपनम् । आज्यपानम् । सेकः । मनोनिर्वृतिः । वह्निपूजा । मुद्गः । यवः । लोहितशालिः । लावः । मयूरः । वनकुक्कुटः । कूर्म्मः । कुलिङ्गः । कपिञ्जलः । कौर्म्मं हविः । वन्यकुलत्थयूषः । पेया । विलेपी । लशुनम् । पटोलम् । वार्त्ताकुः । कर्कोटकः । कारवेल्लम् । नवीनमोचम् । नवमूलकम् । पुनर्नवा । मार्कवः । काकमाची । पत्तूरशाकम् । कुमारिका । द्राक्षा । कुस्तुम्बुरु । सागरमन्थम् । लोध्रम् । वरा । क्षौद्रम् । उपानहौ । नारीपयः । चन्दनम् । इन्दुखण्डम् । तिक्तम् । लघु ॥

नेत्ररोगे अपथ्यम् ।

क्रोधः । शोकः । मैथुनम् । अश्रुवायुविण्मूत्रनिद्रावमीनां वेगरोधः । सूक्ष्मेक्षणम् । दन्तविघर्षणम् । स्नानम् । निशाभोजनम् । आतपः । प्रजल्पनम् । छर्द्दनम् । अम्बुपानम् । मधूकपुष्पम् । दधि । पत्रशाकम् । कठिल्लम् । पिण्याकः । विरूढ़ान्नम् । मत्स्यः । सुरा । अजाङ्गलमांसम् । ताम्बूलम् । अम्लम् । लवणम् । विदाहि । तीक्ष्णम् । कटु । उष्णम् । गुर्व्वन्नपानम् ॥ * ॥

अथ शिरोरोगे पथ्यम् ।

स्वेदः । नस्यम् । धूमपानम् । विरेकः । लेपः । छर्द्दिः । लङ्घनम् । शीर्षवस्तिः । रक्तोन्मुक्तिः । वह्निकर्म्म । उपनाहः । जीर्णसर्पिः । शालिः । षष्टिकः । यूषः । दुग्धम् । धन्वमांसम् । पटोलम् । शिग्रु । द्राक्षा । वास्तूकम् । कारवेल्लम् । आम्रम् । धात्री । दाड़िमम् । मातुलुङ्गम् । तैलम् । तक्रम् । काञ्जिकम् । नारिकेलम् । पथ्या । कुष्ठम् । भृङ्गराजः । कुमारी । मुस्तः । उशीरम् । चन्द्रिका । गन्धसारः । कर्पूरम् ॥ * ॥

शिरोरोगे अपथ्यम् ।

क्षवजृम्भमूत्रवास्पनिद्राविष्ठानां वेगधारणम् । अञ्जनम् । दुष्टनीरम् । विरुद्धान्नम् । सह्यविन्ध्यसरिज्जलम् । दन्तकाष्ठम् । दिवानिद्रा ॥ * ॥

अथ स्त्रीरोगे पथ्यापथ्यम् ।

यत्पथ्यं यदपथ्यञ्च रक्तपित्तेषु कीर्त्तितम् ।
प्रदरेषु यथादोषं तत्तन्नारी भजेत्त्यजेत् ॥
वातव्याधिमतां पथ्यमपथ्यञ्च यदीरितम् ।
योनिव्यापत्सु सर्व्वासु तद्विद्याच्च यथामलम् ॥ * ॥

अथ गर्भिणीपथ्यम् ।

शालिः । षष्टिकः । मुद्गः । गोधूमः । लाजशक्तुः । नवनीतम् । घृतम् । क्षीरम् । रसाला । मधु । शर्करा । पनसम् । कदलम् । धात्री । द्राक्षा । अम्लम् । स्वादु । शीतलम् । कस्तूरी । चन्दनम् । माला । कर्पूरम् । अनुलेपनम् । चन्द्रिका । स्नानम् । अभ्यङ्गः । मृदुशय्या । हिमानिलः । सन्तर्पणम् । प्रियवाक् । मनोरमविहारः । प्रियङ्गरान्नपानम् ॥ * ॥

गर्भिण्या अपथ्यम् ।

स्वेदनम् । वमनम् । क्षारः । कलहः । विषमाशनम् । अमान्नम् । नक्तसञ्चारः । चौर्य्यम् । अप्रियदर्शनम् । अतिव्यवायः । आयासः । भारः । गुरुप्रावरणम् । अकालजागरणं स्वप्नञ्च । कठिनोत्कटकासनम् । शोकः । क्रोधः । भयम् । उद्वेगः । श्रद्धा । वेगविधारणम् । उपवासः । अध्वगमनम् । तीक्ष्णोष्णगुरुविष्टम्भिभोजनम् । रक्तम् । निरशनम् । श्वभ्रकूपेक्षणम् । मद्यम् । आमिषम् । उत्तानशयनम् । स्त्रीणामनीप्सितम् ॥ * ॥

अष्टममासमारभ्य गर्भिण्या अपथ्यं यथा,—
तथा रक्तस्रुतिं शुद्धिं वस्तिमायाच्चतोऽष्टमात् ।
एभिर्गर्भः स्रवेदामः कुक्षौ शुष्येन्म्रियेत वा ॥
भजेन्न नित्यं तिक्ताम्लकटूष्णकषायकान् ।
वातलैश्च भवेद्गर्भः कुब्जान्धजड़वामनः ॥
पित्तलैः खलती पिङ्गः श्वित्री पङ्गः कफात्मभिः ।
अपथ्यमिदमुद्दिष्टं गर्भिणीनां महर्षिभिः ॥ * ॥

अथ प्रसूतायाः पथ्यम् ।

लङ्घनम् । मृदुस्वेदः । गर्भकोष्ठविशोधनम् । अभ्यञ्जनम् । तैलपानम् । कटुतिक्तोष्णसेवनम् । दीपनम् । पाचनम् । मद्यम् । पुराणषष्टिशालयः । कुलत्थः । लशुनम् । शिग्रु । वार्त्ताकुः । बालमूलकम् । पटोलम् । मातुलुङ्गम् । ताम्बूलम् । दाड़िमभक्षणम् । श्लेष्मानिलघ्नानि । सप्ताहात् परं किञ्चित् बृंहणम् । द्वादशाहात् परं आमिषम् । सार्द्धमासात् परं आहारादियन्त्रणात्यागः ॥ * ॥

प्रसूताया अपथ्यम् ।

श्रमः । नस्यम् । रक्तस्रुतिः । मैथुनम् । विषमाशनम् । विरुद्धान्नम् । वेगरोधः । असात्म्यम् । अतिभोजनम् । दिवानिद्रा । अभिष्यन्दि । विष्टम्भि गुरुभोजनम् ॥
सूतिकाख्येषु रोगेषु वातश्लेष्मोचितानि च ।
तत्तद्रोगानुकूल्येन पथ्यापथ्यानि निर्द्दिशेत् ॥ * ॥

अथ बालरोगे पथ्यापथ्यम् ।

नृणां ज्वरादिषु यत् पथ्यापथ्यं बालानामौचित्यात् तद्विधेयम् । मन्दाग्नौ यत् पथ्यापथ्यं बालानां पारिगर्भिके तद्विधेयम् । आगन्तुकोन्मादिनां यत् पथ्यापथ्यं बालानां ग्रहरोगिणां तद्योज्यम् ॥ * ॥

अथ विषरोगे पथ्यम् ।

अरिष्टाबन्धनम् । मन्त्रक्रिया । छर्द्दिः । विरेचनम् । रूक्षणम् । शोणिताकृष्टिः । परिषेकः । अवगाहनम् । हृदयावरणम् । नस्यम् । अञ्जनम् । प्रतिसारणम् । उत्कर्त्तनम् । प्रधमनम् । प्रलेपः । वह्निकर्म्म । उपधानम् । प्रतिविषम् ॥ धूपः । संज्ञाप्रबोधनम् । शालिः । षष्टिकः । कोरदूषः । प्रियङ्गुः । मुद्गः । हरेणुः । तैलम् । सर्पिः । शिखितित्तिरिलावैणगोधाशल्यावितामिषम् । वार्त्ताकुः । कुलकम् । धात्री । निष्पावः । तण्डुलीयः । मण्डूकपर्णी । जीवन्ती । सुनिषण्णम् ।

अथ वर्षासु पथ्यम् ।

लवणम् । अम्लम् । मिष्टम् । सारम् । प्रियम् । स्निग्धम् । गुरु । उष्णम् । बल्यम् । अभ्यङ्गः । उद्वर्त्तनम् । अग्निसेवा । तप्तान्नपानम् । दाध ।

वर्षास्वपथ्यम् ।

पूर्व्वपवनः । वृष्टिः । घर्म्मः । हिमः । श्रमः । नदीनीरम् । दिवास्वप्नः । रूक्षम् । नित्यमैथुनम् ॥ * ॥

शरदि पथ्यम् ।

शीतरसाम्बुपानम् । तरुच्छाया । चन्दनम् । इन्दुसेवा । सिता । मुद्गः । सरम् । गव्यदुग्धम् । इक्षुः । शाल्योदनम् ॥ * ॥

शरद्यपथ्यम् ।

लवणम् । अम्लम् । तीक्ष्णम् । कटु । पिष्टम् । अतसी । विदाहि । सुरा । नालम् । दधि । तक्रम् । तैलम् । क्रोधः । उपवासः । आतपः । मैथुनम् ॥ * ॥

अथ हिमर्त्तौ पथ्यम् ।

तप्तजलम् । उपनाहः । पयः । यवान्नम् । पानम् । घृतम् । स्त्रीसेवा । वह्निसेवा । गुरूणि । यथेष्टभुक्तम् ॥ * ॥

हिमर्त्तावपथ्यम् ।

दिवानिद्रा । कुभोजनम् । अभोजनम् । लङ्घनम् । पुरातनान्नम् । लघुपाकि । शैत्यम् । वार्य्योदनम् । शीतजलावगाहः ॥ * ॥

शिशिरे पथ्यम् ।

स्त्री । वह्निसेवा । मत्स्यः । आजमांसम् । दधि । दुग्धम् । सर्पिः ॥ * ॥

शिशिरेऽपथ्यम् ।

तीक्ष्णोष्णकट्वम्लकषायतिक्तानि । वासुमकम् । आर्द्रभोजनम् । दिवानिद्रा । चन्दनम् । चन्द्रसेवा । शीतजलस्नानादि ॥ * ॥

माघे विशेषो यथा ।

माघे च शीतद्रवमिष्टपिष्टं
कान्दः कदल्या गुरुशालिभक्तम् ।

इति षड़्तुपथ्यापथ्याधिकारः ॥ * ॥

आगन्तुकज्वराणां पथ्यापथ्यं ज्वराधिकारे न लिखितमतोऽत्र लिख्यते ।

"अभिघातसमुत्थाने पानाभ्यङ्गौ च सर्पिषः ।
क्षतजे व्रणजे चापि क्षतव्रणचिकित्सितम् ॥
ओषधीगन्धविषजे विषपित्तप्रसाधनम् ।
अभिचाराभिशापोत्थे जपहोमादिभेषजम् ॥
उत्पातग्रहपीड़ोत्थे दानस्वस्त्ययनादयः ।
क्रोधोत्थिते पित्तहरं कामजे कामजित्क्रिया ॥
कामशोकभयोद्भूते सर्व्वा वातहरी क्रिया ।
आश्वासनेष्टलाभो हर्षदायीनि यानि च ॥
विशेषतः पुनश्चात्र कामक्रोधसमुत्थिते ।
भयशोकसमुद्भूते कामक्रोधोक्तमौषधम् ॥
भूताभिषङ्गजे भूतबन्धावेशनताड़नम् ।
मनःक्षोभसमुत्पन्ने मनसः सान्त्वनानि च ॥
इत्यागन्तुज्वरे पूर्व्वैर्भिषग्भिः पथ्यमिष्यते ।
विष्णोर्नामसहस्रस्य पाठनं श्रवणं स्तुतेः ॥
देवानां ब्राह्मणानाञ्च गुरूणामपि पूजनम् ।
ब्रह्मचर्य्यं तपो होमः प्रदानं नियमो जपः ॥
साधूनां दर्शनं सत्यं रत्नौषधिविधारणम् ।
मङ्गलाचरणञ्चेति वर्गः सर्व्वान् ज्वरान् जयेत् ॥"

आगन्तुकज्वरे अपथ्यम् ।

"अधिवामनकर्म्माणि रक्तस्रवस्रधारणम् ।
वमिवेगं दन्तकाष्ठमसात्म्यमपि भोजनम् ॥
विरुद्धान्यन्नपानानि विदाहीनि गुरूणि च ।
दुष्टाम्बुक्षारमम्लानि पत्रशाकं विरूढ़कम् ॥
नलदाम्बु च ताम्बूलं कलिङ्गं लकुचं फलम् ।
आड़ीमत्स्यञ्च पिण्याकं छत्राकं पिष्टकेक्षितम् ॥
अभिष्यन्दीनि चैतानि ज्वरितः परिवर्ज्जयेत् ॥"

इति पथ्यापथ्यविनिश्चयः समाप्तः ॥

पद, स्थैर्य्ये । इति कविकल्पद्रुमः ॥ (भ्वां-परं-अकं-सेट् ।) पदति । इति दुर्गादासः ॥

पद, तु क ङ गतौ । इति कविकल्पद्रुमः ॥ (अदन्त-चुरां-आत्मं-सकं-सेट् ।) क ङ, पदयते । इति दुर्गादासः ॥

पद, य ङ औ गत्याम् । इति कविकल्पद्रुमः ॥ (दिवां-आत्मं-सकं-अनिट् ।) य ङ, पद्यते । औ, पत्ता । इति दुर्गादासः ॥

पदं, क्ली, (पद + 'नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः ।' ३ । १ । १३४ । इति अच् ।) व्यवसायः । त्राणम् । स्थानम् । (यथा, मनुः । १२ । १२५ ।
"एवं यः सर्व्वभूतेषु पश्यत्यात्मानमात्मना ।
स सर्व्वसमतामेत्य ब्रह्माभ्येति परं पदम् ॥")
चिह्नम् । पादः । वस्तु । इत्यमरः । ३ । ३ । ६३ ॥ शब्दः । वाक्यम् । प्रदेशः । पादचिह्नम् । श्लोकपादः । (यथा, हिः रामायणे । १ । २ । १८ ।
"पादबद्धोऽक्षरसमस्तन्त्रीलयसमन्वितः ।
शोकार्त्तस्य प्रवृत्तो मे श्लोको भवतु नान्यथा ॥")
किरणे पुं । इति मेदिनी ॥ पदलक्षणं यथा,—
"वर्णाः पदं प्रयोगार्हानन्वितैकार्थबोधकाः ।"
इति साहित्यदर्पणे । २ । ४ ॥
श्रीकृष्णपदचिह्नं यथा,—
"सौवर्णे राजते वापि पाषाणनिर्म्मितामपि ।
पादयोश्चाङ्कितां कृत्वा पूजाञ्चैव समाचरेत् ॥
दक्षिणस्य पदाङ्गुष्ठमूले चक्रं बिभर्त्त्यजः ।
तत्र नम्रजनस्योग्रसंसारच्छेदनाय सः ॥
मध्यमाङ्गुलिमूले तु धत्ते कमलमच्युतः ।
ध्यातृचित्तद्विरेफाणां लोभमायाति शोभनम् ॥
पद्मस्याधो ध्वजं धत्ते सर्व्वानर्थजयध्वजम् ।
कनिष्ठामूलतो वज्रं भक्तपापाद्रिभेदनम् ॥
पार्ष्णिमध्येऽङ्कुशं भक्तचित्तेभवशकारणम् ।
भोगसम्पन्मयं धत्ते यवमङ्गुष्ठपर्व्वणि ।
तथा वामाङ्गुष्ठमूले पाञ्चजन्यस्य लक्षणम् ।
सर्व्वविद्याप्रकाशाय धत्ते च भगवानजः ॥"
इति पाद्मे पातालखण्डे १२ अध्यायः ॥

पदकः, पुं, पदं वेत्ति यः ("क्रमादिभ्यो वुन् ।" ४ । २ । ६१ । इति वुन् ।) पदज्ञाता । इति व्याकरणम् ॥ यथा, राजतरङ्गिण्याम् । ५ । ४६ ।
"रामनामाख्यमुपाध्यायं ख्यातव्याकरणश्रमम् ।
व्याख्यातपदकाश्चक्रे स तस्मिन् सुरमन्दिरे ॥")
स्वनामख्यातकण्ठभूषणञ्च । देवपदचिह्नादियुक्तत्वात् ॥ (पदमेव इति स्वार्थे के कृते, क्ली । पदम् । यथा, महाभारते अनुशासनपर्व्वणि ।
"इतःप्रभृति यातश्च पदकं पदकं मुनेः ॥")

पदगः, पुं, (पदाभ्यां गच्छतीति । गम ल्गतौ + "अन्येभ्योऽपि ।" इति डः ।) पदातिकः । इत्यमरः । २ । ८ । ६६ ॥ पद्भ्यां गमनकर्त्तरि त्रि ॥

पदन्यासः, पुं, ( पदस्य गोपदस्येव न्यासो यत्र । ) गोक्षुरः । इति शब्दचन्द्रिका ॥ पदस्य विन्यासः । यथा, रसमञ्जरी ।
"पदन्यासो गेहाद्बहिरहिफणारोहणसमः
स्वगेहादन्यत् स्यान्नयनमपरद्वीपतुलितम् ।
वचो लोकालम्ब्यं कृपणधनतुल्यं न्टगदृशः
पुमानन्यः कान्ताद्विधुरिव चतुर्थीसमुदितः ॥"
(तन्त्रोक्तान्नपूर्णामन्त्रस्थपदानां तत्तदङ्गेषु न्यासः । यदुक्तं तन्त्रसारधृतागमार्णवे ।
"एकमेकं पुनर्द्वेकं पुनरेकं न्यसेत्ततः ।
चतुश्चतुस्तथा द्वाभ्यां पदान्यष्टानि पार्व्वति ! ॥
पदान्येतानि देवेशि ! नवद्वारेषु विन्यसेत् ।
ब्रह्मादिगुह्यपर्य्यन्तं पुनस्तेषु वरानने ! ॥
गुह्यादिब्रह्मरन्ध्रान्तं पदानां नवकं न्यसेत् ॥")

पदभञ्जनं, क्ली, ( विभक्तियुक्तानां पदानां भञ्जनं विश्लेषो यत्र । यद्वा, पदानि भज्यन्तेऽनेन । भञ्ज + करणे ल्युट् ।) निरुक्तम् । गूढ़ार्थशब्दव्याख्या । इति हेमचन्द्रः ॥

पदभञ्जिका, स्त्री, (पदानां भञ्जिका विश्लेषिका ।) पञ्जिका । टिप्पनी । इति हेमचन्द्रः ॥

पदमाला, स्त्री, (पदानां माला विस्तृतिर्यस्याम् ।) मोहनशीला विद्या । यथा,—
"पदमालां महाविद्यां सर्व्वदेवनमस्कृताम् ।
वाचयामि सुरेशानसमादेशाद्धारिणम् ॥"
इति देवीपुराणे ६ अध्यायः ॥
अस्या विवरणं तत्रैव द्रष्टव्यम् । पदश्रेणी च ॥

पदविः स्त्री, ( पद्यते गम्यतेऽनया । पद गतौ + "पदादिभ्यामविः ।" इति अविः । ) पद्धती । पन्थाः । इत्यमरः । २ । १ । १५ ॥

पदवी, स्त्री, (पदवि + "कृदिकारादक्तिनः ।" इति पक्षे ङीष् ।) पन्थाः । इत्यमरः ।२।१।१५॥ (यथा, रघुः । ७ । ७ ।
"उत्पक्ष्मलीलागतिरागवाधादुत्सृष्टकाञ्ची पदवीं ततान ॥"
पद्धतिः । यथा, तत्रैव । ३ । ५० ।
"अतं प्रयत्नेन तवात्र मा निधाः
पदं पदव्यां सगरस्य सन्ततेः ॥"
पदम् । यथा, पञ्चतन्त्रे । १ । २५८ । "अथ तेन सिंहाय अमात्यपदवी प्रदत्ता व्याघ्राय शय्यापालत्वमिति ॥")

पदष्ठीवं, क्ली, (पादौ च अष्ठीवन्तौ च तयोः समाहारः । "अचतुरविचतुरेति ।" ५।४।७७। इति

निपातनात् सिद्धम् ।) युगपदुपस्थितचरण-यातुनी । इति व्याकरणम् ॥

पदाङ्क पुं (पदस्य अङ्कश्चिह्नम् ।) क्रमाङ्कः । पादचिह्नम् । यथा —

'शाके शायकवेदषोडशमिते श्रीश्यामधामार्पयन्नानन्दप्रदनन्दनन्दनपदद्वन्द्वारविन्दं हृदि ।
चक्रे कृष्णपदाङ्कदूतमतुलं प्रीतिप्रदं श्रृण्वतां
धीरः श्रीरघुरामरायनृपतेराज्ञां गृहीत्वादरात् ॥'
इति पदाङ्कदूतकाव्यम् ॥

पदाङ्गी स्त्री (हंसस्य पदमिव अङ्गं यस्याः । स्त्रियां ङीष् ।) हंसपदी । इति राजनिर्घण्टः ॥

पदाजि पुं (पादाभ्यामजतीति । अज गतौ + 'पादे च ।' उणां । ४।१३१ । इति पादे चोपपदे अजेरिण् । 'पादस्य पदाज्यातिगोपहतेषु ।' ६।३।५२ । इति पदादेशः । बहुलवचनात् अजेर्व्यभावः ।) पदातिकः । इत्यमरः । २ । ८ । ६६ ॥

पदातः पुं (पादाभ्यामततीति । पद् + अत + अच् ।) पादातिकः । इति शब्दरत्नावली ॥

पदातिः पुं (पादाभ्यामतति गच्छतीति 'पादे च ।' उणां ४।१३१ । इति पाद + अति + इण् । 'पादस्य पदाज्यातिगोपहतेषु । ६।३।५२ । इति पदादेशः ।) पदातिकः । पेयादा इति भाषा । तत्पर्य्यायः । पत्ति २ पदग ३ पादातिकः ४ पदाजि ५ पद्ग ६ पदिक ७ । इत्यमरः । २ । ८ । ६६ ॥ पदातिक ८ पादात ९ पादाविक १० पदात ११ पायिक १२ शवरालि १३ । इति शब्दरत्नावली ॥ (यथा महाभारते । १ । १३९ । ३१ ।

'गजानश्वान् रथांश्चैव पातयामास पाण्डवः ।
पदातींश्च रथांश्चैव व्यवधीदर्ज्जुनाग्रजः ॥' )

पदातिकः, पुं, (पदाति + स्वार्थे कन् ।) पदातिः । इति शब्दरत्नावली ॥

पदारः पुं (पदं ऋच्छति प्राप्नोतीति । ऋ + अण् ।) पादधूलिः । पादालिन्दः । इति मेदिनी ॥

पदार्थः, पुं पदानां घटपटादीनां अर्थोऽभिधेयः । तत्पर्य्यायः । भावः २ धर्म्मः ३ तत्त्वम् ४ सत्त्वम् ५ वस्तु ६ । इति जटाधरः ॥ * ॥ (पदार्थाः हि दर्शनमतभेदेन नानाविधाः । तत्र वैशेषिकाणां मते ।) सप्त पदार्थाः । यथा,—

'द्रव्यं गुणास्तथा कर्म्म सामान्यं सविशेषकम् ।
समवायस्तथाभावः पदार्थाः सप्त कीर्त्तिताः ॥'
"सप्तानामपि साधर्म्म्यं ज्ञेयत्वादिकमिष्यते ।
द्रव्यादयः पञ्च भावा अनेके समवायिनः ॥
सत्तावन्तस्त्रयस्त्वाद्या गुणादिर्निर्गुणक्रियः ॥
इति भाषापरिच्छेदे । २, १४ ॥

'एते पदार्था वैशेषिकप्रसिद्धाः । नैयायिकानामप्यविरुद्धाः ।" इति सिद्धान्तमुक्तावली । गौतमोक्तषोडशपदार्थास्तु न्यायशब्दे द्रष्टव्याः ॥ (कपिलमते प्रकृत्यादयः पञ्चविंशतिः । पातञ्जलमते तु ईश्वरेण सह षड्विंशतिः । वेदान्तमते आत्मानात्मभेदात् द्विविधः । तत्र आत्मापि द्विविधः ईश्वरजीवादुपाधिभेदात् । एतावपि विद्याविद्याभेदेन द्विविधौ । केवलमविद्योपहितत्वाभेदव्यवहारः । अनात्मापि कारणसूक्ष्मस्थूलभेदात् त्रिविध इति ॥)

पदासनं क्ली, (पदं पादस्य वा आसनम् ।) पादपीठम् । इति हेमचन्द्रः ॥ पा राखा टुल । इति भाषा ॥

पदिकः, पुं (पादेन चरतीति । पाद + 'पपादिभ्यष्ठन् ।" ४।४।१० । इति ष्ठन् । ततः पदादेशश्च ।) पदातिः । इत्यमरः । २ । ८ । ६७ ॥

पद्गः, पुं (पद्भ्यां गच्छतीति । पद + गम् + 'अन्येष्वपीति ड ।) पदातिकः । इत्यमरः । २।८।६७॥

पद्धतिः } स्त्री (पद्भ्यां हन्ति गच्छतीति । हन
पद्धती, } गतौ + क्तिन् । 'हिमकाषिहतिषु च ।" ६।३।५४। इति पद्भावः । बह्वादिभ्यश्च । ४।१।४५ । इति वा ङीष् ।) वर्त्म । (यथा रघुः ३।४६ ।

'पथः श्रुतेर्दर्शयितार ईश्वरा
मलीमसामाददते न पद्धतिम् ॥')

पङ्क्तिः । इति मेदिनी ॥ ग्रन्थार्थबोधकग्रन्थः । इति हेमचन्द्रः ॥ पदवी । सा च घोषवसुमित्रादिरूपा । यथा । 'षष्ठेऽष्टमाऽशे मासि यद्वेष्टं मङ्गलं कुले इति मनुवचनात् चूडाकार्य्या यथाकुलमिति याज्ञवल्क्यवचनात् देशानुशिष्टं कुलधर्म्ममुग्रं सगोत्रधर्म्मं नहि सन्त्यजेच्च इति वामनपुराणाच्च संस्कारमात्रे कुलधर्म्मानुरोधेन कालान्तरे मङ्गलविशेषाचरणवत् शूद्राणां नामकरणे वसुघोषादिरूपपद्धतियुक्तनामलक्ष्म बोध्यम् । एवमेव कुल्लूकभट्टः ।' इत्युद्वाहतत्त्वम् ॥

पद्धिमं, क्ली, (पादस्य हिमम् । "हिमकाषिहतिषु च ।' ६।३।५४ । इति पद्भावः ।) पदस्य शीतलता । इति संक्षिप्तसारव्याकरणम् ॥

पद्मं क्ली पुं (पद्यते इति । पद गतौ + 'अर्त्तिस्तुसुहुसृ इति । उणां । १ । १३९ । इति मन् । यद्वा पद्मा लक्ष्मीरस्त्यस्मिन् । 'अर्श आदिभ्योऽच् ।' ५।२।१२७ । इति अच् ।) स्वनामख्यातपुष्पविशेषः । तत्पर्य्यायः । नलिनम् २ अरविन्दम् ३ महोत्पलम् ४ सहस्रपत्त्रम् ५ कमलम् ६ शतपत्त्रम् ७ कुशेशयम् ८ पङ्केरुहम् ९ तामरसम् १० सारसम् ११ सरसीरुहम् १२ विसप्रसूनम् १३ राजीवम् १४ पुष्करम् १५ अम्भोरुहम् १६ । इत्यमरः । १ । १० । ३९ ४० ॥ पङ्कजम् १७ अम्भोजम् १८ अम्बुजम् १९ सरसिजम् २० श्रीवासम् २१ श्रीपर्णम् २२ इन्दिरालयम् २३ जलेजातम् २४ अब्जम् २५ कञ्जम् २६ नलम् २७ नालीकम् २८ नालिकम् २९ वनजम् ३० अम्बुजन्म ३१ पुटकम् ३२ अज ३३ । इति शब्दरत्नावली ॥ अस्य गुणाः । कषायत्वम् । मधुरत्वम् । शीतत्वम् । पित्तकफास्रनाशित्वञ्च । इति राजवल्लभः ॥ अन्यद्विवरणं कमलशब्दे द्रष्टव्यम् ॥ * ॥ पद्मकम् । सप्तगजस्य मुखाद्यङ्गस्थो बिन्दुसमूहः । व्यूहविशेषः । (यथा मनुः ७ । १८८ ।

'यतश्च भयमाशङ्केत्ततो विस्तारयेद्बलम् ।
पद्मेन चैव व्यूहेन निविशेत सदा स्वयम् ॥')

निधिभेदः । (यथा महाभारते । २ । १० । २६ ।

'निधिप्रवरमुख्यौ च शङ्खपद्मौ धनेश्वरौ ।
सर्व्वान्निधीन् प्रगृह्याथ उपास्ते वै धनेश्वरम् ॥')

संख्यान्तरम् । तच्च दशार्बुदम् । (यथा, महाभारते ।

'अयुतं प्रयुतञ्चैव पद्मं खर्व्वमथार्ब्बुदम् ॥')

दशशतञ्च इति मेदिनी ॥ पद्मकाष्ठौषधिः । इति धरणिः ॥ पुष्करमूलम् । सीसकम् । इति राजनिर्घण्टः (कल्पविशेषः । यथा मार्कण्डेये ४७।३ ।

"पद्मावसाने प्रलये निशासुप्तोत्थितः प्रभुः ।
सत्त्वोद्रिक्तस्तदा ब्रह्मा शून्यं लोकमवैक्षत ॥')

शरीरस्थषट्पद्मानि यथा —

'मूलाधारे त्रिकोणाख्ये इच्छाज्ञानक्रियात्मके ।
मध्ये स्वयम्भुलिङ्गन्तु कोटिसूर्य्यसमप्रभम् ॥
तदूर्द्ध्वे कामबीजन्तु कलशान्तेन्दुनादकम् ।
तदूर्द्ध्वे तु शिखाकारा कुण्डली ब्रह्मविग्रहा ॥
तद्बाह्ये हेमवर्णाभं वसवर्णचतुर्द्दलम् ।
द्रुतहेमसमप्रख्यं पद्मं तत्र विभावयेत् ॥
तदूर्द्ध्वेऽग्निसमप्रख्यं षड्दलं हीरकप्रभम् ।
वादिलान्तषड्वर्णेन युक्ताधिष्ठानसंज्ञकम् ॥
मूलमाधारषट्कानां मूलाधारं ततो विदुः ॥ १ ॥
स्वशब्देन परं लिङ्गं स्वाधिष्ठानं ततो विदुः ॥ २ ॥
तदूर्द्ध्वे नाभिदेशे तु मणिपूरं महाप्रभम् ।
मेघाभं विद्युदाभञ्च बहुतेजोमयं ततः ॥
मणिवद्भिन्नं तत् पद्मं मणिपूरं तथोच्यते ।
दशभिश्च दलैर्युक्तं डादिफान्ताक्षरान्वितम् ॥
शिवेनाधिष्ठितं पद्मं विश्वालोकैककारणम् ॥ ३ ॥
तदूर्द्ध्वेऽनाहतं पद्ममुद्यदादित्यसन्निभम् ।
कादिठान्ताक्षरैरर्कपत्रैश्च समधिष्ठितम् ॥
तन्मध्ये वाणलिङ्गन्तु सूर्य्यायुतसमप्रभम् ।
शब्दब्रह्ममयं शब्दोऽनाहतस्तत्र दृश्यते ॥
तेनाहताख्यं पद्मन्तु मुनिभिः परिकीर्त्तितम् ।
आनन्दसदनं तत्तु पुरुषाधिष्ठितं परम् ॥ ४ ॥
तदूर्द्ध्वन्तु विशुद्धाख्यं दलषोडशपङ्कजम् ।
स्वरैः षोडशकैर्युक्तं धूम्रवर्णं महाप्रभम् ॥
विशुद्धिं तनुते यस्मात् जीवस्य हंसलोकनात् ।
विशुद्धं पद्ममाख्यातमाकाशाख्यं महत् परम् ॥ ५ ॥
आज्ञाचक्रं तदूर्द्ध्वे तु आत्मनाधिष्ठितं परम् ।
आज्ञासंक्रमणं तत्र गुरोराज्ञेति कीर्त्तितम् ॥ ६ ॥
कैलासाख्यं तदूर्द्ध्वे तु बोधनीन्तु तदूर्द्ध्वतः ।
एवञ्च शिवचक्राणि प्रोक्तानि तव सुव्रत ॥
सहस्राराम्बुजं बिन्दुस्थानं तदूर्द्ध्वमीरितम् ॥'
इति तन्त्रसारः ॥

पद्मः पुं (पद्यते इति । पद गतौ + "अर्त्तिस्तुसुहुसृ इति ।' उणां । १।१३९ । इति मन् ।) दाशरथिः । नागविशेषः । इति धरणिः ॥ (यथा महाभारते । २।९।८ ।

"तक्षकश्च नागस्तथैव पद्मश्चित्रश्च वीर्य्यवान् ॥"

पद्मोत्तरात्मजः । स तु द्वादशजिनचक्रवर्त्त्यन्तर्गतचक्रवर्त्तिविशेषः । वलदेवः । इति हेमचन्द्रः । षोड़शरतिबन्धान्तर्गतप्रथमबन्धः । यथा,—
"हस्ताभ्याञ्च समालिङ्ग्य नारी पद्मासनोपरि ।
रमेद्गाढ़ं समाकृष्य बन्धोऽयं पद्मसंज्ञकः ॥"
इति रतिमञ्जरी ॥

पद्मकं, क्ली, ( पद्ममिव कायतीति । पद्म + कै + कः । पद्मप्रतिकृतिरक्तवर्णत्वात् तथात्वम् । ) बिन्दुजालम् । गजस्य मुखादिस्थो बिन्दुसमूहः । इत्यमरभरतौ ॥ (यथा, कुमारे । १ । ७ श्लोकटीकायां मल्लिनाथः । "अतएव कुञ्जरस्य ये बिन्दवः काये वयोविशेषभाविनः पद्मकाख्याः ।) पद्मकाष्ठम् । इति मेदिनीधरणयौ ॥ ( यथा गारुड़े १६८ अध्याये ।
"कर्पूरकः पद्मकञ्च एतैस्तैलं प्रसाधितम् ।
प्रस्वेदमलदौर्गन्ध्यकण्डुकुष्ठहरं परम् ॥"
अस्य गुणा यथा, भावप्रकाशे ।
"पद्मकं तुवरं तिक्तं शीतलं वातलं लघु ।
विसर्पदाहविस्फोटकुष्ठश्लेष्मास्रपित्तहृत् ।
गर्भसंस्थापनं रुच्यं वमिव्रणतृषाप्रणुत् ॥")
कुष्ठम् । इति राजनिर्घण्टः ॥

पद्मकन्दः, पुं, ( पद्मस्य कन्दः । ) कमलकन्दः । तत्पर्य्यायः । शालूकम् २ पद्ममूलम् ३ कटाह्वयम् ४ शालुकम् ५ नालालूकम् ६ । अस्य गुणाः । कटुत्वम् । विष्टम्भित्वम् । रूक्षत्वम् । रुच्यत्वम् । कषायत्वम् । कफपित्तकासश्लेष्मदाहविनाशित्वञ्च । इति राजनिर्घण्टः ॥ अपि च ।
"पद्मादिकन्दः शालूकं करहाटश्च कथ्यते ।
मृणालमूलं भिशाण्डं शलालुकञ्च कथ्यते ॥
शालूकं शीतलं वृष्यं पित्तदाहास्रनुद्गुरु ।
दुर्जरं स्वादुपाकञ्च स्तन्यानिलकफप्रदम् ॥
संग्राहि मधुरं रूक्षं भिशाण्डमपि तद्गुणम् ॥"
इति भावप्रकाशः ॥

पद्मकाष्ठं, क्ली ( पद्ममिव गन्धवत् काष्ठम् । ) ओषधिविशेषः । तत्पर्य्यायः । पद्मकम् २ पीतकम् ३ पीतम् ४ मालयम् ५ शीतलम् ६ हिमम् ७ शुभम् ८ केदारजम् ९ रक्तम् १० पाटलापुष्पसन्निभम् ११ पद्मवृक्षम् १२ । अस्य गुणाः । शीतलत्वम् । तिक्तत्वम् । रक्तपित्तविनाशित्वम् । मोहदाहज्वरभ्रान्तिकुष्ठविस्फोटशान्तिकारित्वञ्च । इति राजनिर्घण्टः ॥ अपि च भावप्रकाशे ।
"पद्मकं पद्मगन्धि स्यात्तथा पद्माह्वयं स्मृतम् ।
पद्मकं तुवरं तिक्तं शीतलं वातलं लघु ॥
विसर्पदाहविस्फोटकुष्ठश्लेष्मास्रपित्तहृत् ।
गर्भसंस्थापनं रुच्यं वमिव्रणतृषाप्रणुत् ॥"
इति भावप्रकाशः ॥

पद्मकी [ न्, ] पुं, ( पद्मकं बिन्दुजालमस्त्यस्य । इनिः । ) भूर्जवृक्षः । इति शब्दमाला ॥

पद्मकेशरः, पुं क्ली, ( पद्मस्य केशरः । ) किञ्जल्कः । इति राजनिर्घण्टः ॥ ( यथा, इन्द्रजालसंग्रहे ।
"गोचोरैः पेषयेत्तुल्यं पद्मकेशरचन्दनम् ॥")

पद्मगन्ध, पद्मगन्धि, त्रि, ( पद्मस्येव गन्धोऽस्य । "उपमानाच्च ।" ५।४।१३६ । इति इत् । मुग्धबोधमते तु वातूपमानादित्युक्तेर्विभाषा ।) पद्मस्येव गन्धो यस्य तत् । इति मुग्धबोधव्याकरणम् ॥

पद्मगर्भः, पुं, ( पद्मं गर्भः कुक्षिरिव यस्य । विष्णुनाभिकमलजातत्वात् तथात्वम् । ) ब्रह्मा । इति शब्दरत्नावली ॥ ( पद्मस्य हृदयरूपपद्मस्य गर्भे आसनत्वेन कल्पितो यस्य उपासकैरिति शेषः । विष्णुः । यथा, महाभारते । १३।१४९।५१ ।
"पद्मनाभोऽरविन्दाक्षः पद्मगर्भः शरीरभृत् ॥"
"पद्मस्य हृदयाख्यस्य मध्ये उपास्यत्वात् पद्मगर्भः ।"
इति भाष्यम् ॥
शिवः । यथा, तत्रैव १३।१७।१३२ ।
"पद्मगर्भो महागर्भो ब्रह्मगर्भो जलोद्भवः ॥")

पद्मचारिणी, स्त्री ( पद्ममिव चरतीति । चर + णिनिः स्त्रियां ङीप् ॥ ) उत्तरापथभवस्वनामख्यातवृक्षविशेषः ।(स्थलकमलिनी इति ख्याता ॥) तत्पर्य्यायः । अव्यथा २ अतिचरा ३ पद्मा ४ चारटी ५ । इत्यमरः । २ । ४ । १४६ ॥ अस्याः पर्य्यायान्तरं गुणाश्च स्थलपद्मिनीशब्दे द्रष्टव्याः ॥

पद्मतन्तुः, पुं, ( पद्मस्य तन्तुः । ) मृणालम् । इति राजनिर्घण्टः ॥

पद्मदर्शनः, पुं, ( पद्मस्येव दर्शनमस्य । ) श्रीवासः । इति शब्दचन्द्रिका ॥ लोवान् इति भाषा ॥

पद्मनाभः, पुं, ( पद्मं नाभौ यस्य । "अच्प्रत्यन्वयपूर्व्वात् सामलोम्नः ।" ५ । ४ । ७५ । इत्यत्र "अच्" इति योगविभागादच् । ब्रह्मोत्पत्तिकारणीभूतपद्मस्य नाभिजातत्वादस्य तथात्वम् ।) विष्णुः । इत्यमरः । १ । १ । १० ॥ (यथा, महाभारते । १३ । १४९ । १९ ॥
"अप्रमेयो हृषीकेशः पद्मनाभोऽमरप्रभुः ॥")
शयने तस्य स्मरणीयत्वं यथा,—
"औषधे चिन्तयेद्विष्णुं भोजने च जनार्द्दनम् ।
शयने पद्मनाभञ्च विवाहे च प्रजापतिम् ॥"
इत्यादि बृहन्नन्दिकेश्वरपुराणम् ॥
(हृदयपद्मस्य नाभौ नाभेरीषदुपरिभागे प्रकाशनात् महादेवः । यथा, महाभारते । १३ । १७ । १०५ ।
"पद्मनाभो महागर्भश्चन्द्रवक्त्रोऽनिलोऽनलः ॥"
पद्ममिव वर्त्तुलाकृतिः नाभिर्यस्य । धृतराष्ट्रपुत्राणामन्यतमः । यथा, महाभारते ।१।६७।९५ ।
"ऊर्णनाभः पद्मनाभस्तथा नन्दोपनन्दकौ ॥"
नागविशेषः । यथा, तत्रैव । १२ । ३५५ । ४ ।
"कृताधिवासो धर्म्मात्मा तत्र चक्षुःश्रवा महान् ।
पद्मनाभो महानाभः पद्म इत्येव विश्रुतः ॥")
भाविजिनविशेषः । इति हेमचन्द्रः ॥ ( स्तम्भनास्त्रविशेषः । यथा, गौः रामायणे १ ।३१।७ ।
"पद्मनाभो महानाभः सुनाभो दुन्दुभिस्वनः ॥")

पद्मनाभिः, पुं, ( पद्मं नाभौ यस्य । अजिति योगविभागस्य असार्व्वत्रिकत्वात् न अच् । ) पद्मनाभः । इति द्विरूपकोषः ॥

पद्मनाल, क्ली, (पद्मस्य नालम् ।) मृणालम् । यथा,
"कर्णिका पद्मनालन्तु मृणालं तन्तुलं बिसम् ॥"
इति हेमचन्द्रः । ४ । २३१ ॥

पद्मपत्रं, क्ली, (पद्मस्य पत्रमिव । पद्मपर्णसादृश्यादस्य तथात्वम् ।) पुष्करमूलम् । इत्यमरः । २ । ४ । १४५ ॥ (यथा, सुश्रुते चिकित्सितस्थाने ५ अध्याये । "शैवलपद्मकपद्मपत्रप्रभृतिभिः ॥"*॥ पद्मस्य पत्रम् ।) कमलदलम् ॥ (यथा, हठयोगदीपिकायाम् । २ । ७० ।
"अन्तः प्रवर्त्तितोदारमारुतापूरितोदरः ।
पयस्यगाधेऽपि सुखात् प्लवते पद्मपत्रवत् ॥" )

पद्मपर्णं, क्ली, ( पद्मस्य पर्णं पत्रम् । ) पद्मपत्रम् । पुष्करमूलम् । इत्यमरटीका ॥

पद्मपलाशलोचनः, पुं, ( पद्मस्य पलाशे पत्रे इव लोचने यस्य । पद्मपुष्पदलाकारचक्षुर्विशिष्टत्वात्तथात्वम् । ) विष्णुः । । यथा,—
"नान्यं ततः पद्मपलाशलोचनात्
दुःखच्छिदन्ते मृगयामि कञ्चन ।
यो मृग्यते हस्तगृहीतपद्मया
श्रियेतरैरङ्ग ! विमृग्यमाणया ॥"
इति श्रीभागवते ४ स्कन्धः ॥

पद्मपाणिः, पुं, ( पद्मं पाणौ यस्य । ) ब्रह्मा । इति शब्दरत्नावली ॥ बुद्धः । सूर्य्यः । इति त्रिकाण्डशेषः ॥ ( पद्महस्तके त्रि ॥ )

पद्मपुष्पः, पुं, ( पद्ममिव पुष्पमस्य । ) कर्णिकारवृक्षः । पिकाङ्गपक्षी । इति शब्दचन्द्रिका ॥

पद्मप्रभः, पुं, (पद्मस्येव प्रभा दीप्तिर्यस्य । ) चतुर्विंशतितत्तार्हदन्तर्गतषष्ठार्हन् । इति हेमचन्द्रः ॥ पद्मतुल्यप्रभायुक्ते त्रि ॥

पद्मप्रिया, स्त्री, ( पद्मानि प्रियाणि यस्याः । ) जरत्कारुमुनिपत्नी । मनसादेवी । इति शब्दरत्नावली ॥ (गायत्रीरूपा महादेवी । यथा, देवीभागवते । १२ । ६ । ८४ ।
"पद्मप्रिया पद्मसंस्था पद्माक्षी पद्मसम्भवा ॥")

पद्मबन्धः, पुं, (पद्मस्येव बन्धो रचना यस्य ।) चित्रकाव्यविशेषः । शब्दालङ्कारप्रभेदः । यथा,
"पद्माद्याकारहेतुत्वे वर्णानां चित्रमुच्यते ।"
अस्य च तथाविधसन्निवेशवशेन चमत्कारविधायिनामपि वर्णानां तथाविधश्रोत्राकाशसमवायविशेषवशेन च चमत्कारविधायिभिर्वर्णैरभेदेनोपचारात्शब्दालङ्कारत्वम् । उदाहरणं यथा, साहित्यदर्पणे ॥
"मारमा सुषमा चारु रुचा मार वधूत्तमा ।
मात्त धूर्त्ततमा वासा सा वामा मेऽस्तु मा रमा ॥"
अत्र पद्मदलेषु वर्णविन्यासक्रमः ॥



पद्मबन्धुः पुं (पद्मस्य कमलस्य बन्धुः । सूर्य्योदये पद्मस्य प्रकाशकतया तथात्वम् ।) सूर्य्यः । इति शब्दरत्नावली ॥ (पद्मेन बध्यते बध्यते असौ निशायां मधुलोभात् इति भावः । बन्ध+उन् ।) भ्रमरः । इति शब्दचन्द्रिका ॥

पद्मभूः पुं (पद्मं विष्णुनाभिभवकमलं भूरुत्पत्तिस्थानं यस्य । (यद्वा पद्मात् भवतीति । भू+क्विप् ।) ब्रह्मा । इति हलायुधः ॥ (अस्योत्पत्तिकथा यथा भागवते । ६ । १ । ८—६ ।
"पराबरेषां भूतानामात्मा यः पुरुषः परः ।
स एवासीदिदं विश्वं कल्पान्तेऽन्यत् किञ्चन ॥
तस्य नाभेः समभवत् पद्मकोषो हिरण्मयः ।
तस्मिन् जज्ञे महाराज । स्वयम्भूश्चतुराननः ॥")

पद्ममुखी स्त्री (पद्मस्य मुखमिव मुखं उत्पत्तिप्रारम्भो यस्याः । स्त्रियां ङीष् ।) दुरालभा । इति शब्दचन्द्रिका ॥ (पद्मस्य मुखमिव मुखं वदनं यस्याः ।) पद्मसदृशमुखविशिष्टे त्रि ॥

पद्मयोनिः पुं (पद्मं विष्णुनाभिकमलं योनिरुत्पत्तिस्थानं यस्य ।) ब्रह्मा । यथा —
"ब्रह्मा च कारणाद्यस्मात् पुत्त्रो भवतु मे भवान् ।
पद्मयोनिरिति ख्यातो मत्प्रियार्थं जगन्मय ॥"
इति कौर्म्मे ८ अध्यायः ॥

पद्मरागः पुं (पद्मस्येव रागो यस्य ।) रक्तवर्णमणिविशेषः । माणिक इति भाषा । तत्पर्य्यायः । शोणरत्नम् २ । लोहितकः ३ । इत्यमरः । २ । ९ । ९२ ॥ लोहितम् ४ । कुरुविन्दकम् ५ । इति शब्दरत्नावली ॥ (बृहत्संहितायां ८२ अध्याये अस्य परीक्षादिकं यथा —
"सौगन्धिककुरुविन्दस्फटिकेभ्यः पद्मरागसम्भूतिः ।
सौगन्धिकजा भ्रमराञ्जनाब्जजम्बूरसद्युतयः ॥
कुरुविन्दभवाः शबला मन्दद्युतयश्च धातुभिर्विद्धाः ।
स्फटिकभवा द्युतिमन्तो नानावर्णा विशुद्धाश्च ॥
स्निग्धः प्रभानुलेपी स्वच्छोऽर्च्चिष्मान् गुरुः सुसंस्थानः ।
अन्तःप्रभोऽतिरागो मणिरत्नगुणाः समस्तानाम् ॥
कलुषा मन्दद्युतयो लेखाकीर्णाः सधातवः खण्डाः ।
दुर्विद्धा न मनोज्ञाः सशर्कराश्चेति मणिदोषाः ॥
भ्रमरशिखिकण्ठवर्णो
दीपशिखासप्रभो भुजङ्गानाम् ।
भवति मणिः किल मूर्द्धनि योऽनर्घ्यः स विज्ञेयः ॥
यस्तं बिभर्त्ति मनुजाधिपतिर्न तस्य
दोषा भवन्ति विषरोगकृताः कदाचित् ।
राष्ट्रे च नित्यमभिवर्षति तस्य देवः
शत्रूंश्च नाशयति तस्य मणेः प्रभावात् ॥
षड्विंशतिः सहस्राण्येकस्य मणेः पलप्रमाणस्य ।
कर्षत्रयस्य विंशतिरुपदिष्टा पद्मरागस्य ॥
अर्द्धपलस्य द्वादश कर्षस्यैकस्य षट् सहस्राणि ।
यच्चाष्टमाषकधृतं तस्य सहस्रत्रयं मूल्यम् ॥
माषकचतुष्टयं दशशतक्रयं
द्वौ तु पञ्चशतमूल्यौ ॥
परिकल्प्यमन्तराले
मूल्यं हीनाधिकगुणानाम् ॥
वर्णन्यूनस्यार्द्धं तेजोहीनस्य मूल्यमष्टांशः ।
अल्पगुणो बहुदोषो मूल्यात् प्राप्नोति विंशांशम् ॥
आधूम्रं भ्रमरकुलं स्वल्पगुणं प्राप्नुयाद्द्विशतभागम् ।
इति पद्मरागमूल्यं पूर्व्वाचार्य्यैः समुद्दिष्टम् ॥)
राजनिर्घण्टोक्तपर्य्यायगुणौ माणिक्यशब्दे द्रष्टव्यौ तस्य वर्णो यथा —
"सिंहले तु भवेद्रक्तं पद्मरागमनुत्तमम् ।
नीलं कालपुरोद्भूतं कुरुविन्दमिति स्मृतम् ॥
अशोकपल्लवच्छायमन्ध्रे सौगन्धिकं विदुः ।
तुम्बुरे छायया नीलं नीलगन्धि प्रकीर्त्तितम् ॥
उत्तमं सिंहलोद्भूतं विहितं तुम्बुरोद्भवम् ।
मध्यमं अधमं ज्ञेयं माणिक्यं चैवमेव तत् ॥" *॥
तथा च ।
बन्धूकगुञ्जासकलेन्द्रगोप
जवासनाशकसमवर्णशोभाः ।
भ्राजिष्णवो दाडिमबीजवर्णा
स्तथापरे किंशुकपुष्पभासः ॥
सिन्दूरपद्मोत्पलकुङ्कुमानां
लाक्षारसस्यापि समानवर्णाः ।
सान्द्रे निरागे प्रभया स्वयैव
भान्ति स्वलक्ष्याः स्फुटमध्यशोभाः ॥
भासोऽथ भासामनुवेधयोग
मासाद्य रश्मिप्रकरेण दूरम् ।
पार्श्वानि सर्व्वाण्यनुरञ्जयन्ति
गुणोपपन्नाः स्फटिकप्रसूताः ॥
कुसुम्भनीलीव्यतिमिश्रराग
प्रत्ययरक्ताम्बरतुल्यभासः ।
तथापरेऽङ्कर्करकण्टकारी
पुष्पत्विषो हिङ्गुलकत्विषोऽन्ये ॥
चकोरपुंस्कोकिलसारसानां
नेत्रावभासश्च भवन्ति केचित् ।
अन्ये पुनर्नातिविपक्वितानां
तुल्यत्विषः कोकनदोदराणाम् ॥
प्रभावकान्तिव्यगुरुत्वयोगै
प्रायः समानाः स्फटिकोद्भवानाम् ।
आनीलरक्तोत्पलचारुभासः
सौगन्धिकाख्या मणयो भवन्ति ॥
यो मन्दरागः कुरुविन्दजेषु
स एव जातः स्फटिकोद्भवेषु ।
निरर्च्चिषोऽन्तर्बहुलीभवन्ति
प्रभावबन्तोऽपि न ततमभानाः ॥
ये तु रावणगङ्गायां जायन्ते कुरुविन्दकाः ।
पद्मरागाः घनं रागं बिभ्राणाः स्फुटार्च्चिषः ॥
तथानुयायिनस्तेषामन्ध्रदेशे तथापरे ।
न जायन्ते तु ये केचित् मूल्यलेशमवाप्नुयुः ॥
तथैव स्फटिकोत्थानां देशे तुम्बरसञ्ज्ञके ।
मध्यमानि प्रजायन्ते स्वल्पमूल्यानि ते स्मृताः ॥ *

अथ जात्यादि ।
"माणिक्यस्य प्रवक्ष्यामि यथा जातिचतुष्टयम् ।
ब्रह्मक्षत्रियवैश्याश्च शूद्रश्चाथ यथाक्रमम् ॥
रक्तश्वेतो भवेद्विप्रस्त्वतिरक्तस्तु क्षत्रियः ।
रक्तपीतो भवेद्वैश्यो रक्तनीलस्तथान्त्यजः ॥
पद्मरागो भवेद्विप्रः कुरुविन्दस्तु बाहुजः ।
सौगन्धिको भवेद्वैश्यो मांसखण्डस्तथान्त्यजः ॥
शोणपद्मसमाकारः खदिराङ्गारसप्रभः ।
पद्मरागो द्विजः प्रोक्तच्छायाभेदेन सर्व्वदा ॥
गुञ्जासिन्दूरबन्धूकनागरङ्गसमप्रभः ।
दाडिमीकुसुमाभासः कुरुविन्दस्तु बाहुजः ॥
हिङ्गुलाभाशोकपुष्पाभमीषत्पीतलोहितम् ।
जवालाक्षारसप्रायं वैश्यं सौगन्धिकं विदुः ॥
आरक्तं कान्तिहीनञ्च स्निग्धञ्च विशेषतः ।
मांसखण्डसमाभासो ह्यन्त्यजः पापनाशनः ॥"
मांसखण्डस्तु नीलगन्धेः संज्ञा ॥ * ॥

अथ दोषाः ।
माणिक्यस्य समाख्याता अष्टौ दोषा मनीषिभिः ।
द्विच्छायश्च द्विरूपश्च सभेदः कर्करस्तथा ॥
अशोभनं काकिलश्च जलं धूम्राभिधश्च वै ।
गुणाश्चत्वार आख्याताश्छायाः षोडश कीर्त्तिताः ॥
छायास्तु पूर्व्वोक्ता एव ।
छायाद्वितयसम्बन्धाद्द्विच्छायं बन्धुनाशनम् ।
द्विरूपं द्विपदन्तेन माणिक्येन पराभवः ॥
सभेदो भिन्नमित्युक्तं शस्त्रघातविधायकः ।
कर्करं कर्करायुक्तं पशुबन्धुविनाशकृत् ॥
दुग्धेनेव समालिप्तमपनीपुटमुच्यते ।
अशोभनं समुद्दिष्टं माणिक्यं बहुदुःखदम् ॥
मधुबिन्दुसमच्छायं कोकिलं परिकीर्त्तितम् ।
आयुर्लक्ष्मीयशो हन्ति सदोषं तस्य धारणम् ॥
रागहीनं जलं प्रोक्तं धनधान्यापवाहकम् ।
धूम्रं धूमसमाकारं वैद्युतं भयमावहेत् ॥
तथा —
"शोभाह्नितमयवर्णा ये मणयः पातकारकाः ।
उभयश्च पदं येषां तेन च स्यात् पराभवः ॥
भिन्नेन युद्धे मृत्युः स्यात् कर्करः स्वजनाशकृत् ।
दुग्धेनैव समालिप्तः पुटकं यस्तु सम्भवेत् ॥
दुःखदः स समाख्यातो न शुभे स्यादशोभकः ।
मधुबिन्दुसमा शोभा कोकिलाख्या प्रकीर्त्तिता ॥
नैषाञ्च बहुभेदाः शास्त्रे तु धार्य्याः कदाचन ॥

अथ गुणाः ।
गुरुत्वं स्निग्धता चैव वैमल्यमतिरक्तता ॥
तथा च ।
वर्णाधिक्यं गुरुत्वञ्च स्निग्धता समताच्छता ।
अर्च्चिष्मत्ता महत्ता च मणीनां गुणसंग्रहः ॥ * ॥
फलम्
ये कर्कराच्छिद्रमलोपदिग्धाः
प्रभाविमुक्ताः परुषा विवर्णाः ।
न ते प्रशस्ता मणयो भवन्ति
समानतो जातिगुणैः समस्ताः ॥
दोषोपसृष्टं मणिमप्रबोधात्
बिभर्त्ति यः कश्चन कश्चिदेकम् ।

तम्बनेन आत्मज्ञानानुशीलिनो भवन्ति "सोऽहं" शिवोऽहं" इत्यादि वदन्तस्तत्त्वज्ञानावलम्बनस्य परिचयं प्रयच्छन्ति च । एषामध्यक्षो हि स्वामीत्याख्यया प्रसिद्धः । एते हि तीर्थभ्रमण-निपुणास्तीर्थस्थानस्थाश्च । मतस्य परमहंसस्य शरीरं भूमौ निखातत्वम् । यदुक्तं वायु-संहितायाम् ।

"मृते न दहनं कार्य्यं परमहंसस्य सर्व्वदा ।
कर्त्तव्यं खननं तस्य नाशौचं नोदकक्रिया ॥"

परमहंसस्तु दण्डिपरमहंसावधूतपरमहंसभेदेन द्विविधः । ये तु दण्डं परित्यज्य पारमहंस्य-व्रतावलम्बनं कुर्व्वन्ति ते दण्डिपरमहंसाः । ये चावधूतवृत्त्यनुष्ठानेन परमहंसास्ते एवा-वधूतपरमहंसाः । परं सर्व्वे एव प्रणवोपासकाः इति ॥ * ॥

शुक्लयजुर्व्वेदगत उपनिषद्विशेषः । इति मुक्ति कोपनिषत् ॥ )

परमाणुः, पुं, ( परमः सर्व्वचरमकोऽणुः । ) पृथिव्यादिभूतचतुष्टयानां द्व्यणुकानामवयवः । स च नित्यः निरवयवः ततः किमपिसूक्ष्मं नास्ति । यथा,—

"नित्यानित्या च सा द्वेधा नित्या स्यादणुलक्षणा ।
अनित्या तु तदन्या स्यात् सैवावयवयोगिनी ॥"

पारिमाण्डल्यनामकतत्परिमाणन्तु न कस्यापि कारणम् । यथा,

"पारिमाण्डल्यभिन्नानां कारणत्वमुदाहृतम् ॥"

जलादिपरमाणुरूपस्य नित्यत्वम् । पार्थिवपर-माणुरूपस्यानित्यत्वम् । पार्थिवपरमाणुरूप-स्यानित्यत्वम् । यथा, भाषापरिच्छेदे ॥

"जलादिपरमाणौ तन्नित्यमन्यत् सहेतुकम् ।"

तैरेव परमाणुभिराद्युपादानैर्द्व्यणुकत्रसरेण्वादि-क्रमेण स्थूलक्षितिजलतेजोमरुतः सृजति परमे-श्वरः । यथा आयोजनं परमाणुकर्म्म तथा च सर्गाद्यकालीनं द्व्यणुकारम्भकपरमाणुकर्म्म यत्नजन्यं प्रयत्नवदात्मसंयोगजन्यं वा कर्म्मत्वात् अस्मदादिशरीरकर्म्मवत् इति कुसुमाञ्जलिः ॥ प्रलयेऽतिस्थूलस्थूलनाशानन्तरं परमाणुक्रिया-विभागपूर्व्वसंयोगनाशादिक्रमेण द्व्यणुकनाशा-त्तिष्ठन्ति परमाणव एवेति । यथा,—

"दोधूयमानास्तिष्ठन्ति प्रलये परमाणवः ।"

इति प्राचीनकारिका ॥

तस्य महत्त्वाभावादतीन्द्रियत्वम् । यथा । महत्त्वं षड्विधे हेतुरिति भाषापरिच्छेदः ॥ * ॥

कालविशेषः । यथा, श्रीभागवते ३।११।४-५।

"स कालः परमाणुर्वै यो भुङ्क्ते परमाणुताम् ।
सतो विशेषभुग् यस्तु कालः स परमो महान् ॥
अणुर्द्वौ परमाणू स्यात्त्रसरेणुस्त्रयः स्मृतः ।
जालार्करश्म्यवगतः खमेवानुपतन्नगात् ॥"

अस्यार्थः । एतदेव प्रपञ्चयति स इत्यादिना । सतः प्रपञ्चस्य परमाणुतां परमाण्ववस्थां यो भुङ्क्ते स कालः परमाणुः तस्यैवाविशेषं चाकल्यं यो भुङ्क्ते स परममहान् । अयमर्थः ग्रहर्क्षताराचक्रस्य इत्यादिना यत् सूर्य्यपर्य्यटनं वक्ष्यति तत्र सूर्य्यो यावता परमाणुदेशमति-क्रामति तावान् कालः परमाणुः । यावता च द्वादशराश्यात्मकं सर्व्वं भुवनकोषमतिक्रामति स परममहान् संवत्सरात्मकः तस्यैवावृत्त्या युगमन्वन्तरादिक्रमेण द्विपरार्द्धान्तत्वमिति । तथा च पञ्चमे सूर्य्यगत्यैव कालादिविभागं वक्ष्यति ।५। इदानीं द्व्यणुकादिलक्षणपूर्व्वकं मध्यमकालावस्थां कथयति द्वौ परमाणू अणुः स्यात् त्रयोऽणव-स्त्रसरेणुः स तु प्रत्यक्ष इत्याह जालार्केति गवाक्षप्रविष्टैरर्करश्मिभिरवगतः कोऽसौ योऽति-लघुत्वेन खमेवानुपतन् अगान् गतः । न गामिति पाठे खमेवानुपतन्नवगतः न तु गां पृथ्वीम् । इति श्रीधरस्वामी ॥

परमाण्वङ्गकः, पुं, ( परमाणुरङ्गं यस्य । कप् । ) विष्णुः । इति शब्दमाला ॥

परमात्मा, [ न् ] पुं, ( परमः केवलः आत्मा । ) परं ब्रह्म । तत्पर्य्यायः । अध्योत्ज्योतिः २ चिदात्मा ३ । यथा,—

"परमात्मा परं ब्रह्म निर्गुणः प्रकृतेः परः ।
कारणं कारणानाञ्च श्रीकृष्णो भगवान् स्वयम् ॥"

इति ब्रह्मवैवर्त्ते प्रकृतिखण्डे ७३ अध्यायः ॥

( विष्णुः । यथा, महाभारते । १३ । १४९ ।१५ ।

"पूतात्मा परमात्मा च मुक्तानां परमा गतिः ॥"

महादेवः । यथा, तत्रैव । १३ । १७ । १३७ ।

"प्रीतात्मा परमात्मा च प्रयतात्मा प्रधानधृक् ॥")

परमाद्वैतः, पुं, ( परमः अद्वैतः द्वैतवर्ज्जितः । ) विष्णुः । यथा,—

"नमस्ते ज्ञानसद्भाव नमस्ते ज्ञानदायक ।
नमस्ते परमाद्वैत नमस्ते पुरुषोत्तम ! ॥"

इति गरुडपुराणम् ॥

परमान्नं, क्ली, देवप्रियत्वात् परमसुत्कृष्टमन्नम् । परमाणामुत्कृष्टानां देवादीनामन्नमिति वा । इति भरतः ॥ तत्पर्य्यायः । पायसः २ । इत्य-मरः । २ । ७ । २४ ॥ क्षीरिका ३ । तस्य पाकप्रकारो यथा,—

"शुद्धेऽर्द्धपक्वे दुग्धे तु घृताक्तांस्तण्डुलान् क्षिपेत् ।
ते सिद्धाः क्षीरिका ख्याता सा सिताज्ययुतो-त्तमा ॥"

अस्य गुणाः ।

"क्षीरिका दुर्ज्जरा बल्या धातुपुष्टिप्रदा गुरुः ।
विष्टम्भिनी हरेत् पित्तरक्तपित्ताग्निमारुतान् ॥"

इति भावप्रकाशः ॥

परमायुः, [ स् ] क्ली, ( परमं आयुः । ) जीवित-कालः । यथा,—

"शतं वर्षाणि विंशत्या निशाभिः पञ्चभिः सह ।
परमायुरिदं प्रोक्तं नराणां करिणामिह ॥
अब्दा द्वात्रिंशदश्वानां शुनां द्वादशवत्सराः ।
पञ्चविंशतिवर्षाणि खरस्य करभस्य च ॥
चतुर्व्विंशतिरब्दानां वृषस्य महिषस्य च ।
छागशूकरवस्तादिपशूनां षड्दशान्विताः ॥"

इति शब्दमाला ॥ * ॥

अथायुरानयनम् ।

"अज्ञानादायुषः सर्व्वं विफलं कीर्त्तितञ्च यत् ।
तस्मादानयनं तस्य स्फुटार्थेनभिधीयते ॥
नीचान्तरस्य खेटस्य भागस्तुङ्गगुणो भवेत् ।
चेष्टा केन्द्रन्तु चेत् षड्भादधिकं चक्रशोधितम् ।
नान्यथा तस्य भागादि चेष्टा गुणक उच्यते ।
गुणश्चेत् षष्टि६०तो न्यूनं तदा द्वाभ्यं समा-
नलः ३० ॥
एवं तुङ्गगुणश्चेष्टा गुणो यत् स्यात् तयोर्वधात् ।
मूलं कलादिकं तत् स्यात्गुणकस्फुट उच्यते ॥
अथाश्रयगुणं वक्ष्ये क्षेत्रादिसप्तवर्गजम् ।
वर्गे क्षेत्रादिके स्वर्क्षे ग्राह्यस्त्रिंशत्३० कलागुणः ॥
अधिमित्रगृहे तत्त्व २५ मित्रे विन्त्रंशजातवः ।
२१ । ४० ।
समे पञ्चदश ग्राह्याः शत्रौ स्वत्र्यंशकोरगाः ८।२०
पश्चात्यरौ ५ तदैक्यं यत् क्षेत्रोत्थगुणयुक् पुनः ।
स्वर्क्षे वर्गोत्तमे स्वांशे स्वत्र्यंशे स्यादयं गुणः ॥
अधीष्टर्क्षे युगांशोनस्त्र्यंशोनो मित्रवेश्मनि ।
समे द्व्यंशो रिपौ त्र्यंशो युगांशस्त्वतिशत्रुभे ॥
एवं स्यादाश्रयगुणो विशेषो यः स उच्यते ।
स्वत्र्यंशकः स्वांशको वा वर्गोत्तमगतोऽपि वा ॥
यदि स्यादधिमित्रर्क्षे तदा तत्राश्रये गुणे ।
गजनेत्रे समुद्राक्षी २८।३४ कलाद्यं मिश्रयेद्बुधः ।
एवं मित्रगृहे तद्वद्रूपत्रिंशद्विमिश्रयेत् १६।३० ।
शत्रुक्षेत्रे तु षड्लिप्तां द्वानेत्रविकलां त्यजेत् ॥६।२१
अधिशत्रुगृहे बाणत्र्यब्धी ५ । ४३ लिप्तादिकं त्यजेत् ।
आश्रयस्य गुणस्यास्य वधः स्फुटगुणस्य यः ॥
तन्मूलं कर्म्मयोग्यः स्यादुक्त आयुर्व्विधौ स्मृतः ।
खेटाणाञ्च तनोर्भागाः खाब्धि ४० शिष्टाः कली-
कृताः ॥
पुनः शून्यरसा ६० प्यक्ताः क्रमात् स्यादायुषः
पलम् ।
धनुर्लग्नं ग्रहेणोनं न्यूनं चक्रार्द्धतो यदि ॥
तत्काला स्यात्तदाहारो नायं षड्भाधिके विधिः ।
खखधृत्या १८०० खखाङ्केन ९०० गुणितं पल-
मायुषः ॥
क्रमतः पापसौम्यानां हाराप्तं शोधनं भवेत् ।
खखधृत्यूनहारश्चेद्धारो हारदलं क्रमात् ॥
आयुः पलघ्नं शून्याभ्रं धृत्याप्ता शोधनं तथा ।
आयुःपलं शोधनोनमेवं चक्रार्द्धशोधनम् ॥
चक्रार्द्धशोधने लेकराशौ द्व्यादिग्रहे सति ।
एकस्याधिकवीर्य्यस्य हानिं सत्यः प्रभाषते ॥
आयुःपलं हतं स्वीयैर्गुणैर्योग्यैः कलादिभिः ।
षष्ट्याप्तम् ६० तत् पुनः सूर्य्यसहस्राप्ताः १२०००
समादयः ।
तनोरायुः पलं सूर्य्यः सहस्राप्ताः समादयः ।
चेल्लग्नं बलवद्योन्या राशितुल्याः समास्तथा ॥
द्वादशाहतभागाद्यैर्दिनाद्यैश्चापि संयुताः ।
एवं सूर्य्यादिलग्नानामंशायुः प्रस्फुटं भवेत् ।
दृश्यान्तरितखेटस्य कला आयुःपलं भवेत् ।
तच्चेत् षड्भः कलान्यूनं तदा तां द्विगुणाद्युतम् ॥

एवं परम्पराप्राप्तं तथा राजर्षयो विदुः ।
स कालेनेह महता योगो नष्टः परन्तप ! ॥"
इति श्रीभगवद्गीतायां ४ अध्यायः ॥

परम्पराकं, क्ली, ( परम्परया कायते प्रकाशते इति । कै+कः । परम्परास्थापितपशुहननात् तथात्वम् । ) यज्ञार्थपशुहननम् । तत्पर्य्यायः । शमनम् २ प्रोक्षणम् ३ । इत्यमरः । २।७।२६ ॥ घातनम् ४ वधः ५ । इति शब्दरत्नावली ॥

परम्परीणं, त्रि, ( परांश्च परतरांश्च अनुभवति । "परोवरपरम्परेति ।" ५ । २ । १० । इति खः । प्रकृतेः परम्परभावो निपात्यते । ) परम्पराप्राप्तम् । यथा, भट्टिः । ५ । १५ ।
"लक्ष्मीं परम्परीणां त्वं पुत्रपौत्रीणतां नय ॥"

परुरः, पुं, (पिपर्त्ति देहादिकं पूरयतीति । पॄ+ बाहुलकात् अरुः ।) केशराजः । इति त्रिकाण्डशेषः ॥

परलोकः, पुं, ( परो लोकः । ) लोकान्तरम् । तच्च स्वर्गादि । यथा,—
"समश्नानाल्पभूयिष्ठपाल्यवैमत्यमेत्य यम् ।
लोके प्रयाति पन्थानं परलोकेन नं कुतः ॥"
इति नैषधम् ॥

परलोकगमः, पुं, ( परलोके लोकान्तरे गमो गमनं यस्मात् । ) मृत्युः । इति हेमचन्द्रः ॥

परवशः, त्रि, (परस्य परेषां वा वशः वशीभूतः ।) अन्यवशीभूतः । तत्पर्य्यायः । परायत्तः २ पराधीनः ३ परच्छन्दः ४ परवान् ५ । इति हेमचन्द्रः ॥ ( यथा, मनुः । ४ । १५९ ।
"यद्यत् परवशं कर्म्म तत्तद् यत्नेन वर्ज्जयेत् ।
यद्यदात्मवशन्तु स्यात्तत्तत् सेवेत यत्नतः ॥")

परवाणिः, पुं, ( परं धर्म्मं वाणयति प्रकाशयति । वण शब्दे + णिच् + इन् । धातूनामनेकार्थत्वादत्र प्रकाशार्थः । ) धर्म्माध्यक्षः । वत्सरः । इति मेदिनी ॥ (परं शत्रुं सर्पमित्यर्थः वाणयतीति ।) कार्त्तिकेयवाहनो मयूरः । इति शब्दमाला ॥

परवान्, [ त् ] त्रि, ( परः स्वामी अस्त्यस्य । "तदस्यास्त्यस्मिन्निति ।" ५ । २ । ९४ । इति मतुप् मस्य वः ।) पराधीनः । इत्यमरः ।३।१।१६ ( यथा, रघौ । २ । ५६ ।
"भवानपीदं परवानवैति
महान् हि यत्नस्तव देवदारौ ॥" )

परव्रतः, पुं, ( परं व्रतमस्य । ) धृतराष्ट्रः । इति शब्दरत्नावली ॥

परशं, क्ली, (स्पृशतीति । पृषोदरादित्वात् साधुः । अस्य स्पर्शनात् अपरस्य धातोः स्वर्णत्वं जायते अतोऽस्य तथात्वम् । ) रत्नविशेषः । यथा,—
"मुक्तामाणिक्यपरशमणिरत्नाकरान्वितम् ।
कृष्णशुभ्रहरिद्रक्तमणिराजिविराजितम् ॥"
इति ब्रह्मवैवर्त्ते श्रीकृष्णजन्मखण्डे ४ अध्यायः ॥

परशव्यं, त्रि, परशवे हितम् । तस्मै हितादावुदन्तगवादेर्यत् । इति संक्षिप्तसारसूत्रम् ॥ ( पां उगवादिभ्यो यत् । परशुहितम् । इति व्याकरणम् ॥ )

परशुः, पुं, (परान् शत्रून् शृणाति हिनस्त्यनेनेति । शॄ हिंसायाम् + "आङ्परयोः खनिशॄभ्यां डिच्च ।" उणां । १ । ३४ । इति कुः स च डित् ।) अस्त्रविशेषः । टाङ्गी इति भाषा ॥ तत्पर्य्यायः । पर्शुः २ परश्वधः ३ पर्श्वधः ४ स्वधितिः ५ कुठारः ६ । इति हेमचन्द्रः ॥ ( यथा, मार्कण्डेये । ८९।१४ ।
"ततः परशुहस्तं तमायान्तं दैत्यपुङ्गवम् ।
आहत्य देवी बाणौघैरपातयत भूतले ॥")

परशुधरः, पुं, ( धरतीति धरः । धृ + अच् । ततः परशोर्धरः । ) गणेशः । इति हलायुधः ॥ ( परशुरामः । परशुशस्त्रप्रधानत्वादस्य तथात्वम् ॥ )

परशुरामः, पुं, ( परशुना कुठाराख्यशस्त्रेण रामः रमणं यस्य । परशुशस्त्रघातेनैव दुष्टक्षत्रियवंश्यान् निहत्यात्मानं रमयति इति तात्पर्य्यार्थः । ) भगवतः षोड़शावतारः । यथा,—
"अवतारे षोड़शमे पश्यन् ब्रह्मद्रुहो नृपान् ।
त्रिःसप्तकृत्वः कुपितो निःक्षत्त्रामकरोन्महीम् ॥"
इति श्रीभागवते १ स्कन्धे ३ अध्यायः ॥
तत्पर्य्यायः । जामदग्न्यः २ पर्शुरामः ३ परशुरामकः ४ भार्गवः ५ भृगुपतिः ६ भृगूत्तमः पतिः ७ । इति शब्दरत्नावली ॥ अस्योत्पत्त्यादिकं यथा —
मार्कण्डेय उवाच ।
"अथ काले व्यतीते तु जमदग्निर्महातपाः ।
विदर्भराजस्य सुतां प्रयत्नेन जितां स्वयम् ॥
भार्य्यार्थं प्रतिजग्राह रेणुकां लक्षणान्विताम् ।
सा तस्मात् सुषुवे पुत्त्रान् चतुरो वेदसम्मतान् ॥
रुमण्वन्तं सुषेणञ्च विश्वं विश्वावसुन्तथा ।
पश्चात्तस्यां स्वयं जज्ञे भगवान् मधुसूदनः ॥
कार्त्तवीर्य्यवधायाशु शक्राद्यैः सकलैः सुरैः ।
याचितः पञ्चमः सोऽभूत्तेषां रामाह्वयस्तु यः ॥
भारावतारणार्थाय जातः परशुना सह ।
सहजः परशुस्तस्य तं जहाति कदाच न ॥
अयं निजपितामह्याश्चरुभुक्तिविपर्य्ययात् ।
ब्राह्मणः क्षत्त्रियाचारी रामोऽभूत् क्रूरकर्म्मकृत् ।
स वेदानखिलान् ज्ञात्वा धनुर्वेदञ्च सर्व्वशः ।
स्वतातात् कृतकृत्योऽभूद्वेदविद्याविशारदः ॥"
इति कालिकापुराणे ८५ अध्यायः ॥
अवशिष्टं पाद्मोत्तरखण्डे ५० अध्याये द्रष्टव्यम् ॥
( अयमेव पितुरादेशात् परशुना स्वमातुः शिरश्चिच्छेद ततः प्रसन्नात् पितुर्वरं लब्ध्वा मातरं पुनर्जीवयामास । यदुक्तं महाभारते । ३ । ११६ । ५—१८ ।
"फलाहारेषु सर्व्वेषु गतेष्वथ सुतेषु वै ।
रेणुका स्नातुमगमत् कदाचिन्नियतव्रता ॥
सा तु चित्ररथं नाम मार्त्तिकावतकं नृपम् ।
ददर्श रेणुका राजन्नागच्छन्ती यदृच्छया ॥
क्रीड़न्तं सलिले दृष्ट्वा सभार्य्यं पद्ममालिनम् ।
ऋद्धिमन्तं ततस्तस्य स्पृहयामास रेणुका ॥
व्यभिचाराच्च सा तस्मात् क्लिन्नाम्भसि विचेतना ।
प्रविवेशाश्रमं त्रस्ता तां वै भर्त्ता त्वबुध्यत ॥
स ( जमदग्निः ) तां दृष्ट्वा च्युतां धैर्य्यात् ब्राह्म्या
लक्ष्म्या विवर्ज्जिताम् ।
धिक्शब्देन महातेजा गर्हयामास वीर्य्यवान् ॥
ततो ज्येष्ठो जामदग्न्यो रुमण्वान्नाम नामतः ।
आजगाम सुषेणश्च वसुर्व्विश्वावसुस्तथा ॥
तानानुपूर्व्व्या भगवान् वधे मातुरचोदयत् ।
न च ते जातसम्मोहाः किञ्चिदूचुर्व्विचेतसः ॥
ततः शशाप तान् क्रोधात्ते शप्ताश्चेतनां जहुः ।
मृगपक्षिसधर्म्माणः क्षिप्रमासन् जड़ोपमाः ॥
ततो रामोऽभ्ययात् पश्चादाश्रमं परवीरहा ।
तमुवाच महाबाहुं जमदग्निर्महातपाः ॥
जहीमां मातरं पापां मा च पुत्त्र ! व्यथां कृथाः ।
तत आदाय परशुं रामो मातुः शिरोऽहरत् ॥
ततस्तस्य महाराज ! जमदग्नेर्महात्मनः ।
कोपोऽभ्यगच्छत् सहसा प्रसन्नश्चाब्रवीदिदम् ॥
ममेदं वचनात्तात ! कृतं ते कर्म्म दुष्करम् ।
वृणीष्व कामान् धर्म्मज्ञ ! यावतो वाञ्छसे हृदा ॥
स वव्रे मातुरुत्थानमस्मृतिञ्च वधस्य वै ।
पापेन तेन चास्पर्शं भ्रातॄणां प्रकृतिन्तथा ॥
अप्रतिद्वन्द्वतां युद्धे दीर्घमायुश्च भारत ! ।
ददौ च सर्व्वान् कामांस्तान् जमदग्निर्महा-
तपाः ॥"
अयं पुनर्बलदर्पितं आश्रमात् वत्सहारिणं कार्त्तवीर्य्यार्ज्जुनं हतवान् । अनेन जातामर्षास्तस्यार्ज्जुनस्य सुतास्ततःप्रभृति कालं प्रतीक्षमाणाः कदाचित् रामविरहितमाश्रममागत्य तस्य पितरं जमदग्निं निजघ्नुः । रामस्तु तस्मात् पितृवधामर्षात् त्रिःसप्तकृत्वः पृथिवीं निःक्षत्त्रियामकरोत् । ततो गच्छति काले दाशरथिना रामेण हृतगर्व्वो दक्षिणाशां गत्वा महेन्द्रे गिरौ उग्रेण तपसा कालं यापयति ॥)

परश्वः, [ स् ] व्य, श्वः परदिनम् । आगामिदिनात् परदिनम् । इत्यमरः । ३ । ४ । २२ ॥ अस्य टीका परह्यःशब्दे द्रष्टव्या । गतदिनात् पूर्व्वदिनम् । परशुं इति भाषा ॥ यथा,—
"परश्वश्च महाभाग ! स्नातुं गङ्गाह्रदं गता ।
अवतीर्णा विकृष्टास्मि दुष्टनागेन केनचित् ॥"
इति मार्कण्डेयपुराणे अवीक्षिच्चरितम् ॥

परश्वधः, पुं, (पर+श्वि+अन्येभ्योऽपीति डः । ततः परश्वं दधातीति । "आतोऽनुपेति" ३ । २।३, इति कः । ) कुठारः । इत्यमरः । २ । ८ । ९२ ॥ ( यथा, रघौ । ६ । ४२ ।
धारां शितां रामपरश्वधस्य
सम्भावयत्युत्पलपत्रसाराम् ॥" )

परसंज्ञकः, पुं, ( परा श्रेष्ठा संज्ञा अस्य । ततः कप् । ) आत्मा । इति शब्दरत्नावली ॥

परस्परं, त्रि, ( "सर्व्वनाम्नो द्वे वाच्ये समासवच्च बहुलम् ।" वार्त्ति असमासवद्भावे पूर्व्वपदस्य सुपः सुर्व्वक्तव्यः । कस्कादित्वात् विसर्जनीयस्य सः । ) अन्योन्यम् । इतरेतरम् । यथा,—
"वनानि तोयानि च नेत्रकल्पैः
पुष्पैः सरोजैश्च निलीनभृङ्गैः ।

"परान्नं परवासञ्च नित्यं धर्म्मरतस्त्यजेत् ।"
इति स्मृतिः ॥

संयमदिने तस्य त्याज्यत्वं यथा,—
"कांस्यं मांसं मसूरञ्च चणकं कोरदूषकम् ।
शाकं मधु परान्नञ्च त्यजेदुपवसन् स्त्रियम् ॥"१॥

पारणदिने तस्य त्याज्यत्वं यथा,—
"अभ्यङ्गञ्च परान्नञ्च तैलं निर्म्माल्यलङ्घनम् ।
तुलसीचयनं द्यूतं पुनर्भोजनमेव वा ॥
वस्त्रपीडां तथा क्षारं द्वादश्यां वर्ज्जयेद्बुधः ॥"२॥

तद्भोक्तुर्यागादेर्विफलत्वं यथा,—
"परपाकेन पुष्टस्य द्विजस्य गृहमेधिनः ।
इष्टं दत्तं तपोऽधीतं यस्यान्नं तस्य तद्भवेत् ॥"३॥

तद्भुक्त्वा पुत्त्रोत्पादने दोषो यथा,—
"यस्यान्नेन तु भुक्तेन भार्य्यां समधिगच्छति ।
यस्यान्नं तस्य ते पुत्त्रा अन्नाद्रेतः प्रवर्त्तते ॥"४॥

ब्राह्मणादिस्वामिकान्नभोजने दोषो यथा,—
"ब्राह्मणान्नेन दारिद्र्यं क्षत्त्रियान्नेन प्रेष्यताम् ।
वैश्यान्नेन तु शूद्रत्वं शूद्रान्नेन नरकं व्रजेत् ॥"
इत्येकादशीतत्त्वम् ॥५॥

परान्नभोजनेन तीर्थगमने फलस्याल्पत्वं यथा,—
"षोडशांशं स लभते यः परान्नेन गच्छति ।
अर्द्धं तीर्थफलं तस्य यः प्रसङ्गेन गच्छति ॥"
इति प्रायश्चित्ततत्त्वम् ॥६॥

महागुरुनिपाते तस्य त्याज्यत्वं यथा,—
"अन्यश्राद्धं परान्नञ्च गन्धं माल्यञ्च मैथुनम् ।
वर्ज्जयेद्गुरुपाते तु यावत् पूर्णो न वत्सरः ॥"
इति शुद्धितत्त्वम् ॥७॥

तद्भोक्तुर्मन्त्रसिद्धिहानिर्यथा,—
"जिह्वा दग्धा परान्नेन करौ दग्धौ प्रतिग्रहात् ।
मनो दग्धं परस्त्रीभिः कथं सिद्धिर्वरानने ! ॥"
इति तन्त्रम् ॥८॥

तद्भोजने प्रतिप्रसवो यथा,—
"गुर्व्वन्नं मातुलान्नं वा श्वशुरान्नं तथैव च ।
पितुः पुत्त्रस्य चैवान्नं न परान्नमिति स्मृतिः ॥"
इत्येकादशीतत्त्वम् ॥

परान्नः, त्रि, (परान्नं नित्यमस्यस्य । "अर्श आदिभ्योऽच् ।" ५ । २ । १२७ । इति अच् ।) पराशोपजीवी । तत्पर्य्यायः । परपिण्डादः २ । इत्यमरः । ३ । १ । २० ॥

परापं, त्रि (परागता आपो यस्मात् । "अवर्णान्ताद्वा ।" ६ । ३ । ९७ । इत्यस्य वार्त्तिं इत्यनेन पक्षे अप ईद्भावः ।) पक्षे ईत्वे परीपम् । इति सिद्धान्तकौमुदी ॥

परापरं, क्ली, (परमापिपर्त्ति । आ + पृ + अच् ।) परूषकम् । इति भावप्रकाशः ॥ (अस्य विवरणं परूष शब्दे द्रष्टव्यम् ॥ परञ्चापरञ्च द्वयोः समाहारः ।) परमपरञ्च ॥ (यथा, विष्णुपुराणे । १ । ६ । ९७ ।
"एताश्च सहयज्ञेन प्रजानां कारणं परम् ।
परापरविदः प्राज्ञास्ततो यज्ञान् वितन्वते ॥")

परापरगुरुः, पुं, (परमादपि परः श्रेष्ठः परापरः । पृषोदरादित्वात् साधुः ततः कर्म्मधारयः ।) गुरुविशेषः । स तु भगवती । (यथा,—
"आदौ सर्व्वत्र देवेशि ! मन्त्रदः परमो गुरुः ।
परापरगुरुस्त्वं हि परमेष्ठी त्वहं गुरुः ॥"
इति बृहन्नीलतन्त्रे २ पटलः ॥
(तन्त्रान्तरे च यथा,—
"मन्त्रदाता गुरुः प्रोक्तो मन्त्रस्तु परमो गुरुः ।
परापरगुरुस्त्वं हि परमेष्ठिगुरुस्त्वहम् ॥")

पराभवः, पुं, (पराभूयते इति पराभवनमित्यर्थः । परा + भू + भावे अप् ।) तिरस्कारः । (यथा, मार्कण्डेये । १८ । २८ ।
"मद्यासक्तोऽहमुच्छिष्टो नचैवाहं जितेन्द्रियः ।
कथमिच्छथ मत्तोऽपि देवाः शत्रुपराभवम् ॥")
अस्य पर्य्यायः । न्यक्कारः २ तिरस्क्रिया ३ परिभावः ४ विप्रकारः ५ परिभवः ६ अभिभवः ७ अत्याकारः ८ निकारः ९ । इति हेमचन्द्रः ॥ विनाशः । इति मेदिनी ॥

पराभूतः, त्रि, (पराभूयते स्म । परा + भू + क्त ।) पराजितः । इत्यमरः । २ । ८ । ११२ ॥

परामर्शः, पुं, (परामृश्यते इति । परामर्शनमित्यर्थः । परा + मृश् + भावे घञ् ।) युक्तिः । विवेचनम् । तत्पर्य्यायः । वितर्कः २ उन्नयनम् ३ विमर्षणम् ४ अध्याहारः ५ तर्कः ६ ऊहः ७ । इति हेमचन्द्रः ॥ तर्कशास्त्रे तु व्याप्तिविशिष्टपक्षधर्म्मताज्ञानम् । यथा,—
"व्याप्यस्य पक्षधर्म्मत्वधीः परामर्श उच्यते ॥"
इति भाषापरिच्छेदः ॥
अस्यार्थः "व्याप्तिविशिष्टस्य पक्षेण सह वैशिष्ट्यावगाहि ज्ञानमनुमितिजनकम् । तत्र व्याप्यः पक्षे इति ज्ञानं पक्षो व्याप्यवान् इति ज्ञानं वा ।" इति सिद्धान्तमुक्तावली ॥ स चानुमितिव्यापारः । यथा,—
"व्यापारस्तु परामर्शः करणं व्याप्तिधीर्भवेत् ॥"
इति भाषापरिच्छेदः ॥
अस्यार्थः । "अनुमायामनुमितौ व्याप्तिज्ञानं करणं परामर्शो व्यापारः । तथा हि । येन पुरुषेण महानसादौ धूमे वह्नेर्व्याप्तिर्गृहीता पश्चाच्च स एव पुरुषः क्वचित् पर्व्वतादौ अविच्छिन्नमूलां धूमरेखां पश्यति तदनन्तरं धूमो वह्निव्याप्य इत्येवं रूपं व्याप्तिस्मरणं तस्य पुरुषस्य भवति पश्चाच्च वह्निव्याप्यधूमवान् पर्व्वत इति ज्ञानं भवति स एव परामर्श इत्युच्यते ।" इति सिद्धान्तमुक्तावली ॥

परामृतं, क्ली (परममृतं वारि यस्मात् ।) वर्षम् । इति त्रिकाण्डशेषः ॥ (परममृतं अमरणधर्म्मकं ब्रह्मात्मभूतं यस्य । इति विग्रहे वाच्यलिङ्गः । यथा, मुण्डकोपनिषदि । ३ । २ । ६ ।
"वेदान्तविज्ञानसुनिश्चितार्थाः
संन्यासयोगाद् यतयः शुद्धसत्त्वाः ।
ते ब्रह्मलोकेषु परान्तकाले
परामृताः परिमुच्यन्ति सर्व्वे ॥")

परामृष्टः, त्रि, (परामृश्यते स्म । परा + मृश् + कर्म्मणि क्त ।) सम्बन्धः । सम्बन्धयुक्तः । यथा,—
"क्लेशकर्म्मविपाकाशयैरपरामृष्टः । इति दृग-माङ्गलिककारिकाव्याख्याने रामभद्रः ॥ कृतपरामर्शः । विवेचितः ॥

परायणं, त्रि, व्यासक्तवचनम् । इत्यमरः । ३ । ३ । २ ॥ परं केवलमयनमासक्तिस्थानमिति परायणम् । यथा धर्म्मपरायणो धर्म्मासक्तः । इति भरतः ॥ आश्रयः । (यथा, मनुः । ४ । १० ।
"वर्त्तयंश्च शिलोञ्छाभ्यामग्निहोत्रपरायणः ॥"
तत्परम् । अभीष्टम् । इति मेदिनी ॥ (नित्यप्रतिष्ठा । यथा, रामायणे । २ । ४८ । १७ ।
"पादच्छायासुखं भर्त्तुस्तादृशस्य महात्मनः ।
स हि नाथोजनस्यास्य स गतिः स परायणम् ॥"
"परायणं शाश्वतप्रतिष्ठा ।" इति रामानुजः ॥)

परायत्तं, त्रि, (परस्य परेषां वा आयत्तम् ।) पराधीनम् । यथा,—
"तत्रायत्तवशाधीनच्छन्दवन्तः परात्परे ॥"
इति हेमचन्द्रः ॥

परारि, व्य (पूर्व्वतरे वत्सरे इत्यर्थे "सद्यः परुत्परारीति ।" ५ । ३ । २२ । इति पूर्व्वतरस्य परभावः आरि च संवत्सरे ।) पूर्व्वतरवत्सरे । गततृतीयवर्षे । इत्यमरभरतौ ॥ (परस्य अरिः ।) परशत्रौ त्रि ॥

परारित्नः, त्रि, (परारि भवः । "चिरपरुत्परारिभ्यस्त्नो वक्तव्यः ।" ४ । ३ । २३ । इत्यस्य वार्त्तिं इत्यनेन त्नः ।) पूर्व्वतरवत्सरसम्बन्धी । इति व्याकरणम् ॥

परारुः, पुं, (पराऋच्छतीति । परा + ऋ + उन् ।) कारवेल्लः । इति त्रिकाण्डशेषः ॥ (कारवेल्लशब्देऽस्य गुणादयो ज्ञातव्याः ॥)

परारुकः, पुं, (पराऋच्छतीति । परा + ऋ + उकः ।) प्रस्तरः । इति त्रिकाण्डशेषः ॥

परार्द्धं, क्ली, (परार्द्धति सर्व्वोत्कृष्टतया वर्त्तते इति । ऋधइर वृद्धौ + अच् ।) दशमध्यसंख्या । लक्षलक्षकोटिः । १००,०००,०००,०००,०००,००० इदं चरमसंख्या अष्टादशाङ्कपर्य्यन्तम् । इति हेमचन्द्रः ज्योतिषञ्च ॥ (यथा, नैषधे । ३ । ८० ।
"यदि त्रिलोकीगणनापरा स्यात्
तस्याः समाप्तिर्यदि नायुषः स्यात् ।
पारे परार्द्धं गणितं यदि स्यात्
गणेयनिःशेषगुणोऽपि स स्यात् ॥")
ब्रह्मण आयुषोऽर्द्धम् । यथा,—
"निजेन तस्य मानेन आयुर्वर्षशतं स्मृतम् ।
तत् पराख्यं तदर्द्धञ्च परार्द्धमभिधीयते ॥"
इति कौर्म्मे ५ अध्यायः ॥
(तथा, मार्कण्डेये । ४६ । ४२—४३ ।
"शतं हि तस्य (ब्रह्मणः) वर्षाणां परमित्यभिधीयते ।
पञ्चाशद्भिस्तथावर्षैः परार्द्धमिति कीर्त्त्यते ॥
एवमस्य परार्द्धन्तु व्यतीतं द्विजसत्तम ! ।
यस्यान्तेऽभून्महाकल्पः पाद्म इत्यभिविश्रुतः ॥")

परार्द्ध्यः, त्रि, (परार्द्धं परार्द्धसंख्यावत् प्रधानत्वमर्हतीति । परार्द्ध + यत् यद्वा परस्मिन्नर्द्धे भवः ।
"परावराधमोत्तमपूर्व्वाच्च ।" ४ । ३ । ५ । इति

"परिकरः सहकारी स च याप्तिपक्षधर्मत्वादिः।" इति सामान्यनिरुक्तौ जगदीशः॥ (अलङ्कारविशेषः। यथा, साहित्यदर्पणे।१०।७५।
"उक्तिर्विशेषणैः साभिप्रायैः परिकरो मतः॥"
उदाहरणं यथा तत्रैव। "अङ्गराज! सेनापते! द्रोणोपहासिन्! कर्ण! रक्षैनं भीमाद्दुःशासनम्॥")

परिकर्त्ता, [ऋ] पुं, ( परिकरोतीति। परि+कृ+तृच्।) अग्रजज्येष्ठे कनिष्ठविवाहस्य याजकः। इत्युद्वाहतत्त्वम्॥

परिकर्म्म, [न्] क्ली, ( परिक्रियते इति। परि+कृ+मनिन्।) कुङ्कुमादिना शरीरशोभाधानरूपसंस्कारः। इति भरतः॥ स्नानोद्वर्त्तनादि। इति स्वामी॥ शरीरसंस्कारमात्रम्। इत्यन्ये॥ तत्पर्य्यायः। अङ्गसंस्कारः २। इत्यमरः।२।६।१२१॥ प्रतिकर्म्म ३। इति शब्दरत्नावली॥ (यथा कुमारे।४।१६।
"त्रिदशैरसि यस्य दारुणैः
असमाप्तं परिकर्म्म नाम स्मृतः।
तमिमं कुरु दक्षिणेतरं
चरणं निर्म्मितरागमेहि मे॥")

परिकर्म्मा, [न्] पुं, ( परितः कर्म्म यस्य।) परिचारकः। सेवकः। इति रत्नमाला॥

परिकर्म्मी, [न्] त्रि, ( परिकर्म्म विद्यतेऽस्य। परिकर्म्म+णिनि।) परिकर्म्मा। इति हेमचन्द्रः॥

परिकाङ्क्षितः, त्रि, ( परित्यक्तं काङ्क्षितं अभिलाषो येन।) तपस्वी। इति शब्दरत्नावली॥

परिकूटं, क्ली, ( परि सर्व्वतो भूषितं कूटम्।) पुरद्वारकूटकम्। तत्पर्य्यायः। हस्तिनखः २ नगरद्वारकूटकम् ३। इति हेमचन्द्रः॥

परिक्रमः, पुं, ( परिक्रमणम्। क्रमु पादविक्षेपे+भावे घञ्। "नोदात्तोपदेशस्येति।" ७।३।३४। इति उपधाया न वृद्धिः।) क्रीडार्थं यत्र गमनम्। तत्पर्य्यायः। विहारः २। इत्यमरः। ३।२।१६॥ प्रदक्षिणम्। यथा,—
वराह उवाच।
"शृणु भद्रे! महापुण्यं पृथिव्यां सर्व्वतो दिशम्।
परिक्रम्य यथाध्यानं प्रमाणगणितं शुभम्॥
भूम्याः परिक्रमे सम्यक् प्रमाणं योजनानि च।
षष्टिकोटिसहस्राणि षष्टिकोटिशतानि च॥
तीर्थान्येतानि देवाश्च तारकाश्च नभस्तले।
गणितानि समस्तानि वायुना जगदायुषा॥
महता लोमशेनैव नारदेन ध्रुवेण च।
जाम्बवता सपुत्त्रेण रावणेन हनूमता॥
एतैरनेकधा सैन्यैः ससागरवना मही।
क्रमिता वालिना चैव वाद्यमण्डलरेखया॥
अन्तरा भ्रमणेनैव सुग्रीवेण महात्मना।
तथा च पूर्व्वदेवेन्द्रैः पञ्चभिः पाण्डुनन्दनैः॥
योगसिद्धैस्तथा केश्चिन्मार्कण्डेयमुखैरपि।
क्रमिता न क्रमिष्यन्ति न पूर्व्वे नापरे जनाः॥
अल्पसत्त्वबलोपेतैः प्राणिभिश्चाल्पबुद्धिभिः।
मनसापि न शक्यन्ते गमनस्य च का कथा॥
सप्तद्वीपे तु तीर्थानि भ्रमणाद् यत् फलं भवेत्।
प्राप्यते चाधिकं तस्मान्मथुरायाः परिक्रमे॥
मथुरां समनुप्राप्य यस्तु कुर्य्यात् प्रदक्षिणम्।
प्रदक्षिणीकृता तेन सप्तद्वीपा वसुन्धरा॥
तस्मात् सर्व्वप्रयत्नेन सर्व्वकामानभीप्सुभिः।
कर्त्तव्या मथुरां प्राप्य नरैः सम्यक् प्रदक्षिणा॥"
इति वराहपुराणम्॥

परिक्रमसहः, पुं, ( परिक्रमं विहारं सहते इति। सह+पचाद्यच्।) छागलः। इति त्रिकाण्डशेषः॥

परिक्रिया, स्त्री, (परिकरणम्। परि+कृ+शप्। "रिङ् शयग्लिङ्क्षु।" ७।४।२८। इति रिङ्।) परिखाप्राचीरादिना वेष्टनम्। तत्पर्य्यायः। परिसर्पः २। इत्यमरः।३।२।२०॥ (एकाहयागविशेषः। यदुक्तं आश्वलायनश्रौते।९।५।१२।
"सद्यस्क्रिया अनुक्रिया परिक्रिया वा स्वर्गकामः।" "परिक्रियाप्येकाहो भवति एतानन्यतमेन स्वर्गकामो यजेत॥" इति नारायणी॥)

परिचित्, पुं, ( परि सर्व्वतोभावेन क्षीयते नश्यते दुरितं येन। परि+चि+क्विप्। कलिशासनकर्त्तृत्वादस्य तथात्वम्। यद्वा, परिक्षीणेषु कुरुषु क्षियति ऐश्वर्य्ये इति। तथा चोक्तं महाभारते।१०।१६।२—३॥
"विराटस्य सुतां पूर्व्वं स्नुषां गाण्डीवधन्वनः।
उपप्लव्ये गतां दृष्ट्वा व्रतवान् ब्राह्मणोऽब्रवीत्॥
परिक्षीणेषु कुरुषु पुत्त्रस्तव भविष्यति।
एतदस्य परिक्षित्त्वं गर्भस्थस्य भविष्यति॥")
अभिमन्युपुत्त्रः। तत्पर्य्यायः। परीक्षित् २ पारिक्षीतः ३ परिक्षितः ४। इति शब्दरत्नावली॥ (अयं पुनर्युधिष्ठिरादनन्तरं कलियुगस्यारम्भे राजचक्रवर्त्ती आसीत्। कुरुक्षेत्रयुद्धे परिक्षीणे कुरुकुले अभिमन्युपत्न्या उत्तराया गर्भाज्जातः। अयमेव गर्भस्थः तु द्रोणाश्वत्थामप्रयुक्तेन ब्रह्मास्त्रेण निहतोऽपि पुनर्भगवतः कृष्णस्य प्रभावात् जीवितं लब्धवान्। अयमेव वृषरूपिणं धर्म्मं निगृह्णन्तं कलिं प्रशशास। ततो गच्छति काले एकदाऽसौ मृगयां विहरन् क्षुधात्तृट्पीडितः मौनव्रतावलम्बिनः शमीकस्य मुनेराश्रमं गत्वा प्रत्युत्तरदानपराङ्मुखस्य तस्य स्कन्धे धनुष्कोट्या मृतं सर्पमासञ्जयामास। अनेनापराधेनेमं राजानं शमीकस्य पुत्त्रः शृङ्गी नामा तपस्वी इतः सप्तमेऽहनि तक्षकदंशेन मृतो भविष्यतीत्यभिशप्तवान्। एतदाकर्ण्य गङ्गातीरे मुनिप्रभृतिभिरीश्वरनामकीर्त्तनादिकमालोचयन् प्रायोपवेशने स्थितस्तक्षकदंष्ट्रो मृतश्च। इत्थं तत्कथा महाभारते विस्तरतो द्रष्टव्या॥) (कुरुपुत्त्रविशेषः। यथा, हरिवंशे।३२।९०।
"कुरोस्तु पुत्त्राश्चत्वारः सुधन्वा सुधनुस्तथा।
परिचित्तु महाबाहुः प्रवरश्चारिमेजयः॥"
अविक्षित्-पुत्त्रः। यथा, महाभारते।१।९४।५०।
"अविक्षितः परिक्षिच्च शवलाश्वश्च वीर्य्यवान्॥")

परिक्षिप्तः, त्रि, ( परितः क्षिप्यते स्म इति। क्षिप्+क्त।) परिखादिना वेष्टितम्। तत्पर्य्यायः। निवृतम् २। इत्यमरः।३।१।८८॥ सर्व्वतोभावेन क्षेपयुक्तश्च॥

परिखा, स्त्री, ( परितः खन्यते इति। खन्+"अन्येष्वपीति।" ३।२।१०१। डः।) राजधान्यादिवेष्टनखातम्। इति भरतः॥ गड़खाइ इति खाना इति च यस्याः प्रसिद्धिः। तत्पर्य्यायः॥ खेयम्। इत्यमरः।१।१०।२९॥ (यथा, मनुः।७।१९६।
"भिन्द्याच्चैव तडागानि प्राकारपरिखास्तथा।
समवस्कन्दयेच्चैनं रात्रौ वित्रासयेत्तथा॥")
तस्या मानं यथा,—
"प्रस्थे च परिखामानं शतहस्तं प्रशस्तकम्।
परितः शिविरागाच गम्भीरं दशहस्तकम्॥
सङ्केतपूर्व्वकञ्चैव परिखाद्वारमीप्सितम्।
शत्रोरगम्यं मित्रस्य गम्यमेव सुखेन च॥"
इति ब्रह्मवैवर्त्ते श्रीकृष्णजन्मखण्डे १०२ अध्यायः॥

परिख्यातः, त्रि, परिसर्व्वतोभावेन ख्यातः प्रथितः। इति परिपूर्व्वख्याधातोः कर्त्तरि क्तप्रत्ययनिष्पन्नः॥ विख्यातः॥

परिगणितः, त्रि, ( परिसर्व्वतोभावेन गण्यते स्म। परि+गण+क्त।) सर्व्वतोभावेन गणनायुक्तः। यथा। "परिगणितव्यतिरिक्तेषु संसर्गज्ञातविशेषो नादरणीयः परिगणनानर्थक्यात्।" इति जीमूतवाहनः॥

परिगतः, त्रि, ( परि+गम्+क्त।) प्राप्तः। विस्मृतः। ज्ञातः। चेष्टितः। इति मेदिनी॥ गतः। इति हेमचन्द्रः॥ वेष्टितः। यथा,—
"अथ सवल्कदुकूलकुथादिभिः
परिगतोज्ज्वलदुद्धतवालधिः।"
इति भट्टिकाव्ये।१०।१॥

परिगृह्या, स्त्री, ( परि सर्व्वतोभावेन गृह्यते या परि+ग्रह+कर्म्मणि क्यप्।) नारी। इति शब्दचन्द्रिका॥

परिग्रहः, पुं, ( परिग्रहणमिति। परि+ग्रह+"ग्रहवृदृनिश्चिगमश्च।" ३।३।५८। इति अप्।) प्रतिग्रहः। (यथा, पञ्चतन्त्रे।४।७।
"कण्ठाश्लेषपरिग्रहे शिथिलता यन्नादराच्चुम्बसे तत्ते धूर्त्त! हृदि स्थिता प्रियतमा काचिन्ममेवापरा॥")
सैन्यपश्चाद्भागः। पत्नी। भार्य्या। (यथ रघुः।९।१४।
"समनुजाय्य सपत्नपरिग्रहा-
नगलकानलकानवमां पुरीम्॥")
परिजनः। परिवारः। आदानम्। (यथा, रघुः।६।४६।
"अनुभवन्नवदोलमृतूत्सवं
पटुरपि प्रियकण्ठजिघृक्षया।
अनवदामनरज्जुपरिग्रहे
भुजलताजलतामबलाजनः॥")
स्वीकारः। (यथा, रघुः।१८।३८।

महेन्द्रो मलयः सह्यः शुक्तिमानृक्षवानपि ।
विन्ध्यश्च पारियात्रश्च कैलासो मन्दरस्तथा ॥
लोकालोको महांस्तेषु तथैवोत्तरमानसः ।
एते विंशतिर्विख्याताः पर्व्वतास्तेषु वराः ॥"
जम्बुद्वीपवर्षविभाजकपर्व्वता यथा,—
"लङ्कादेशाद्धिमगिरिरुदक् हेमकूटश्च तस्मा-
त्तस्माच्चान्यो निषध इति ते सिन्धुपर्य्यन्तदैर्घ्याः ।
एवं सिद्धादुदगपि पुराच्छृङ्गवच्छुक्लनीला
वर्षाण्येषां जगुरिह बुधा अन्तरे द्रोणिदेशान् ॥"
इति सिद्धान्तशिरोमणिः ॥ * ॥
पर्व्वतानां पक्षोत्पत्तिर्यथा,—
"ततोऽद्रयो जातपक्षा विष्णोरेव तु मायया ।
प्रस्थिता मेदिनीं त्यक्त्वा यथापूर्व्वं निवेशिताः ॥
तत्र स्थानमसुराणान्तु धात्रादिष्टं जलार्णवे ।
प्रतीर्थ्यां पर्व्वताः सर्व्वे निममज्जुर्यथा गताः ॥
तत्रासुरेभ्यः शंसुस्ते आधिपत्यं सुराश्रयम् ।
तच्छ्रुत्वैवासुराः सर्व्वे चक्रुरुद्योगमुत्तमम् ॥*॥"
युद्धजयानन्तरं तेषां पक्षोच्छेदो यथा,—
"धरण्यान्तु गिरीन् स्थाप्य स्वेषु स्थानेषु गोःपतिः ।
चिच्छेद पविना पक्षान् सर्व्वेषां भुवि चारिणाम् ॥
एकः सपक्षो मैनाकः सुरैस्तत्समये रतः ॥"
इत्यग्निपुराणम् ॥ * ॥
पर्व्वतानां स्थावरजङ्गमरूपे यथा,—
"नद्यश्च पर्व्वताः सर्व्वे द्विरूपाश्च स्वभावतः ।
तोयं नदीनां रूपन्तु शरीरमपरन्तथा ॥
स्थावरं पर्व्वतानान्तु रूपं कायस्तथापरः ।
शुक्तीनामथ कम्बूनां तथैवान्तर्गता तनुः ॥
बहिरस्थिस्वरूपन्तु सर्व्वदैव प्रवर्त्तते ।
एवं जलं स्थावरञ्च नदीपर्व्वतयोस्तथा ॥
अन्तर्व्वसति कायस्तु सततं नोपपद्यते ।
आप्याय्यते स्थावरेण शरीरं पर्व्वतस्य तु ॥
तथा नदीनां कायस्तु तोयेनाप्याय्यते सदा ।
नदीनां कामरूपित्वं पर्व्वतानान्तथैव च ॥
जगत्स्थित्यै पुरा विष्णुः कल्पयामास यत्नतः ।
तोयहानौ नदीदुःखञ्जायते सततन्द्विजाः ॥
विशीर्णे स्थावरे दुःखं जायते गिरिकायगम् ॥"
इति कालिकापुराणे २२ अध्यायः ॥*॥
अतः परं पर्व्वतेषु देवानामवकाशा वर्ण्यन्ते
तत्र योऽसौ शान्ताख्यः पर्व्वतस्तस्योपरि महे-
न्द्रस्य क्रीड़ास्थानं तत्र देवराजस्य पारिजातक-
द्रुमवनम् । तस्य पूर्व्वपार्श्वे कुञ्जरो नाम गिरिः
तस्योपरि दानवानामष्टौ पुराणि च । तथा
वज्रकेतुपर्व्वते राक्षसानामनेकानि पुराणि ते च
नाम्ना नीलकाः कामरूपिणः महानीले च
शैलेन्द्रे पुराणि पञ्चदशसहस्राणि किन्नराणां
ख्यातानि तत्र देवताश्वन्द्रादयो राजानः पञ्च-
दश किन्नराणां गर्व्विताः तानि सौवर्णानि विल-
प्रवेशनानि च पुराणि चन्द्रोदये च पर्व्वतवरे
नागानामधिवासः ते च विलप्रवेशासेवितेषु
वैनतेयविषयावर्त्तिनो व्यवस्थितानुरागे च दान-
वेन्द्रा यत्रस्थिता वेणुवत्यपि विद्याधरपुरत्रयं
त्रिंशद्योजनशतविस्तीर्णमेकैकं तावदायतं
उलूकरोमसममहावज्रादयश्च राजानो विद्या-
धराणाञ्च एकैके च शैलराजनि स्वयमेव गरुड़ो
व्यवस्थितः । कुञ्जरे तु पर्व्वतवरे नित्यं पशुपतिः
स्थितः वृषभाङ्को महादेवः शङ्करो योगिनां
प्रभुः अनेकगणभूतकोटिसहस्रपरिवारो भग-
वानादिपुरुषो व्यवस्थितः । वसुधारे चायुष्मतां
वसूनाञ्च समावासः वसुधाररत्नधारयोर्मूर्द्धि
अष्टौ सप्त च संख्यया पुराणि वसुसप्तर्षीणाञ्च ।
एकशृङ्गे च पर्व्वतोत्तमे प्रजापतेः स्थानं चतु-
र्व्वक्त्रस्य ब्रह्मणः । गजपर्व्वते च महाभूतपरि-
वृता स्वयमेव भगवती तिष्ठति । वसुधारे च
पर्व्वतवरे मुनिसिद्धविद्याधराणामायतनं चतु-
रशीत्यपरपुर्य्यो महाप्राकारतोरणाः तत्र
चानेकपर्व्वता नाम गन्धर्व्वा युद्धशालिनो वसन्ति
तेषाञ्चाधिपतिर्द्देवो राजराजेकपिञ्जलः । सुर-
राक्षसाः पञ्चकूटे दानवाः शतशृङ्गे यक्षाणां
पुरशतम् । शमेदकस्य पश्चिमेन देवदानवसिद्धा-
दीनां पुराणि तस्य गिरेर्मूर्द्धि महती सोमशिला
तिष्ठति तस्याञ्च पर्व्वणि पर्व्वणि सोमः स्वयमेवा-
वतरति । तस्यैवोत्तरपार्श्वे त्रिकूटं नाम तत्र
ब्रह्मा तिष्ठति क्वचित्तत्र च वह्न्यायतनं तत्र
मूर्त्तिमान् वह्निरुपास्यते देवैः । उत्तरे च शृङ्गाख्ये
पर्व्वतवरे देवतानामायतनानि पूर्व्वेण नारा-
यणस्यायतनं मध्ये ब्रह्मणः शङ्करस्य च पश्चिमे
तत्र यक्षादीनां कानिचित् पुराणि । तस्य
चोत्तरतीरे जातुद्रुमहापर्व्वते त्रिंशद्योजन-
मण्डलं नन्दनं नाम सरस्तत्र नन्दो नाम नाग-
राजो वसति शतशीर्षप्रचण्ड इति । इत्येतेऽष्टौ
देवपर्व्वता विज्ञेयाः तेनानुक्रमेण हेमरजतरत्न-
वैदूर्य्यमनःशिलादिवर्णाः । इयञ्च पृथ्वी लक्ष-
कोटिशतानेकसंख्याता पूर्णा-तेषु च सिद्धविद्या-
धराणां निलयाः । तद्यथा मेरोः पार्श्वतः
केशरवलयालवालं सिद्धलोकेति कीर्त्त्यते इयञ्च
पृथ्वी पद्माकारेण व्यवस्थिता एष सर्व्वपुराणेषु
क्रमः सामान्यः प्रतिपाद्यते । इति वराहपुरा-
णम् ॥ * ॥ हिमालयादिपर्व्वतवासिनो यथा,—
"रक्षःपिशाचा यक्षाश्च सर्व्वे हैमवतास्तु ते ।
हेमकूटे तु गन्धर्व्वा विज्ञेयाश्चाप्सरोगणाः ॥
सर्व्वे नागाश्च निषधे शेषवासुकितक्षकाः ।
महामेरौ त्रयस्त्रिंशत् क्रीड़न्ते याज्ञिकाः सुराः ॥
नीले तु वैदूर्य्यमये सिद्धा ब्रह्मर्षयोऽवसन् ।
दैत्यानां दानवानाञ्च श्वेतपर्व्वत उच्यते ॥
शृङ्गवान् पर्व्वतश्रेष्ठः पितॄणां प्रतिसञ्चरः ।
इत्येतानि मयोक्तानि नव वर्षाणि भागशः ॥"
इति मात्स्ये ६५ अध्यायः ॥ * ॥
अथ पर्व्वतनदीजलगुणाः ।
"हिमवत्प्रभवा याश्च जलं तास्वमृतोपमम् ।
पारियात्रभवा याश्च विन्ध्यसह्यप्रभवाश्च याः ॥
शिरोहृद्रोगकुष्ठानां ता हेतुः श्लीपदस्य च ।
चन्द्रार्ककरसंस्पृष्टं वायुनास्फालितं मुहुः ॥
पर्व्वतोपरि पञ्चारि समं पौरन्दरेण तत् ।
तस्यानुगुणसदृष्टं शैलप्रस्रवणोद्भवम् ॥
लेखनं दीपनं रूक्षं किञ्चिद्वातप्रकोपणम् ॥"
इति राजवल्लभः ॥ * ॥
पर्व्वते वर्णनीयानि यथा,—
"शैले मेघौषधीधातुवंशकिन्नरनिर्झराः ।
शृङ्गपादगुहारत्नवनजीवाद्युपत्यकाः ॥"
इति कविकल्पलता ॥ * ।
अथ कैलासपर्व्वतवर्णनम् ।
"मध्ये हिमवतः पृष्ठे कैलासो नाम पर्व्वतः ।
तस्मिन्निधिपतिः श्रीमान् कुवेरः सह राक्षसैः ॥
अप्सरःमहितो राजा मोदते ह्यलकाधिपः ।
कैलासपादसम्भूतं पुण्यं शीतजलं शुभम् ॥
मन्दोदकं नाम सरः पयस्तु दधिसन्निभम् ।
तस्मात् प्रभवते दिव्या नदी मन्दाकिनी शुभा ॥
दिव्यञ्च चन्दनन्तत्र तस्यास्तीरे महद्वनम् ।
प्रागुत्तरेण कैलासं दिव्यं सौगन्धिकं गिरिम् ॥
सर्व्वधातुमयं दिव्यं शवलं पर्व्वतं प्रति ।
चन्द्रप्रभो नाम गिरिः स शुभ्रे रत्नसन्निभः ॥
तत्समीपे सरो दिव्यमच्छोदन्नाम विश्रुतम् ।
तस्मात् प्रभवते दिव्या नदी ह्यच्छोदका शुभा ॥
तस्यास्तीरे वनं दिव्यं महच्चैत्ररथं शुभम् ।
तस्मिन् गिरौ निवसति मणिभद्रः सहानुगः ॥
यक्षसेनापतिः क्रूरैर्गुह्यकैः परिवारितः ।
पुण्या मन्दाकिनी चैव नदी ह्यच्छोदका शुभा ॥
महीमण्डलमध्ये तु प्रविष्टा तु महोदधिम् ।
कैलासाद्दक्षिणप्राच्यां शिवं सर्व्वौषधिं गिरिम् ।
मनःशिलामयं दिव्यं शवलं पर्व्वतं प्रति ।
लोहितो हेमशृङ्गस्तु गिरिः सूर्य्यप्रभो महान् ।
तस्य पादे महद्दिव्यं लोहितं सुमहत् सरः ॥
तस्मात् प्रभवते पुण्यो लोहितश्च नदो महान् ।
देवारण्यं विशोकञ्च तस्य तीरे महद्वनम् ॥
तस्मिन् गिरौ निवसति यक्षो मणिधरो वली ।
सौम्यैः स धार्म्मिकैश्चैव गुह्यकैः परिवारितः ॥*॥
कैलासात् पश्चिमोदीच्यां ककुद्मानौषधीगिरिः ॥
ककुद्मति च रुद्रस्य चोत्पत्तिश्च ककुद्मिनः ।
तदञ्जनं त्रैककुदं शैलं त्रिककुदं प्रति ॥
सर्व्वधातुमयस्तत्र सुमहद्वैद्युतो गिरिः ।
तस्य पादे महद्दिव्यं मानसं सिद्धसेवितम् ॥
तस्मात् प्रभवते पुण्या सरयूर्लोकपावनी ।
तस्यास्तीरे वनं दिव्यं वैभ्राजन्नाम विश्रुतम् ॥
कुवेरानुचरस्तस्मिन् प्रहेतितनयो वली ।
नाम्ना वै ब्रह्मधामेति राक्षसोऽनन्तविक्रमः ॥*॥
कैलासात् पश्चिमामाशां दिव्यः सर्व्वौषधिगिरिः ।
अरुणः पर्व्वतश्रेष्ठो रुक्मधातुविभूषितः ॥
भवस्य दयितः श्रीमान् पर्व्वतो हेमसन्निभः ।
शातकौम्भमयैर्दिव्यैः शिलाजालैः समन्ततः
शतसंख्यैस्तापनीयैः शृङ्गैर्दिवमिवोल्लिखन् ।
शृङ्गवान् सुमहद्दिव्यो दुर्गशैलो महोच्छ्रितः ॥
तस्मिन् गिरौ निवसति गिरीशो धूम्रलोहितः ॥
तस्य पादे महद्दिव्यं सरः काञ्चनवालुकम् ॥
तस्य पादात् प्रभवति शैलोदं नाम तत् सरः ।
तस्मात् प्रभवते पुण्या नदी शैलोदका शुभा ॥
सा चक्षुशीतयोर्मध्ये प्रविष्टा पश्चिमोदधिम् ।

अथोत्तरेण कैलासं शिवं सर्व्वौषधिं गिरिम् ।
गौरन्तु पर्व्वतश्रेष्ठं हरितालमयं प्रति ।
हिरण्यशृङ्गः सुमहान् दिव्यौषधिमयो गिरिः ॥
तस्य पादे महद्दिव्यं सरः काञ्चनवालुकम् ।
रम्यं बिन्दुसरो नाम यत्र राजा भगीरथः ॥
गङ्गार्थे स तु राजर्षिरुवास बहुलाः समाः ।
दिवं यास्यन्ति मे पूर्व्वे गङ्गातोयपरिप्लुताः ॥
तत्र त्रिपथगा देवी प्रथमन्तु प्रतिष्ठिता ॥”
इति मात्स्ये १०१ अध्यायः ॥
अथ दशधा कृत्रिमपर्व्वतदानम् ।
“प्रथमो धान्यशैलः स्याद्द्वितीयो लवणाचलः ।
गुडाचलस्तृतीयस्तु चतुर्थो हेमपर्व्वतः ॥
पञ्चमस्तिलशैलः स्यात् षष्ठः कार्पासपर्व्वतः ।
सप्तमो घृतशैलश्च रत्नशैलस्तथाष्टमः ॥
राजतो नवमस्तद्वद्दशमः शर्कराचलः ।
वक्ष्ये विधानमेतेषां यथावदनुपूर्व्वशः ॥
अयने विषुवे पुण्ये व्यतीपाते दिनक्षये ।
शुक्लपक्षे तृतीयायामुपरागे शशिक्षये ॥
विवाहोत्सवयज्ञेषु द्वादश्यामथवा पुनः ।
शुक्लायां पञ्चदश्यां वा पुण्यर्क्षे वा विधानतः ॥
धान्यशैलादयो देया यथाशास्त्रं विजानता ।
तीर्थे वायतने वापि गोष्ठे वा भवनाङ्गने ॥
मण्डपं कारयेद्भक्त्या चतुरस्रमुदङ्मुखम् ।
प्रागुदक्प्रवणञ्चैव प्राङ्मुखं वा विधानतः ॥
गोमयेनानुलिप्तायां भूमावास्तीर्य वै कुशान् ।
तन्मध्ये पर्व्वतं कुर्य्याद्विष्कम्भपर्व्वतान्वितम् ॥
धान्यद्रोणसहस्रेण भवेद्गिरिरिहोत्तमः ।
मध्यमः पञ्चशतिकः कनिष्ठः स्यात्त्रिभिः शतैः ॥
मेरुर्महाव्रीहिमयस्तु मध्ये
सुवर्णवृक्षत्रयसंयुतः स्यात् ।
पूर्व्वेण मुक्ताफलवज्रयुक्तो
याम्येन गोमेदकपुष्परागैः ॥
पश्चाच्च गारुत्मतनीलरत्नैः
सौम्येन वैदूर्य्यसरोजरागैः ।
श्रीखण्डखण्डैरभितः प्रवाल-
लतान्वितः शुक्तिशिलातलः स्यात् ॥
ब्रह्माथ विष्णुर्भगवान् पुरारि-
र्दिवाकरोऽप्यत्र हिरण्मयः स्यात् ।
मूर्द्धन्यवस्थानममत्सरेण
कार्य्यन्त्वनेकैश्च पुनर्द्विजौघैः ॥
चत्वारि शृङ्गाणि च राजतानि
नितम्बभागेष्वपि राजतः स्यात् ।
तथेक्षुवंशावृतकन्दरस्तु
घृतोदकप्रस्रवणश्च दिक्षु ॥
शुक्लाम्बराण्यम्बुधरावली स्यात्
पूर्व्वेण पीतानि च दक्षिणेन ।
वासांसि पश्चादथ कर्व्वुराणि
रक्तानि चैवोत्तरतो घनाली ॥
रौप्यान्महेन्द्रप्रमुखांस्तथाष्टौ
संस्थाप्य लोकाधिपतीन् क्रमेण ।
नानाफलाली च समन्ततः स्या-
न्मनोरमं माल्यविलेपनञ्च ॥
वितानकञ्चोपरि पञ्चवर्ण-
मम्लानपुष्पाभरणं सितं वा ।
इत्थं निवेश्यामरशैलमग्र्यं
मेरोस्तु विष्कम्भगिरीन् क्रमेण ।
तुरीयभागेन चतुर्द्दिशञ्च
संस्थापयेत् पुष्पविलेपनाढ्यान् ॥
पूर्व्वेण मन्दरमनेकफलावलीभि-
र्युक्तं यवैः कनकभद्रकदम्बचिह्नम् ।
कामेन काञ्चनमयेन विराजमान-
माकारयेत् कुसुमवस्त्रविलेपनाढ्यम् ॥
क्षीरारुणोदसरसाथ वनेन चैव
रौप्येण शक्तिघटितेन विराजमानम् ।
याम्येन गन्धमदनञ्च निवेशनीयो
गोधूमसञ्चयमयः कलधौतजम्बुः ॥
हैमेन यक्षपतिना घृतमानसेन
वस्त्रैश्च राजतवनेन च संयुतः स्यात् ।
पश्चात्तिलाचलमनेकसुगन्धिपुष्प-
सौवर्णपिप्पलहिरण्मयहंसयुक्तम् ॥
आकारयेद्रजतपुष्पवनेन तद्व-
द्वस्त्रान्वितं दधिसितोदसरस्तथाग्रे ।
संस्थाप्य तं विपुलशैलमथोत्तरेण
शैलं सुपार्श्वमपि माषमयं सुवस्त्रम् ॥
पुष्पैश्च हेमवटपादपशेखराभ-
माकारयेत् कनकधेनुविराजमानम् ।
माक्षीकभद्रसरसा च वनेन तद्व-
द्रौप्येण भास्वरवता च युतं विधाय ॥
होमश्चतुर्भिरथ वेदपुराणविद्भि-
र्दान्तैरनिन्द्यचरिताकृतिभिर्द्विजेन्द्रैः ।
पूर्व्वेण हस्तमितमत्र विधाय कुण्डं
कार्य्यस्तिलैर्यवघृतेन समित्कुशैश्च ॥
रात्रौ च जागरमनुद्धतगीततूर्य्यै-
रावाहनञ्च कथयामि शिलोच्चयानाम् ।
त्वं सर्व्वदेवगणधामनिधे ! विरुद्ध-
मस्मद्गृहेष्वमरपर्व्वत ! नाशयाशु ।
क्षेमं विधत्स्व कुरु शान्तिमनुत्तमां नः
सम्पूजितः परमभक्तिमता मया हि ॥
त्वमेव भगवानीशो ब्रह्मा विष्णुर्दिवाकरः ।
मूर्त्तामूर्त्तपरं बीजमतः पाहि सनातन ॥
यस्मात्त्वं लोकपालानां विश्वमूर्त्तेश्च मन्दिरम् ।
रुद्रादित्यवसूनाञ्च तस्माच्छान्तिं प्रयच्छ मे ॥
यस्मादशून्यममरैर्नारीभिश्च शिरस्तव ।
तस्मान्मामुद्धराशेषदुःखसंसारसागरात् ॥
एवमभ्यर्च्य तं मेरुं मन्दरञ्चाभिपूजयेत् ।
यस्माच्चैत्ररथेन त्वं भद्राश्वेन च वर्षतः ।
शोभसे मन्दर ! क्षिप्रमतस्तुष्टिकरो भव ॥
यस्माच्चूडामणिर्जम्बुद्वीपे त्वं गन्धमादन ! ।
गन्धर्व्ववनशोभावानतः कीर्त्तिर्दृढास्तु मे ॥
यस्मात्त्वं केतुमालेन वैभ्राजेन वनेन च ।
हिरण्मयाश्वत्थशिरास्तस्मात् पुष्टिर्ध्रुवास्तु मे ॥
उत्तरैः कुरुभिर्यस्मात् सावित्रेण वनेन च ।
सुपार्श्व ! राजसे नित्यमतः श्रीरक्षयास्तु मे ॥
एवमामन्त्र्य तान् सर्व्वान् प्रभाते विमले पुनः ।
स्नात्वाथ गुरवे दद्यान्मध्यमं पर्व्वतोत्तमम् ॥
विष्कम्भान् पर्व्वतान् दद्यादृत्विग्भ्यः क्रमशो मुने ।
गावो देयाश्चतुर्व्विंशदथवा दश नारद ! ॥
शक्तितः सप्त चाष्टौ वा पञ्च दद्यादशक्तिमान् ।
एकापि गुरवे देया कपिला च पयस्विनी ॥
पर्व्वतानामशेषाणामेष एव विधिः स्मृतः ।
त एव पूजने मन्त्रास्त एवोपस्कराः स्मृताः ॥
ग्रहाणां लोकपालानां ब्रह्मादीनाञ्च सर्व्वदा ।
स्वमन्त्रेणैव सर्व्वेषु होमः शैलेषु पठ्यते ॥
उपवासी भवेन्नित्यमशक्तौ नक्तमिष्यते ।
विधानं सर्व्वशैलानां क्रमशः शृणु नारद ! ॥
दानकाले च ये मन्त्राः पर्व्वतेषु च यत् फलम् ।
अन्नं ब्रह्म यतः प्रोक्तमन्नं प्राणाः प्रकीर्त्तिताः ।
अन्नाद्भवन्ति भूतानि जगदन्नेन वर्त्तते ॥
अन्नमेव यतो लक्ष्मीरन्नमेव जनार्द्दनः ।
धान्यपर्व्वतरूपेण पाहि तस्मान्नगोत्तम ! ॥
अनेन विधिना यस्तु दद्याद्धान्यमयं गिरिम् ।
मन्वन्तरशतं साग्रं देवलोके महीयते ॥
अप्सरोगणगन्धर्व्वैराकीर्णेन विराजितः ।
विमानेन दिवः पृष्ठमायाति सुरसेवितम् ॥
ततः कर्म्मक्षये राज्यमाप्नोतीह न संशयः ॥ १ ॥
अथातः संप्रवक्ष्यामि लवणाचलमुत्तमम् ।
यत्प्रदाता नरो लोकं प्राप्नोति शिवसंयुतम् ॥
उत्तमः षोड़शद्रोणः कर्त्तव्यो लवणाचलः ।
मध्यमः स्यात्तदर्द्धेन चतुर्भिरधमः स्मृतः ॥
वित्तहीनो यथाशक्त्या द्रोणादूर्द्ध्वन्तु कारयेत् ।
चतुर्थांशेन विष्कम्भान् पर्व्वतान् कारयेत् पृथक् ॥
विधानं पूर्व्ववत् कुर्य्यात् ब्रह्मादीनाञ्च सर्व्वदा ।
तद्वद्धेमतरून् सर्व्वान् लोकपालान्निवेशयेत् ॥
सरांसि कामदेवादींस्तद्वदत्र निवेशयेत् ।
कुर्य्याज्जागरमत्रापि दानमन्त्रान्निबोधत ॥
सौभाग्यरससम्भूतो यतोऽयं लवणो रसः ।
तदात्मकत्वेन च मां पाहि पापान्नगोत्तम ! ॥
यस्मादन्नरसाः सर्व्वे नोत्कटा लवणं विना ।
प्रियश्च शिवयोर्नित्यं तस्माच्छान्तिप्रदो भव ॥
विष्णुदेहसमुद्भूतो यस्मादारोग्यवर्द्धनः ।
तस्मात् पर्व्वतरूपेण पाहि संसारसागरात् ॥
अनेन विधिना यस्तु दद्याल्लवणपर्व्वतम् ।
उमालोके वसेत् कल्पं ततो याति परां गतिम् ॥ २ ॥
अतः परं प्रवक्ष्यामि गुड़पर्व्वतमुत्तमम् ।
यत्प्रदानान्नरः स्वर्गमाप्नोति सुरपूजितः ॥
उत्तमो दशभिर्भारैर्मध्यमः पञ्चभिर्मतः ।
त्रिभिर्भारैः कनिष्ठः स्यात्तदर्द्धेनाल्पवित्तवान् ॥
तद्वदामन्त्रणं पूर्व्वं हेमवृक्षसुरार्च्चनम् ।
विष्कम्भपर्व्वतांस्तद्वत् सरांसि वनदेवताः ॥
होमजागरणन्तद्वत् लोकपालाधिवासनम् ।
धान्यपर्व्वतवत् कुर्य्यादिमं मन्त्रमुदीरयेत् ॥
यथा देवेषु विश्वात्मा प्रवरोऽयं जनार्द्दनः ।
सामवेदस्तु वेदानां महादेवस्तु योगिनाम् ॥
प्रणवः सर्व्वमन्त्राणां नारीणां पार्व्वती यथा ।
तथा रसानां प्रवरः सदैवेक्षुरसो मतः ॥
मम तस्मात् परां लक्ष्मीं ददस्व गुड़पर्व्वत ! । देवि वै

यस्मात् सौभाग्यदायिन्या भ्राता त्वं गुडपर्व्वत ! ।
निवासस्त्वं हि पार्व्वत्यास्तस्मान्मां पाहि सर्व्वदा ।
अनेन विधिना यस्तु दद्याद्गुडमयं गिरिम् ॥
पूज्यमानः सगन्धर्व्वैर्गौरीलोके महीयते ।
पुनः कल्पशतान्ते तु सप्तद्वीपाधिपो भवेत् ॥
आयुरारोग्यसम्पन्नः शत्रुभिश्चापराजितः ॥ ३ ॥
अथ पापहरं वक्ष्ये सुवर्णाचलमुत्तमम् ।
यस्य प्रदानाद्भवनं वैरिञ्चं याति मानवः ॥
उत्तमः पलसाहस्रो मध्यमः पञ्चभिः शतैः ।
तदर्द्धेनाधमस्तद्वदल्पवित्तोऽपि शक्तितः ॥
दद्यादेकपलादूर्द्ध्वं यथाशक्त्या विमत्सरः ।
धान्यपर्व्वतवत् सर्व्वं विदध्यान्मुनिपुङ्गव ! ॥
विष्कम्भशैलांस्तद्वच्च ऋत्विग्भ्यः प्रतिपादयेत् ।
नमस्ते ब्रह्मवीजाय ब्रह्मगर्भाय वै नमः ॥
यस्मादनन्तफलदस्तस्मात् पाहि शिलोच्चय ! ।
यस्मादग्नेरपत्यं त्वं तस्मादस्मं जगत्पते ! ॥
हेमपर्व्वतरूपेण तस्मात् पाहि नगोत्तम ! ।
अनेन विधिना यस्तु दद्यात् कनकपर्व्वतम् ॥
स याति परमं ब्रह्मलोकमानन्दकारकम् ।
तत्र कल्पशतन्तिष्ठेत्ततो याति परां गतिम् ॥ ४ ॥
अतः परं प्रवक्ष्यामि तिलशैलं विधानतः ।
यत्प्रदानान्नरो याति विष्णुलोकमनुत्तमम् ॥
उत्तमो दशभिर्द्रोणैः पञ्चभिर्मध्यमो मतः ।
त्रिभिः कनिष्ठो विप्रेन्द्र ! तिलशैलः प्रकीर्त्तितः ॥
पूर्व्ववच्चापरं सर्व्वं विष्कम्भपर्व्वतादिकम् ।
दानमन्त्रं प्रवक्ष्यामि यथावन्मुनिसत्तम ! ॥
यस्मान्मधुवधे विष्णोर्देहात् स्वेदसमुद्भवाः ।
तिलाः कुशाश्च समिश्रस्तस्माच्छान्त्यै भवन्त्विह ॥
हव्यकव्येषु यस्माच्च तिला एवाभिरक्षणम् ।
भवादुद्धर शैलेन्द्र ! तिलाचल ! नमोऽस्तु ते ॥
इत्यामन्त्र्य च यो दद्यात्तिलाचलमनुत्तमम् ।
स वैष्णवं पदं याति पुनरावृत्तिदुर्लभम् ॥
दीर्घायुष्ट्वमवाप्नोति पुत्त्रपौत्त्रैश्च मानवः ।
पितृभिर्देवगन्धर्व्वैः पूज्यमानो दिवं व्रजेत् ॥ ५ ॥
अथातः संप्रवक्ष्यामि कार्पासाचलमुत्तमम् ।
यत्प्रदानान्नरो नित्यमाप्नोति परमं पदम् ॥
कार्पासपर्व्वतस्तद्वद्विंशद्भारैरिहोत्तमः ।
दशभिर्म्मध्यमः प्रोक्तः कनिष्ठः पञ्चभिर्म्मतः ॥
भारेणाल्पधनो दद्याद्वित्तशाठ्येन वर्ज्जितः ।
धान्यपर्व्वतवत् सर्व्वमासाद्य मुनिपुङ्गव ! ॥
प्रभातायान्तु शर्व्वर्य्यां दद्यादिदमुदीरयेत् ।
त्वमेवावरणं यस्माल्लोकानामिह सर्व्वदा ॥
कार्पासाद्रे नमस्तस्मादघौघध्वंसनो भव ।
इति कार्पासशैलेन्द्रं यो दद्याच्छर्व्वसन्निधौ ॥
रुद्रलोके वसेत् कल्पं ततो राजा भवेदिह ॥ * ॥ ६ ॥
अथातः संप्रवक्ष्यामि घृताचलमनुत्तमम् ।
तेजोऽमृतमयं दिव्यं महापातकनाशनम् ॥
विंशत्या घृतकुम्भानामुत्तमः स्याद्घृताचलः ।
दशभिर्म्मध्यमः प्रोक्तः पञ्चभिस्त्ववरः स्मृतः ॥
अल्पवित्तोऽपि कुर्व्वीत द्वाभ्यामिह विधानतः ।
विष्कम्भान् पर्व्वतांस्तद्वच्चतुर्भागेन कल्पयेत् ॥
शालितण्डुलपात्राणि कुम्भोपरि निवेशयेत् ।
कारयेत् संहतानुच्चान् यथाशोभं विधानतः ॥
वेष्टयेत् शुक्लवासोभिरिक्षुदण्डफलादिकैः ।
धान्यपर्व्वतवत् सर्व्वं विधानमिह पठ्यते ॥
अधिवासनपूर्व्वन्तु तद्वद्धोमसुरार्च्चनम् ।
प्रभातायान्तु शर्व्वर्य्यां गुरवे च निवेदयेत् ॥
विष्कम्भपर्व्वतांस्तद्वदृत्विग्भ्यः शान्तमानसः ।
संयोगाद्घृतमुत्पन्नं यस्मादमृततेजसोः ॥
तस्माद्घृतार्च्चिर्विश्वात्मा प्रीयतामत्र शङ्करः ।
यस्मात्तेजोमयं ब्रह्म घृते तच्च व्यवस्थितम् ॥
घृतपर्व्वतरूपेण तस्मान्नः पाहि भूधर ! ।
अनेन विधिना दद्याद्घृताचलमनुत्तमम् ॥
महापातकयुक्तोऽपि लोकमायाति शाङ्करम् ।
हंससारसयुक्तेन किङ्किणीजालमालिना ॥
विमानेनाप्सरोभिश्च सिद्धविद्याधरैर्वृतः ।
विहरेत् पितृभिः सार्द्धं यावदाभूतसंप्लवम् ॥ ७ ॥
अतः परं प्रवक्ष्यामि रत्नाचलमनुत्तमम् ।
मुक्ताफलसहस्रेण पर्व्वतः स्यादनुत्तमः ॥
मध्यमः पञ्चशतिकस्त्रिशतेनावरः स्मृतः ।
चतुर्थांशेन विष्कम्भाः पर्व्वताः स्युः समन्ततः ॥
पूर्व्वेण वज्रगोमेदैर्द्दक्षिणेनेन्द्रनीलकैः ।
पुष्परागयुतैः कार्य्यो विद्वद्भिर्गन्धमादनः ॥
वैदूर्य्यविद्रुमैः पश्चात् संमिश्रो विपुलोऽचलः ।
पद्मरागैः ससौवर्णैरुत्तरेण तु विन्यसेत् ॥
धान्यपर्व्वतवत् सर्व्वमत्रापि परिकल्पयेत् ।
तद्वदावाहनं कृत्वा वृक्षान् देवांश्च काञ्चनान् ॥
पूजयेत् पुष्पमाल्याद्यैः प्रभाते चाथ पूर्व्ववत् ।
पूर्व्ववद्गुरु-ऋत्विग्भ्यः इममन्त्रमुदीरयेत् ॥
यथा देवगणाः सर्व्वे सर्व्वरत्नेष्ववस्थिताः ।
त्वञ्च रत्नमयो नित्यमतः पाहि महाचल ! ॥
यस्माद्रत्नप्रदानेन तुष्टिं प्रकुरुते हरिः ।
सदानन्दप्रदानेन तस्मान्नः पाहि पर्व्वत ! ॥
अनेन विधिना यस्तु दद्याद्रत्नमहागिरिम् ।
स याति वैष्णवं लोकममरेश्वरपूजितः ॥
यावत् कल्पशतं साग्रं वसेच्चेह नराधिप ! ।
रूपारोग्यगुणोपेतः सप्तद्वीपाधिपो भवेत् ॥
ब्रह्महत्यादिकं किञ्चिद्यदत्रामुत्र वा कृतम् ।
तत् सर्व्वं नाशमायाति गिरिर्वज्रहतो यथा ॥ ८ ॥
अतः परं प्रवक्ष्यामि रौप्याचलमनुत्तमम् ।
यत्प्रदानान्नरो याति सोमलोकं द्विजोत्तम ! ॥
दशभिः पलसाहस्रैरुत्तमो रजताचलः ।
पञ्चभिर्म्मध्यमः प्रोक्तस्तदर्द्धेनावरः स्मृतः ॥
अशक्तो विंशतेरूर्द्ध्वं कारयेत् शक्तितः सदा ।
विष्कम्भपर्व्वतांस्तद्वत्तुरीयांशेन कल्पयेत् ॥
पूर्व्ववद्राजतान् कुर्य्यान्मन्दरादीन् विधानतः ।
कलधौतमयांस्तत्र लोकेशान् रचयेद्बुधः ॥
ब्रह्मविष्ण्वर्कवत् कार्य्यो नितम्बोऽत्र हिरण्मयः ।
राजतं स्याद्यदन्येषां सर्व्वन्तदिह काञ्चनम् ॥
शेषञ्च पूर्व्ववत् कुर्य्याद्धोमजागरणादिकम् ।
प्रदद्यात्तं प्रभाते तु गुरवे रौप्यपर्व्वतम् ॥
विष्कम्भशैलानृत्विग्भ्यः पूज्यवस्त्रविभूषणैः ।
इमं मन्त्रं पठन् दद्याद्दर्भपाणिर्विमत्सरः ॥
पितॄणां वल्लभं यस्माद्विष्णोर्व्वा शङ्करस्य च ।
रजतं पाहि तस्मान्नः शोकसंसारसागरात् ।
इत्थं निवेश्य यो दद्याद्रजताचलमुत्तमम् ।
गवामयुतदानस्य फलं प्राप्नोति मानवः ॥
सोमलोके स गन्धर्व्वैः किन्नराप्सरसाङ्गणैः ।
पूज्यमानो वसेद्विद्वान् यावदाभूतसंप्लवम् ॥ ९ ॥
अथातः संप्रवक्ष्यामि शर्कराशैलमुत्तमम् ।
यस्य प्रदानाद्विष्ण्वर्करुद्रास्तुष्यन्ति सर्व्वदा ॥
अष्टाभिः शर्कराभारैरुत्तमः स्यान्महाचलः ।
चतुर्भिर्म्मध्यमः प्रोक्तो भाराभ्यामधमः स्मृतः ॥
सार्द्धभारेण शैलन्तु यः कुर्य्यात् स्वल्पवित्तवान् ।
विष्कम्भपर्व्वतान् कुर्य्यात्तुरीयांशेन मानवः ॥
धान्यपर्व्वतवत् सर्व्वमासाद्य मेरुसंयुतम् ।
मेरोरुपरि तद्वच्च स्थाप्यं हैमतरुत्रयम् ॥
मन्दारः पारिजातश्च तृतीयः कल्पपादपः ।
एतद्वृक्षत्रयं मूर्ध्नि सर्व्वेष्वपि निवेशयेत् ॥
हरिचन्दनसन्तानौ पूर्व्वपश्चिमभागयोः ।
निवेश्यौ सर्व्वशैलेषु विशेषाच्छर्कराचले ॥
मन्दरे कामदेवस्तु प्रत्यग्वक्त्रः सदा भवेत् ।
गन्धमादनशृङ्गेषु धनदः स्यादुदङ्मुखः ॥
प्राङ्मुखो वेदमूर्त्तिश्च हंसः स्याद्विपुलाचले ।
हैमी सुपार्श्वे सुरभी दक्षिणाभिमुखी भवेत् ॥
धान्यपर्व्वतवत् सर्व्वमावाहनमखादिकम् ।
कृत्वाथ गुरवे दद्यान्मध्यमं पर्व्वतोत्तमम् ।
ऋत्विग्भ्यश्च नरः शैलानिमान्मन्त्रानुदीरयेत् ॥
सौभाग्यामृतसारोऽयं परमः शर्करायुतः ।
तत् सदानन्दकारी त्वं भव शैलेन्द्र ! सर्व्वदा ॥
अमृतं पिबतां ये तु निपेतुर्भुवि शीकराः ।
देवानां तत्समुत्थोऽयं पाहि नः शर्कराचल ! ॥
मनोभवधनुर्म्मध्यादुद्भूता शर्करा यतः ।
तन्मयोऽसि महाशैल ! पाहि संसारसागरात् ॥
यो दद्यात् शर्कराशैलमनेन विधिना नरः ।
सर्व्वपापविनिर्म्मुक्तः प्रयाति शिवमन्दिरम् ॥
चन्द्रादित्यप्रतीकाशमधिरुह्यानुजीविभिः ।
सहैव यानमातिष्ठेत् स तु विष्णुप्रचोदितः ॥
ततः कल्पशतान्ते तु सप्तद्वीपाधिपो भवेत् ।
आयुरारोग्यसम्पन्नो यावज्जन्मार्व्वुदत्रयम् ॥
भोजनं शक्तितः कुर्य्यात् सर्व्वशैलेष्वमत्सरः ।
सर्व्वत्राक्षारलवणमश्नीयात्तदनुज्ञया ।
पर्व्वतोपस्करान् सर्व्वान् प्रापयेत् ब्राह्मणा-
लयम् ॥ १० ॥

इति मात्स्ये ७७ अध्यायः ॥

देवर्षिविशेषः । यथा,—
"कश्यपान्नारदश्चैव पर्व्वतोऽरुन्धती तथा ॥"
इत्यग्निपुराणम् ॥
( यथाच, महाभारते । ३ । ९३ । २५ ।
"लोमशस्योपसंगृह्य पादौ द्वैपायनस्य च ।
नारदस्य च राजेन्द्र ! देवर्षेः पर्व्वतस्य च ॥")
मत्स्यविशेषः । पाव्‌दा इति भाषा । अस्य गुणाः । वायुनाशित्वम् । स्निग्धत्वम् । बलशुक्रकारित्वञ्च । इति राजवल्लभः ॥ वृक्षः । शाकभेदः । इति मेदिनी । ते, १२९ ॥ ( सन्न्यासिविशेषः । स तु शङ्कराचार्य्यशिष्यस्य मण्डनमिश्रस्य

तस्य निदानं यथाह माधवकरः ।
"क्रोधशोकश्रमकृतः शरीरोष्मा शिरोगतः ।
पित्तञ्च केशान् पचति पलितं तेन जायते ॥"
तच्चिकित्सा यथा,—
"लौहचूर्णस्य कर्षन्तु दशार्द्धं भृतमञ्जनः ।
धात्रीफलद्वयं पथ्ये द्वे तथैकं विभीतकम् ॥
पिष्ट्वा लौहमये भाण्डे स्थापयेन्निशि वासयेत् ।
लेपोऽयमचिराद्धन्ति पलितं नेह संशयः ॥
दशार्द्धं पञ्चकर्षाणि ।
काश्मर्य्या मूलमादौ सहचरकुसुमं केतकस्यापि मूलं
लौहं चूर्णं सभृङ्गं त्रिफलपलयुतं तैलमेभिः पचेयुः ।
कृत्वा लौहस्य भाण्डे चितितलनिहितं स्थापयेन्मासमेकं
केशाः काशप्रकाशा अपि मधुपनिभा अस्य रोगाद्भवन्ति ॥
त्रिफला नीलिकापत्रं भृङ्गराजोऽयसो रजः ।
अवीमूत्रेण संपिष्टं लेपात् कृष्णीकरं परम् ॥"
इति भावप्रकाशे मध्यखण्डे क्षुद्ररोगाधिकारे ॥
शैलजम् । तापः । कर्द्दमः । इति मेदिनी । ते, १२२ ॥ (पल गतौ+"लोष्टपलितौ ।" उणां । ३ । ६२ । इति क्तप्रत्ययेन निपातनात् सिद्धम् ।)
केशपाशः । इति हेमचन्द्रः उज्ज्वलदत्तश्च ॥

पलितः, पुं, ( फलति वृद्धावस्थायां केशशौक्ल्यादिकं प्राप्नोतीति । फल+"फलेरितजादेश्च पः ।" उणां । ५ । ३४ । इति इतच् फस्य च पः । ) वृद्धः । इति जटाधरः ॥

पलिता, स्त्री, ( पलित+टाप् । ) वृद्धा । इति जटाधरः ॥

पल्यङ्कः, पुं, (परितोऽङ्क्यतेऽत्र इति । परि+अकि लक्षणे+घञ् । "परेश्च घाङ्कयोः ।" ८ । २ । २२ । इति रस्य लः । ) पर्य्यङ्कः । इत्यमरः । २ । ७ । १३८ ॥ ( यथा, रामायणे । २ । ३२ । ६
"पल्यङ्कमग्र्यास्तरणं नानारत्नविभूषितम् ।
तमपीच्छति वैदेही प्रतिष्ठापयितुं त्वयि ॥" )

पल्ययनं, क्ली, ( परितः अयति गच्छति अनेन । परि+अय गतौ+करणे ल्युट् । रस्य लत्वम् । ) पर्य्याणम् । इति हेमचन्द्रः । ४।३१८॥ घोड़ार जिन् इति भाषा ॥

पल्युल, त् क लूनिपूत्योः । इति कविकल्पद्रुमः । ( अदन्तचुरां-परं-सकं-सेट् । ) यकारयुक्तोकारमध्यः ह्रस्वमध्यश्च । लूनिश्छेदः । पूतिः पवित्रीकरणम् । अपपल्युलत् तृणं लोकः । पल्युलयति जनं गङ्गा । इति दुर्गादासः ॥

पल्यूल, त् क लूनिपूत्योः । इति कविकल्पद्रुमः ॥ ( अदन्तचुरां-परं-सकं-सेट् । ) यकारयुक्तोकारमध्यः दीर्घमध्यश्च । लूनिश्छेदः । पूतिः पवित्रीकरणम् । अपपल्यूलत् तृणं लोकः । पल्यूलयति जनं गङ्गा । इति दुर्गादासः ॥

पल्ल, गतौ । इति कविकल्पद्रुमः ॥ ( भ्वां-परं-सकं-सेट् । ) पल्लति । इति दुर्गादासः ॥

पल्लः, पुं, ( पलति शस्यादिप्राचुर्य्यं गच्छतीति । पल्ल+पचाद्यच् । ) स्थूलकुसूलकम् । इति मेदिनी । ले, ३० ॥ पालुइ इति मराट्ट इति च भाषा ॥ ( यथा, सुश्रुते चिकित्सितस्थाने १३ अध्याये ।
"सुपिधानन्तु तं कृत्वा यवपल्ले निधापयेत् ॥" )

पल्लवः, पुं, क्ली, ( पल्यते इति पल् । पल+क्विप् । लूयते इति लवः । लू+"ऋदोरप् ।" ३।३।५७। इति अप् । ततः पल् चासौ लवश्चेति । ) नवपत्रादियुक्तशाखाग्रपर्व्व । इति भरतः ॥ नवपत्रस्तवकः । "इति मधुः ॥ पर्ण्णपत्रादिसंघाते शाखायाः पल्लवो मतः ।" इति कोषान्तरम् ॥ ( यथा, रघुः । ६ । ३३ ।
"अभिनयान् परिचेतुमिवोद्यता
मलयमारुतकम्पितपल्लवा ।
अमदयत् सहकारलता मनः
सकलिकाकलिकामजितामपि ॥")
तत्पर्य्यायः । किसलयम् २ । इत्यमरः । २ । ४ । १४ ॥ प्रवालम् ३ नवपत्रम् ४ । इति राजनिर्घण्टः ॥ वलम् ५ किसलम् ६ किशलम् ७ किशलयम् ८ विटपः ९ । इति शब्दरत्नावली ॥ पत्रयौवनम् १० । इति जटाधरः ॥ विस्तरः । वलम् । शृङ्गारः । अलक्तरागः । इति विश्वमेदिन्यौ ॥ वलमित्यत्र वनमिति क्वचित् पाठः ॥ वलयः । चापलः । इति शब्दरत्नावली ॥ (देशविशेषः । तद्देशवासिषु पुं भूम्नि । यथा, मार्कण्डेये । ५७ । ३६ ।
"अपरान्ताश्च शूद्राश्च पह्लवाश्चर्म्मखण्डिकाः ।
गान्धारा गवलाश्चैव सिन्धुसौवीरमद्रकाः ॥" )

पल्लवकः, पुं, ( पल्लवेन शृङ्गारेण कायतीति । पल्लव+कै+कः । ) वेश्यापतिः । ( पल्लव इव कायतीति । ) मत्स्यविशेषः । इति हलायुधः ॥ (पल्लवः किसलयैः कायतीति । अशोकवृक्षः । इति कश्चित् ॥)

पल्लवद्रुः, पुं, ( पल्लवप्रधानो द्रुर्वृक्षः । ) अशोकवृक्षः । इति राजनिर्घण्टः ॥

पल्लवाधारः, पुं, ( पल्लवस्य आधारः । ) शाखा । इति शब्दचन्द्रिका ॥

पल्लविकः, त्रि, (पल्लवः शृङ्गाररसोऽस्यास्तीति वा । पल्लव+ठन् ।) कामुकः । इति हेमचन्द्रः । २ । २४५ ॥

पल्लवितं, क्ली, ( पल्लवोऽलक्तरागः सञ्जातोऽस्य । तारकादिभ्य इतच् । ) लाक्षारक्तः । इति मेदिनी । ते, २०४ ॥

पल्लवितः, त्रि, पल्लवः सञ्जातोऽस्य । पल्लव+इतच् । ) सपल्लवः । पल्लवयुक्तः । ततम् । विस्तृतम् । इति मेदिनी । ते, २०४ ॥

पल्लवी, [न्] पुं, (पल्लवाः सन्त्यस्य । पल्लव+इनिः ।) वृक्षः । इति शब्दमाला ॥ (पल्लवविशिष्टे, त्रि । यथा, कुमारे । ३ । ५४ ।
"पर्य्याप्तपुष्पस्तवकावनम्रा
सञ्चारिणी पल्लविनी लतेव ॥" )

पल्लिः, स्त्री, ( पल्लतीति । पल्ल+"सर्व्वधातुभ्य इन् ।" इति इन् । ) ग्रामकः । कुटी । इति हेमचन्द्रः ॥ कुटीसमुदायः । ग्रामः । इत्यन्ये ॥ गृहमिति भट्टः ॥ कुटीग्रामकयोः पल्लीति शाश्वतः ॥ स्थानमिति स्वामी ॥ पतन्ति भरणेन भ्रमणेन च जीवन्तीति क्विपि पतो गावः ते लीयन्तेऽत्र पल्लिः नाम्नीति डिः माच्छोणादीति ईपि पल्ली च गोपपल्लीप्रभृति च । इत्याभीरपल्लिशब्दटीकायां भरतः ॥ ( गृहगोधिका । इति हेमचन्द्रे पल्लीशब्ददर्शनात् ॥ )

पल्लिका, स्त्री, ( पल्लि+स्वार्थे कन् ततष्टाप् । ) गृहगोधिका । इति राजनिर्घण्टः ॥

पल्लिवाहः, पुं, ( पल्लिं कुटीं वाहयति निर्वाहयतीति । पल्लि+वह+णिच्+अण् । ) तृणभेदः । यथाह राजनिर्घण्टः ।
"पल्लिवाहो दीर्घतृणः सुपत्रस्ताम्रवर्णकः ।
अहृढ़ः शाकपत्रादिः पशूनामवलप्रदः ॥"

पल्ली, स्त्री, ( पल्लि+"कृदिकारादिति ।" वा ङीष् । ) स्वल्पग्रामः । ( यथा, कथासरित्सागरे । १० । १३५ ।
"इतस्त्वं गच्छ मत्पल्लीं जाने सा तत्र ते गता ।
अहं तत्रैव चेष्यामि दास्याम्यसिमिमञ्च ते ॥")
कुटी । इति विश्वमेदिन्यौ ॥ नगरभेदः । स तु दक्षिणदेशे प्रसिद्धः त्रिचनापल्ल्यादिः । इति शब्दरत्नावली ॥ क्षुद्रजन्तुविशेषः । टिक्टिकी इति भाषा । तत्पर्य्यायः । मुषली २ गृहगोधा ३ विश्वम्भरा ४ ज्येष्ठा ५ कुड्यमत्स्यः ६ पल्लिका ७ गृहगोधिका ८ । इति राजनिर्घण्टः ॥ गृहगोलिका ९ माणिक्या १० भित्तिका ११ गृहोलिका १२ । इति हेमचन्द्रः । ४ । ३६३ ॥ अवशिष्टं ज्येष्ठीशब्दे द्रष्टव्यम् ॥ (अस्याः पतनफलमुक्तं यथा, ज्योतिषशास्त्रे ।
"निपतति यदि पल्ली दक्षिणाङ्गे नराणां
स्वजनधनवियोगो लाभदा वामभागे ।
उरसि शिरसि पृष्ठे कण्ठदेशे च राज्यं
करचरणहृदिस्था सर्व्वसौख्यं ददाति ॥" )

पल्वलं, क्ली, पुं, ( पलति गच्छति पिवत्यस्मिन् वा । पल गतौ पा पाने वा+"सानसिवर्णसिपर्णेति ।" उणां । ४ । १०७ । इति निपातनात् वलच् प्रत्ययेन सिद्धम् । ) अल्पसरः । इत्यमरः । १ । १० । २८ ॥ ( यथा, महाभारते । ७ । ५१ । ६ ।
"पल्वलानि च सर्व्वाणि सर्व्वे चैव तृणोपलाः ।
स्थावरं जङ्गमञ्चैव निःशेषं कुरुते जगत ॥" )
तस्य लक्षणं यथा,—
"अल्पं सरः पल्वलं स्याद्यत्र चन्द्रार्कगे रवौ ।
न तिष्ठति चलं किञ्चित्तत्तोयं वारि पाल्वलम् ॥
तज्जलगुणाः ।
पाल्वलं वार्य्यभिष्यन्दि गुरु स्वादु त्रिदोषकृत् ॥"
इति भावप्रकाशः ॥
"पाल्वलं गुर्व्वभिष्यन्दि विष्टम्भि दोषलं परम् ॥"
इति राजवल्लभः ॥

पवनाशः, पुं, (पवनं वायुं अश्नाति भक्षयतीति । अश भोजने+"कर्म्मण्यण् ।" ३।२।१। इति अण् ।) सर्पः । इति हलायुधः ॥

पवनाशनः, पुं, ( पवनो वायुरशनं भक्ष्यं यस्य । ) सर्पः । इत्यमरः । १ । ८ । ८ ॥

पवनाशनाशः, पुं, ( पवनाशस्य सर्पस्य नाशो यस्मात् । यद्वा, पवनाशनं सर्पमश्नातीति । अश+अण् ।) गरुडः । इति हलायुधः ॥ मयूरः । यथा, उत्तरचोरपञ्चाशिकायाम् ।

"सद्योनिभच्छजसमवानां
श्रुत्वा निनादं गिरिगह्वरेषु ।
तमोऽरिबिम्बप्रतिबिम्बधारी
रराव कान्ते ! पवनाशनाशः ॥"

पवनेष्टः, पुं, (पवने वायुरोगे इष्टः ।) महानिम्बः । इति रत्नमाला ॥ ( महानिम्बशब्देऽस्य गुणादिकं ज्ञेयम् ॥ )

पवनोत्सुजं, क्ली, मत्स्यम् । इति शब्दचन्द्रिका ॥

पवमानः, पुं, ( पवते शोधयतीति । पूङ् शोधने+"पूङ्यजोः शानच् ।" ३।२।१२८ । इति शानच् । "आने मुक् ।" ७।२।८२ । इति मुमागमः । ) वायुः । इत्यमरः । १।१।६६ ॥ (यथा, रघुः ।८।८।

"न खरो न च भूयसा मृदुः
पवमानः पृथिवीरुहानिव ।
स पुरस्कृतमध्यमक्रमो
नमयामास नृपाननुद्धरन् ॥"

अग्नेः स्वाहायां जातः पुत्रः । यथा, मार्कण्डेये । ५२ । २७-२८ ॥

"योऽसावग्निरभीमानी ब्रह्मणस्तनयोऽग्रजः ।
तस्मात् स्वाहा सुतान् लेभे त्रीनुदारौजसो द्विज ॥
पावकं पवमानञ्च शुचिञ्चापि जलाशिनम् ।
तेषान्तु सन्ततावन्ये चत्वारिंशच्च पञ्च च ॥" )

निर्मथ्याग्निः । स च गार्हपत्याग्निः । यथा,—

"अथ यः पवमानस्तु निर्मथ्योऽग्निः स उच्यते ।
स च वै गार्हपत्योऽग्निः प्रथमो ब्रह्मणः स्मृतः ॥"
इति मात्स्ये ४८ अध्यायः ॥

पवमानात्मजः, पुं, ( पवमानस्य वायोरात्मजः । "वायोरग्निः ।" इति श्रुतेर्वायुजन्यत्वादस्य तथात्वम् । यद्वा, पवमानस्य अग्निविशेषस्य आत्मजः । ) हव्यवाहनः । यथा,—

"पवमानात्मजो ह्यग्निर्हव्यवाहन उच्यते ॥"
इति मात्स्ये ४८ अध्यायः ॥

पवाका, स्त्री, ( पुनातीति । पूञ् गि शोधने+"बलाकादयश्च ।" उणां ४ । १४ । इति आकप्रत्ययेन निपातनात् साधुः ।) वात्या । चक्रवातः । इत्युणादिकोषः ॥

पविः, पुं, (पुनातीति । पूञ् शोधने+"अच इः ।" उणां ४ । १३८ । इति इः ।) वज्रम् । इत्यमरः । १ । १ । ५० ॥

पवितः, त्रि, (पूयते स्म । पूङ् शोधे+क्तः । "पूङश्च ।" ७।२।५१ । इति इट् । "पूङः क्त्वा च ।" १।२।२२ । इति न कित्त्वम् । ) पूतः । इति मुग्धबोधव्याकरणम् ॥ मरीचे, क्ली । इति राजनिर्घण्टः ॥

पविता [ तृ ], त्रि, ( पुनातीति । पू+तृच् ।) पवित्रताकारकः । यथा, नैषधे ।

"तनुश्रिया यस्य हतं न मन्मथः
कुलश्रिया यः पवितारमन्वयम् ॥"

पवित्रं, क्ली, ( पूयतेऽनेनेति । पू+"पुवः संज्ञायाम् ।" ३ । २ । १८५ । इति इत्रः ।) वर्षणम् । कुशम् । (यथा, मनुः । २ । ७५ ।

"प्राक्कूलान् पर्य्युपासीनः पवित्रैश्चैव पावितः ॥")

ताम्रम् । मयः । इति मेदिनी । रे, १०० ॥ घर्षणम् । इति विश्वः ॥ अर्घोपकरणम् । इति हेमचन्द्रः ॥ यज्ञोपवीतम् । इति त्रिकाण्डशेषः ॥ घृतम् । मधु । इति राजनिर्घण्टः ॥ पार्व्वणश्राद्धादावर्घार्थे होमादावाज्यसंस्कारादार्थञ्च साग्रनिर्गर्भकुशान्तरद्वयं तत्प्रादेशमात्रकुशद्वयम् । यथा,—

"अनन्तर्गर्भिणं साग्रं कौशं द्विदलमेव च ।
प्रादेशमात्रं विज्ञेयं पवित्रं यत्र कुत्रचित् ॥"
इति आह्निकतत्त्वम् ॥

( विष्णुः । यथा, महाभारते । १३।१४९।२० ।

"प्रभूतस्त्रिककुब्धाम पवित्रं मङ्गलं परम् ॥"

महादेवः । यथा तत्रैव । १३।१७।३५ ।

"पवित्रञ्च महांश्चैव नियमो नियमाश्रितः ॥")

पवित्रः, त्रि, ( पू+इत्र । ) व्रतादिना शुद्धः । (यथा, गीतायाम् । ४ । ३८ ।

"नहि ज्ञानेन सदृशं पवित्रमिह विद्यते ॥")

तत्पर्य्यायः । प्रयतः २ पूतः ३ । एतत्त्रयं प्राणिविषयमात्रम् । शुचिः ४ शुद्धः ५ पवित्रः ६ । इति शब्दरत्नावली ॥ पुण्यः ७ पावनः ८ । इति जटाधरः ॥ (पूयतेऽनेन । पूञ्+"पुवः संज्ञायाम् ।"३।२।१८५ । इति इत्र ।) शुद्धद्रव्यम् । तत्पर्य्यायः । पूतम् २ मेध्यम् ३ । एतत्त्रयं अप्राणिद्रव्यविषयम् । इति रत्नावली विशेष्यनिघ्नं च अमरभरतौ ॥ शुद्धम् ४ शुचि ५ पुण्यम् ६ पूतिवत् ७ । इति जटाधरः ॥ यथा,—

"लघुं पवित्रमायुष्यं सुमङ्गल्यं रसायनम् ।
एतत्तु शयनं शतगुणपरम् ॥"
इति भावप्रकाशस्य पूर्व्वखण्डे द्वितीये भागे ॥)

पवित्रः, पुं, ( पुनातीति । पू+कर्त्तरि इत्रः । ) तिलवृक्षः । पुत्रजीववृक्षः । इति राजनिर्घण्टः ॥ ( तिलपुत्रजीवशब्दयोरस्य विवृतिर्ज्ञेया ॥ ) कार्त्तिकेयस्य नामान्तरम् । यथा, महाभारते । ३ । २३१ । ६ ।

"षष्ठीप्रियश्च धर्म्मात्मा पवित्रो मातृवत्सलः ॥")

पवित्रकं, क्ली, ( पवित्र+कन् । यद्वा, पवित्रे पयसि कायतीति । कै+कः । ) जालम् । इति शब्दरत्नावली ॥ शणसूत्रजालम् । इत्यमरः । १ । १० । १६ ॥ क्षत्रियस्य यज्ञोपवीतम् । यथा,

"कार्पाससुपवीतं स्याद्विप्रस्योर्द्धवृतं त्रिवृत् ।
शणसूत्रमयं राज्ञो वैश्यस्याविकसौत्रिकम् ॥"
इति मनुवचनात् पवित्रकमपि तदुच्यते । इत्यमरटीकायां भरतः ॥

पवित्रकः, पुं, ( पवित्र+स्वार्थे कन् । ) कुशः । दमनकः । अश्वत्थः । उडुम्बरः । इति राजनिर्घण्टः ॥

पवित्रधान्यं, क्ली, ( पवित्रं धान्यम् । नित्यकर्म्मधारयः । ) यवः । इति राजनिर्घण्टः ॥ (यवशब्देऽस्य गुणादयो वक्तव्याः ॥)

पवित्रा, स्त्री, ( पवित्र+टाप् । ) तुलसी । इति शब्दमाला ॥ नदीभेदः । इति हेमचन्द्रः ॥ हरिद्रा । अश्वत्थवृक्षः । इति राजनिर्घण्टः ॥

पवित्रारोपणं, क्ली, ( पवित्रस्य यज्ञोपवीतस्य आरोपणं प्रदानं यत्र । ) श्रीकृष्णसम्प्रदानकोपवीतदानरूपोत्सवविशेषः । यथा,—

"श्रावणस्य सिते पक्षे द्वादश्यां वैष्णवैर्मुदा ।
कर्त्तव्यः कृष्णदेवस्य पवित्रारोपणोत्सवः ॥"

अथ तन्नित्यता वक्तृपरिशिष्टे ।

"स स्नातः सर्व्वतीर्थेषु सर्व्वयज्ञेषु दीक्षितः ।
हरिश्च प्रीतिमाप्नोति यः पवित्रं समाचरेत् ॥
विधिना शास्त्रदृष्टेन यो न कुर्य्यात् पवित्रकम् ।
हरन्ति राक्षसास्तस्य वर्षपूजादिकं फलम् ॥"

योगसारे च पवित्रोत्पत्त्युपाख्यानेन नागराजं पवित्रं प्रति श्रीरुद्रेण वरदानम् । यथा,—

"ये त्वां न बहुमन्यन्ते यथा सम्भावितो मया ।
जपहोमादिकं तेषां फलं त्यजेतु निश्चयात् ॥
विष्णुरहस्ये ।
न करोति विधानेन पवित्रारोपणन्तु यः ।
तस्य सांवत्सरी पूजा निष्फला मुनिसत्तम ! ॥
तस्माद्भक्तिसमायुक्तैर्नरैर्विष्णुपरायणैः ।
वर्षे वर्षे तु कर्त्तव्यं पवित्रारोपणं हरेः ॥"

अथ पवित्रारोपणमाहात्म्यम् ।

तत्र बौधायनः ।

"यावन्तस्तन्तवः पवित्रस्य तावत् स्वर्गे महीयते ।
आयुरारोग्यमैश्वर्य्यं विपुलं तस्य वर्द्धते ॥
महासंहितायाम् ।
समन्वत्सरेण या पूजा कृता वै मन्त्रिणा द्विज ।
पवित्रदानात् पूर्णा स्यादित्याह भगवान् हरिः ॥
विष्णुरहस्ये ।
पवित्रारोपणं विष्णोर्भुवि मुक्तिप्रदायकम् ।
स्त्रीपुंकीर्त्तिप्रदं पुण्यं सुखसम्पद्धनावहम् ॥
पुण्यागानन्तु तथा पुण्यं सर्व्वपापहरन्तु वै ।
पवित्रारोपणं तस्मात् पवित्रं परमं स्मृतम् ॥
सम्वत्सरे नरो भक्त्या समभ्यर्च्य जनार्द्दनम् ।
यत् फलं समवाप्नोति पवित्रारोपणेन तत् ॥
किञ्च ।
पापयत्नेऽसौ नित्यं त्रायते भवबन्धनात् ।
पवित्रं तेन विख्यातं ब्राह्मं तेजोऽभिधीयते ॥
विष्णवाख्यया तु विख्यातं तदा लोके विधीयते ।
स एव ब्रह्मरूपेण यज्ञेशः कर्म्मणां प्रभुः ॥
तदेव त्रिगुणीसूत्रं तत् नारायणाख्यया ।
त्रिदेवात्मा त्रिवेदात्मा चराचरः प्रणवः स्मृतः ॥"

अथ पवित्रारोपणविधिः ।

"सौवर्णे राजतैस्ताम्रैः क्षौमैः सूत्रैस्तु पाद्मकैः ।
कार्पासैर्वा पवित्राणीष्यते कार्य्यैः कुशैरपि ॥

तत्र कार्पासिकं सूत्रं ब्राह्मण्या कर्त्तितं शुभम् ।
आनीय त्रिगुणीकृत्य पुनस्त्रिगुणयेच्छुचिः ।
पञ्चगव्येन तत् प्रोक्ष्य प्रक्षाल्य शुचिनाम्बुना ।
मूलेनाष्टोत्तरशतं मन्त्रेणापाभिमन्त्रयेत् ॥
त्रीणि चाष्टशतेनाथ तस्यार्द्धेनाथ चार्द्धतः ।
आनुरूप्येण चान्यानि पवित्राण्याचरेत् प्रभोः ॥
षट्त्रिंशद्ग्रन्थयस्तेषामाद्ये कार्य्यास्तु मध्यमे ।
चतुर्व्विंशतिरन्ते च द्वादशग्रन्थयो बुधैः ॥
अङ्गुष्ठपर्व्वमात्रन्तु कुर्य्याद्ग्रन्थिमथोत्तमे ।
तदर्द्धं मध्यमे कुर्य्यात्तदर्द्धञ्च कनीयसि ॥
ग्रन्थीन् कुर्व्वीत सर्व्वत्र सुवृत्तान् सुमनोहरान् ।
न वै विषमसंख्याकान् ग्रन्थीन् कुर्व्वीत कुत्रचित् ॥
अष्टोत्तरसहस्रेण ततस्तन्तुः पवित्रकम् ।
अष्टोत्तरशतं ग्रन्थि वनमालाख्यमाचरेत् ॥
आरभ्य मुकुटं या तु सूत्रैर्व्विरचिता शुभा ।
आपादलम्बिनी माला वनमाला प्रकीर्त्तिता ॥
कुर्य्यादन्यपवित्रञ्च सूत्रैर्द्वादशभिः शुभैः ।
अरत्निप्रमितं तच्च द्वादशग्रन्थिकं कृती ॥
पवित्राणि परीवारदेवतानां समाचरेत् ।
सूत्रैस्त्रैरष्टसंख्याकैः कलासंख्याकसूत्रकैः ॥
तेषु ग्रन्थीन् यथाशोभं बध्नीयाद्गुरोरपि ।
सप्तविंशतिभिः सूत्रैः षड्विंशतिभिरात्मनः ॥
यथावद्भावमन्येषां पवित्राणि च कारयेत् ।
सम्पादयेच्च सर्व्वाणि शोभनान्येव यत्नतः ॥
तथा चोक्तम् ।
विशोभस्य प्रदानेन कर्त्तुः स्यादशुभं फलम् ।
पवित्रं परया भक्त्या तस्मात् कुर्व्वीत शोभनम् ॥
रञ्जयित्वाथ काश्मीरागुरुगोरोचनादिना ।
वंशपात्रच्छाद्य पटके स्थापयेत्तानि वैष्णवः ॥”

इति पवित्रनिर्म्माणम् ॥ * ॥

“कृत्वा कृत्यं दशम्याञ्च पवित्रारोपणाय हि ।
क्षणं विज्ञाप्य तत्रादि यथा प्राग्लिखितं नयेत् ॥
एकादश्यां प्रभाते च नित्यकृत्यं समाप्य हि ।
देवालयमुपस्कृत्य मण्डलं रचयेत् शुभम् ॥
कृत्वा कृष्णस्य निर्म्माल्यं पवित्रारोपणात्मकाम्
पूजां विशेषतः कृत्वा क्षणं विज्ञापयेदिदम् ॥
क्रियालोपविघातार्थं यत्त्वया विहितं प्रभो ।
मयैतत् क्रियते देव ! भवत्तुष्ट्यै पवित्रकम् ॥
न मे विघ्नो भवत्वत्र कुरु नाथ ! दयां मयि ।
सर्व्वथा सर्व्वदा विष्णो ! मम त्वं परमा गतिः ॥
देवस्य सर्व्वतो न्यस्येद्दन्तकाष्ठं जलं कुशान् ।
स्फटिकाञ्च हरिद्राञ्च कुङ्कुमं रोचनानि च ॥
उपानहौ सितं छत्रं चामरं व्यजनं तथा ।
यवाः शेत्तादिधान्यानि यथास्थानं पृथक् पृथक् ॥
कुम्भं शुद्धाम्बुनापूर्य सर्व्वतोभद्रमण्डले ।
देवाग्रतो निधायास्मिन् पवित्राण्यधिवासयेत् ॥’

अथ पवित्राधिवासनम् ।

‘भगवत्पुरतस्तानि पटलस्थानि पूजयन् ।
आवाहयेच्च तन्मूला तन्त्रसूत्रेण बुधः ॥
तन्मन्त्रश्चायम् ।
ओँ सांवत्सरस्य यागस्य पवित्रीकरणाय भोः ।
विष्णुलोकाद्यथास्थान ब्रह्माद्या देवतास्ततः ।
ततस्तन्तून् सन्निधाप्याथ तद्गन्धादिनार्च्चयेत् ॥
तत्र तत्र ता देवताश्चोक्ताः ।
ब्रह्मविष्णुमहादेवास्त्रिवृद्ग्रन्थिदेवताः स्मृताः ।
प्रणवः सोमवह्नी च ब्रह्मा नागः शशी रविः ।
शिवश्च विश्वदेवाश्च नवतन्त्वधिदेवताः ।
क्रिया च पौरुषी वीरा चतुर्थी चापराजिता ।
जया च विजया चैव मुक्तिदा च सदाशिवा ।
मनोमयी तु नवमी दशमी सर्व्वतोमुखी ।
ग्रन्थीनां देवतास्त्वेतास्तास्तत्र विनिवेशयेत् ॥
तन्मन्त्राश्चैते ।
ओँ सर्व्वाभरणचिह्नाङ्ग ! सर्व्वदेवनमस्कृत ! ।
लावण्यरूपविश्वात्मन् ! ज्येष्ठसूत्रं समाश्रय ॥
ओँ सर्व्वलक्ष्मीकर ! श्रीश ! सर्व्वज्ञानरसात्मन् ! ।
निष्कलरूपविश्वात्मन् ! मध्यसूत्रं समाश्रय ॥
ओँ अतिवेगमरुद्योने ! पुरुषात्मन् ! दिवस्पते ! ।
कनीयो हे प्रभो ! देव ! तेजसा सूत्रमाश्रय ॥
यत्र मन्त्रो न वर्त्तेत तन्नाम्नैव तत्र च
नमोऽन्तं सचतुर्थीकं स्यात् प्राणिसनात्मनः ॥ * ॥
अथ कृष्णकराम्भोजे पट्टसूत्रेण निर्म्मितम् ।
वितस्तिमात्रं बध्नीयात् कौतुकं मङ्गलात्मकम् ॥
तत्र मन्त्रः ।
ओँ सत्यतपःस्रुतार्च्चाया सम्पूर्णफलदायि यत् ।
पवित्रीकरणायैतत् कौतुकं धरते नम ॥
ततो गन्धपवित्रञ्च गृहीत्वा धूपितं बुधः ।
भगवन्तं नमस्कृत्य भक्त्या संप्रार्थयेदिदम् ॥
आमन्त्रितोऽसि देवेश ! सार्द्धं देवगणेश्वरैः ।
मन्त्रेशैर्लोकपालैश्च सहितः पारदारकैः ॥
आगच्छ भगवन्नीश ! विधिसम्पूर्त्तिकारक ! ।
प्रातस्त्वां पूजयिष्यामि सान्निध्यं कुरु केशव ! ॥
ततश्च ।
विष्णुतेजोद्भवं रम्यं सर्व्वपातकनाशनम् ।
सर्व्वकामप्रदं देव तवाङ्गे धारयाम्यहम् ॥
अनेन मनुना विद्वान् मूलसम्पुटितेन हि ।
दद्यात् गन्धपवित्रं तच्छ्रीकृष्णचरणाब्जयोः ॥
नीराज्य देवं स्तुत्वा च दत्त्वा पुष्पाञ्जलिं ततः ।
ततः पवित्राणि तत्कुम्भमध्यस्थमनुनाथवा ॥
शृङ्खिहृन्मनुना रक्षेत् कवचेनावगुण्ठयेत् ।
गीतनृत्यादिना कुर्य्याद्धिधिवज्जागरं निशि ॥”

अथ पवित्रार्पणम् ।

“प्रातः कृत्यानि निर्व्वृत्य नित्यपूजां विधाय च ।
विशेषतोऽर्च्चयेद्देवं पवित्राणि च पूजयेत् ॥
महावादित्रघोषेण नामसङ्कीर्त्तनोत्सवे ।
मूलसम्पुटितेनैव पवित्राण्यर्पयेत् क्रमात् ॥
वक्ष्यमाणेन मन्त्रेण भक्त्या कृष्णाय वैष्णवः ।
पूजां कृत्वा परीवारदेवानां तान्यथार्पयेत् ॥
अर्पणमन्त्रः ।
कृष्ण ! कृष्ण ! नमस्तुभ्यं गृहाणेदं पवित्रकम् ।
पवित्रकरणार्थाय वर्षपूजाफलप्रदम् ॥
पवित्रकं कुरुष्वाद्य यन्मया दुष्कृतं कृतम् ।
शुद्धो भवाम्यहं देव ! त्वत्प्रसादाज्जनार्द्दन ! ॥
वनमालां यथा देव ! कौस्तुभं सततं हृदि ।
तद्वत् पवित्रतन्तूंश्च पूजाञ्च हृदये वह ।
जानताजानता वापि न कृतं यत्तवार्च्चनम् ।
केनचिद्विघ्नदोषेण परिपूर्णं तदस्तु मे ॥
कथापि विधिनाभ्यर्च्च्य पवित्रं तस्य चार्पयेत् ।
कृष्णं निवेदयेत् कृष्णं होमादिना सतम् ॥
गुरुञ्च भक्त्या संपूज्य पवित्रं गुरवेऽर्पयेत् ।
वैष्णवेभ्यः पवित्राणि दत्त्वैकं धारयेत् स्वयम् ॥
सम्पूज्य वैष्णवान् विप्रान् भक्त्या सम्भोज्य बन्धुभिः ।
सह महाप्रसादान्नं स्वयं भुञ्जीत वैष्णवः ॥”

अथ पवित्रविसर्ज्जनविधिः । तत्रैव ।

“मासं पक्षमहोरात्रं त्रिरात्रं धारयेत्तथा ।
देवं स सूत्रसन्दर्भं देशकालानुसारतः ॥
प्रत्यहं स्नानकर्म्मादि स्नानाद्युक्तार्थं कारयेत् ।
अभिषिच्याथ तोयेन पुनर्देवं निवेदयेत् ॥
तथान्ते देवमभ्यर्च्य विशेषात् पुष्पचन्दनैः ।
नैवेद्यं विविधं दत्त्वा ततः सूत्रं विसर्ज्जयेत् ॥
ओँ सांवत्सरीं शुभां पूजां सम्पाद्य विधिवन्मम ।
व्रजेदानीं पवित्र ! त्वं विष्णुलोकं विसर्ज्जितम् ॥
यावद्देवे पवित्राणि तावत्तिष्ठेत् समाहितः ।
ब्रह्मचारी हविष्याशी देवपूजापरायणः ॥
ततः फलञ्चोक्तं बौधायनेन ।
एवं यः कुरुते विद्वान् वर्षे वर्षे न संशयः ।
स याति परमं स्थानं यत्र देवो गुकेश्वरो ॥”

अथ तत्र मुख्यगौणकालनिर्णयः ।

“मुख्यकालस्य चैतस्य विघ्नतोपगमे सति ।
भाद्रादावपि कर्त्तव्यं पवित्रारोपणं प्रभोः ॥
तथा च विष्णुरहस्ये ।
श्रावणस्य सिते पक्षे कर्कटस्थे दिवाकरे ।
द्वादश्यां वासुदेवाय पवित्रारोपणं स्मृतम् ॥
सिंहस्थे वा रवौ कार्य्यं कन्यायाञ्च गतेऽथवा
तस्यामेव तिथौ सम्यक् तुलास्थे कथञ्चन ॥
मन्त्रतन्त्रप्रकाशे च ।
कर्कटञ्च गते सूर्य्ये तथा सिंहगतेऽपि वा ।
द्वादश्यां शुक्लपक्षस्य हरेर्द्दद्यात् पवित्रकम् ॥
अथ चेद्विघ्नपातेन मुख्यकालो न लभ्यते ।
कन्यागतेऽपि कुर्व्वीत यावन्नोत्तिष्ठते हरिः ॥’

इति हरिभक्तिविलासः ॥

पवित्रारोहण क्ली (पवित्रस्य यज्ञोपवीतस्य आरोहणं सम्प्रदानं यत्र ।) पवित्रारोपणम् ।
यथा,—
“आषाढ़शुक्लपक्षस्य चाष्टमी श्रावणस्य च ।
पवित्रारोहणं कुर्य्याद्देव्याः प्रीतिकरं परम् ॥
दुर्गातन्त्रेण मन्त्रेण दुर्गाबीजेन भैरव ! ।
वैष्णवीतन्त्रमन्त्रेण पवित्रारोहणञ्चरेत् ॥
विशेषात् श्रावणादेव दद्यात् कुर्य्यात् पवित्रकम् ।
सर्व्वेषामपि देवानां पवित्रारोहणञ्चरेत् ॥
आषाढ़े श्रावणे वापि सर्व्वतुष्टफलप्रदम् ।
प्रतिपद्धनदस्योक्ता पवित्रारोहणे तिथिः ॥
श्रिया देव्या द्वितीया तु तिथीनामुत्तमा तिथिः ।
तृतीया भवभाविन्याश्चतुर्थी तत्सुतस्य च ॥
: गुहस्य च ।

सप्तमी भास्करस्योक्ता दुर्गायाश्च तथाष्टमी ॥
मातृणां नवमी प्रोक्ता वासुकेर्दशमी स्मृता ।
एकादशी ऋषीणाञ्च द्वादशी चक्रपाणिनः ॥
त्रयोदशी त्वनङ्गस्य मम चैव चतुर्द्दशी ।
ब्रह्मणो दिक्पतीनाञ्च पौर्णमासी तिथिर्मता ॥
पवित्रारोहणं यो वै देवानां न समाचरेत् ।
तस्य सांवत्सरीपूजाफलं हरति केशवः ॥
तस्माद्यत्नेन कर्त्तव्यं पवित्रारोहणं परम् ।
कृते बहुफलप्राप्तिस्तत्पूजा सफला भवेत् ॥
पवित्रं येन सूत्रेण यथा कार्य्यं विजानता ।
तत् शृणुष्व प्रमाणञ्च रचनाञ्च च भैरव ! ॥
प्रथमं दर्भसूत्रञ्च पद्मसूत्रं ततः परम् ।
ततः क्षौमं सुपुण्यं स्यात् कार्पासकमतः परम् ॥
पट्टसूत्रं तथान्येन पवित्राणि न कारयेत् ।
पवित्राणि विचित्राणि कर्त्तव्यानि प्रयत्नतः ॥
गन्धमाल्यैः सुरभिभिरर्च्चितानि यथोदितम् ॥
कन्या च कर्त्तयेत् सूत्रं प्रमदा वा पतिव्रता ॥
विधवा साधुशीला च दुःशीला न हि कर्त्तयेत् ।
यत् सूचिभिन्नं दग्धञ्च भस्मधूमाभिगुण्ठितम् ॥
तद्वर्ज्जयेत यत्नेन सूत्रमस्मिन् पवित्रके ।
उभयुक्तञ्चाखुदष्टं मद्यरक्तादिदूषितम् ॥
मलिनं नीलरक्तञ्च यत्नेन परिवर्ज्जयेत् ।
सूत्रैः पवित्रं कुर्व्वीत कनिष्ठोत्तममध्यमम् ॥
कनिष्ठकं पवित्रन्तु सप्तविंशतितन्तुभिः ।
मर्त्यलोके यशःकीर्त्तिसुखसौभाग्यवर्द्धनम् ॥
चतुःपञ्चाशता प्रोक्तं तन्तूनां मध्यमं परम् ।
दिव्यभोगावहं पुण्यं स्वर्गसौख्यप्रदायकम् ॥
उत्तमञ्चैव तन्तूनामष्टोत्तरशतेन वै ।
तद्दत्त्वा तु महादेव्यै शिवस्य पुण्यमाप्नुयात् ॥
उत्तमं वासुदेवाय दद्याद्यदि पवित्रकम् ।
तदा याति हरेर्लोकं साधको नात्र संशयः ॥
अष्टोत्तरसहस्रन्तु रत्नमालेति गीयते ।
पवित्रन्तु महादेव्या भुक्तिमुक्तिप्रदायकम् ॥
रत्नमालान्तु यो दद्यान्महादेव्यै पवित्रकम् ।
कल्पकोटिसहस्राणि स्वर्गे स्थित्वा शिवो भवेत् ॥
एतत्तु नागहाराख्यं शङ्करस्य पवित्रकम् ।
अष्टोत्तरसहस्रेण तन्तूनां सुमनोहरम् ॥
यः प्रयच्छति मह्यन्तु च यावान् तन्तुसञ्चयः ।
तावत्कल्पसहस्राणि मम लोके प्रमोदते ॥
अष्टोत्तरसहस्रेण वनमाला हरेः स्मृता ।
तन्तूनां तस्य दानेन विष्णुसायुज्यमाप्नुयात् ॥
यत् कनिष्ठं पवित्रन्तु नाभिमात्रं भवेत्तु तत् ।
द्वादशग्रन्थिसंयुक्तमात्ममानेन योजयेत् ॥
ऊरुप्रमाणं मध्यं स्यात् ग्रन्थीनां तत्र योजयेत् ।
चतुर्व्विंशतिमध्यस्य मालामात्मन एव च ॥
पवित्रमुत्तमं प्रोक्तं जानुमात्रञ्च भैरव ! ।
षट्त्रिंशत्तन्तुग्रन्थीनां योजयेदात्ममानतः ॥
शतमष्टोत्तरं कार्य्यं ग्रन्थीनां स्वविधानतः ।
नागहाराद्वयं तद्वदर्थेषु च विधानतः ॥
पवित्रं क्रियते येन सूत्रेण ग्रन्थयः पुनः ।
तदन्यवर्णसूत्रेण कर्त्तव्या लक्षणान्विताः ॥
ग्रन्थिन्तु सप्तभिः कुर्य्याद्वेष्टनैस्तु कनिष्ठके ।
द्विगुणैर्मध्यमे कुर्य्यात्त्रिगुणैरुत्तमे तथा ॥
अधिवासः पवित्राणि पूर्व्वस्मिन्दिवसे पुनः ।
मन्त्रन्यासं पवित्रेषु कुर्य्यात्तत्र परेऽहनि ॥
दुर्गाबीजेन मन्त्रेण मन्त्रन्यासं द्विजश्चरेत् ।
वैष्णवीतन्त्रमन्त्रेण कुर्य्युरन्ये च भैरव ! ॥
प्रतिग्रन्थि स्वयं कुर्य्यान्मन्त्रन्यासं विचक्षणः ॥
अङ्गुष्ठाग्रेण जप्यन्तु मालायामिह भैरव ! ।
यावन्तो ग्रन्थयस्तत्र तावन्त्येव च संन्यसेत् ।
मन्त्राणि तस्य तेन स्यात् देवाङ्गोपनियोजनम् ॥
दुर्गातन्त्रेण मन्त्रेण तत्त्वन्यासन्तु कारयेत् ।
एकत्र न्यस्य सकलं यत्नपात्रे पवित्रकम् ॥
तस्मिन्निधाय पुष्पाणि गन्धादि च सुशोभनम् ॥
तत्त्वन्यासं ततः कुर्य्यादङ्गुल्यग्रेण भैरव ! ॥
विष्णोस्तु मूलमन्त्रेण तत्त्वन्यासन्तु कारयेत् ।
इदं विष्णुरिति प्रोक्तं मन्त्रन्यासे द्विजस्य हि ॥
शूद्राणां मन्त्रविन्यासे मन्त्रो वै द्वादशाक्षरः ।
प्रासादेन तु मन्त्रेण मन्त्रन्यासो मम स्मृतः ॥
अनेन मन्त्रन्यासन्तु दानस्थानेन कारयेत् ।
कुङ्कुमोशीरखर्ज्जूरैश्चन्दनादिविलेपनैः ॥
पवित्राणि विलिप्याथ तत्त्वन्यासन्तु योजयेत् ।
सम्पूज्य विधिवद्देवीं मण्डले प्रयतो नरः ॥
वैष्णवीतन्त्रमन्त्रेण दुर्गामन्त्रेण भैरव ! ।
दुर्गाबीजेन दद्यात्तु देव्या मूर्द्ध्नि पवित्रकम् ॥
यस्य देवस्य या पूजा तस्य तस्यैव मण्डलम् ।
यस्य यस्य तु यो मन्त्रो यथाध्यानादिपूजनम् ॥
तं देवं तेन भावेन पूजयित्वा प्रयत्नतः ।
तस्यैव बीजमन्त्राभ्यां मूर्द्ध्नि दद्यात् पवित्रकम् ॥
पवित्रं समयं दद्याद्देवेभ्यश्च पवित्रकम् ।
सर्व्वेषामेव देवानां सम्पूर्णार्थञ्च भैरव ! ॥
अग्निर्ब्रह्मा भवानी च गजवक्त्रो महोरगः ।
स्कन्दो भानुर्मातृगणो दिक्पालाश्च नव ग्रहाः ॥
एषां घटेषु प्रत्येकं पूजयित्वा यथाविधि ।
मूर्द्ध्नि पवित्रमेकैकं दद्यादेभ्यः समाहितः ।
पञ्चगव्यचरुं कृत्वा देव्यै दत्त्वाहुतित्रयम् ।
तेनैव वह्नये दत्त्वा शम्भवे च यथाविधि ॥
आज्यैरष्टोत्तरशतं तिलैराज्यैस्तथैव च ।
अष्टोत्तरशतं दद्यान्महादेव्यै च साधकः ॥
एवमेव विधानेन विष्ण्वादीनाञ्च वैष्णवः ।
पवित्रारोपणं कुर्य्याद्धर्म्मकामार्थसिद्धये ॥
नैवेद्यैर्विविधैः पेयैर्वटपिष्टकमोदकैः ।
कुष्माण्डैर्नारिकेलैश्च खर्ज्जूरैः पनसैस्तथा ॥
आम्रदाडिमकार्कन्धुद्राक्षादिविविधैः फलैः ।
भक्ष्यभोज्यादिभिः सर्व्वैर्मद्यैर्मांसैस्तथौदनैः ॥
गन्धैः पुष्पैस्तथा धूपैर्दीपैश्च सुमनोहरैः ।
वासोभिर्भूषणैश्चैव भवानीं साधको यजेत् ॥
नटनर्त्तकसंघैश्च वेश्याभिरपि भैरव ! ।
नृत्यगीतैः ससुहृदो जागरं कारयेन्निशि ॥
भोजयेद्ब्राह्मणांश्चापि शक्तितोऽपि द्विजोत्तमैः ।
पवित्रारोहणे दत्ते दक्षिणासुपदापयेत् ॥
हिरण्यं गां तिलं वासो घृतं वा शाकमेव वा ।
इमं मन्त्रं ततः पश्चात् साधकः समुदीरयेत् ॥
मणिविद्रुममालाभिर्मन्दारकुसुमादिभिः ।
इयं सांवत्सरी पूजा तवास्तु परमेश्वरि ! ॥
ततो विसर्ज्जयेद्देवीं पूर्व्वभिः प्रतिपत्तिभिः ।
एवं कृते पवित्राणां दाने देव्या यथाविधि ॥
संवत्सरस्य या पूजा सम्पूर्णा वत्स ! जायते ।
कल्पकोटिशतं यावद्देवीगेहे वसेन्नरः ।
अत्रापि सुखसौभाग्यसम्पद्भिरतुला भवेत् ॥”
इति कालिकापुराणे ५८ अध्यायः ॥
गरुडपुराणे ४२ । ४३ अध्याययोरप्येतद्दृष्टव्यम् ॥

पवित्रितः, त्रि, पवित्रमस्य जातं इत्यर्थे तारकादित्वात् इतच्प्रत्ययनिष्पन्नः । तत्पर्य्यायः । पवित्रः २ प्रयतः ३ पूतः ४ शुचिः ५ शुद्धः ६ । इति शब्दरत्नावली ॥

पश, क बन्धे । इति कविकल्पद्रुमः ॥ ( चुरां-परं-सकं-सेट् । ) क, पाशयति । इति दुर्गादासः ॥

पश, ञ बाधे । ग्रन्थे । इति कविकल्पद्रुमः ॥ (भ्वां-उभं-सकं-सेट् ।) ञ, पशति, पशते । बाधो विहतिः । ग्रन्थो ग्रन्थनम् । ग्रन्थस्थाने स्पर्शनं पठन्ति केचित् । इति दुर्गादासः ॥

पश, त क अनुपसर्गाद्बन्धबाधयोः । स्पर्शगत्योः । इति कविकल्पद्रुमः ॥ ( अदन्तचुरां-परं-सकं-सेट् । ) तालव्योपधः । पशयति । अनुपसर्गादिति सोपसर्गस्य प्रयोगो निषिध्यते । बाधो विहतिः । इति दुर्गादासः ॥

पशव्यं, त्रि, ( पशोरिदं पशवे हितं वा । पशु + यत् । ) पशुसम्बन्धि । इति संक्षिप्तसारव्याकरणम् ॥ ( पशुहितकरम् । यथा, याज्ञवल्क्ये १ । ३२१ ।
“रम्यं पशव्यमाजीव्यं जाङ्गलं देशमावसेत् ॥”)

पशुः, पुं, ( अविशेषेण सर्व्वं पश्यतीति । दृशिरो प्रेक्षणे + “अर्ज्जिदृशिकम्यमिपंसीति ।” उणां । १ । २८ । इति कुः पश्यादेशश्च । ) अन्या व्युत्पत्तिर्यथा, “पशयन्ति पशन्ति पार्श्वहस्ताभ्यां हिताहितम् ।” इति भरतः ॥ जन्तुविशेषः । तस्य लक्षणम् । लोमवल्लाङ्गूलवत्त्वम् । इति भाषारत्ने कणादः ॥ तद्भेदा यथा । सिंहः १ व्याघ्रः २ तरक्षुः ३ वराहः ४ कपिः ५ भल्लूकः ६ खड्गी ७ महिषः ८ शृगालः ९ बिडालः १० गोधा ११ श्वावित् १२ हरिणः १३ कृष्णसारः १४ रुरुः १५ न्यङ्कुः १६ रङ्कुः १७ शम्बरः १८ रौहिषः १९ गोकर्णः २० पृषतः २१ एणः २२ ऋष्यः २३ रोहितः २४ चमरः २५ गन्धर्व्वः २६ शरभः २७ रामः २८ सृमरः २९ गवयः ३० शशः ३१ खड्गाश्वः ३२ गौः ३३ उष्ट्रः ३४ छागः ३५ मेषः ३६ खरः ३७ हस्ती ३८ अश्वः ३९ । इत्यमरः ॥ * ॥ (यथा,
(“पशुः पशूनां दौर्ब्बल्यात् कश्चिन्मध्ये वृकायते ।
स सत्यं वृकमासाद्य प्रकृतिं भजते पशुः ॥
तद्वदज्ञो ज्ञमध्यस्थः कश्चिन्मौखर्य्यसाधनः ।
स्थापयत्याप्तमात्मानमाप्तन्त्वासाद्य भिद्यते ॥”
इति चरके सूत्रस्थाने त्रिंशेऽध्याये ॥)
तत्र ग्राम्यारण्यभेदेन चतुर्द्दशविधाः पशवो यथा,

पशुरज्जुः, स्त्री, पशूनामश्वादीनां बन्धनाय रज्जुः। तत्पर्य्यायः। दामनी २। इत्यमरः। २।८।७३॥ बन्धनी ३। इति शब्दरत्नावली॥

पशुराजः, पुं, (पशूनां राजा। "राजाहःसखिभ्यष्टच्।" ५।४।९१। इति समासान्तष्टच्।) सिंहः। इति शब्दचन्द्रिका॥

पशुहरीतकी, स्त्री, (पशूनां हरीतकीव हितकारित्वात्।) आम्रातकफलम्। इति त्रिकाण्डशेषः॥

पश्चात्, व्य, (अपरस्मिन् अपरस्मात् अपरो वा वसति आगतो रमणीयं वा। "पश्चात्।" ५।३।३२। इति अपरस्य पश्चभाव आतिश्च प्रत्ययोऽस्तातेर्विषये।) प्रतीची। चरमम्। इत्यमरः। ३।३।२४२॥ (यथा, रघुः। ४।३०।

"प्रतापोऽग्रे ततः शब्दः परागस्तदनन्तरम्।
ययौ पश्चाद्रथादीति चतुस्कन्धेव सा चमूः॥")

अधिकारः। इति मेदिनी। ते, ३१॥

पश्चात्तापः, पुं, (पश्चात् अग्रतोऽकार्य्ये कृते चरमे तापः।) अनुशोचनम्। चरमे शोकः। पस्तान इति भाषा। तत्पर्य्यायः। अनुतापः २ विप्रतीसारः ३। इत्यमरः। १।७।२५॥ (यथा, रामायणे। ३।५९।३९।

"उक्तेति परुषं वाक्यं पश्चात्तापसमन्वितः॥"

केचित्तु पश्चात् ताप इति पदद्वयमिच्छन्ति॥)

पश्चार्द्धः, त्रि, (अपरस्यासावर्द्धश्च इति। "अपरस्यार्द्धे पश्चभावो वक्तव्यः।" २।१।५८। इत्यस्य वार्त्ति इति पश्चभावः।) शेषार्द्धः। अपरार्द्धः। यथा, शकुन्तलायाम्। १ अङ्के।

"ग्रीवाभङ्गाभिरामं मुहुरनुपतति स्यन्दने बद्धदृष्टिः
पश्चार्द्धेन प्रविष्टः शरपतनभयाद्भूयसा पूर्व्वकायम्॥"

पश्चिमं, त्रि, (पश्चाद्भवम्। "अग्रादिपश्चात् डिमच्।" ४।३।२३। इत्यस्य वार्त्ति इति डिमच्।) पश्चाद्भवम्। इत्यमरः। ३।१।८१॥ (यथा, रघुः। १७।८।

"तदात्मसम्भवं राज्ये मन्त्रिवृद्धाः समादधुः।
स्मरन्तः पश्चिमामाज्ञां भर्त्तुः संग्रामयायिनः॥")

पश्चिमा, स्त्री, (पश्चिम+टाप्।) अस्ताचलावच्छिन्नदिक्। तत्पर्य्यायः। प्रतीची२ वारुणी३ प्रत्यक् ४। तद्दिग्भववायुगुणाः।

"पश्चिमो मारुतस्तीक्ष्णः कफमेदःविशोषणः।
सद्यः प्राणहरो दुष्टः शोषकारी शरीरिणाम्॥"
इति राजनिर्घण्टः॥

अपिच। राजवल्लभः।

"पश्चिमोऽभिवपुर्वर्णबलारोग्यविवर्द्धनः।
कषायः शोषणः स्वर्य्यो रोचनो विशदो लघुः॥
वपां लघुत्ववैशद्यशैत्यवैमल्यकारकः।
सर्व्वदर्व्येष्वभिव्यक्तप्रभावरसवीर्य्यकृत्॥
व्रणसंरोपणश्चापि दाहशोषोष्णशापहः॥"

तद्दिगधिपतिर्वरुणः। (यथा, अमरे। १।३।२।

"इन्द्रो वह्निः पितृपतिर्नैरृतो वरुणो मरुत्।
कुवेर ईशः पतयः पूर्व्वादीनां दिशां क्रमात्॥"

तद्दिक्पतयो मिथुनतुलाकुम्भराशयश्च। यथा,

"प्रागादिककुभान्नाथा यथासंख्यं प्रदक्षिणम्।
मेषाद्या राशयो मेयाक्षिराद्यपि परिभ्रमात्॥"
इति ज्योतिस्तत्त्वम्॥

पश्य, य, प्रशंसा। विस्मयः। इति शब्दरत्नावली॥ (पश्यतीति व्युत्पत्त्या "पाघ्राध्माधेट्दृशः शः।" ३।१।१३७। इति शप्रत्ययेन पश्यो वाच्यलिङ्गः। दर्शकः। यथा, मुण्डकोपनिषदि। ३।१।३।

"यदा पश्यः पश्यते रुक्मवर्णं
कर्त्तारमीशं पुरुषं ब्रह्मयोनिम्।
तदा विद्वान् पुण्यपापे विधूय
निरञ्जनः परमं साम्यमुपैति॥")

पश्यतिकर्म्मा, [न्] पुं, (पश्यतिर्दर्शनमेव कर्म्म यस्य।) दर्शनकर्म्मा। तद्वैदिकपर्य्यायाः। चिकेतत् १ चाकनत् २ आचष्टे ३ चष्टे ४ विचष्टे ५ विचर्षणिः ६ विश्वचर्षणिः ७ अवचाकशत् ८। इत्यष्टौ पश्यतिकर्म्माणः। इति वेदनिघण्टौ ३ अध्यायः॥

पश्यतोहरः, त्रि, (पश्यन्तं जनमनादृत्य हरतीति। हृञ् हरणे+अच्। "षष्ठी चानादरे।" २।३।३८। इति अनादरे षष्ठी। "वाग्दिक्पश्यद्भ्यो युक्तिदण्डहरेषु।" ६।३।२१। इत्यस्य वार्त्ति इति षष्ठ्या अलुक्।) चौरः। यथा, हेमचन्द्रे। ३।४६।

"यः पश्यतो हरेदर्थं स चौरः पश्यतोहरः॥"

पश्यन् [त्], त्रि, (पश्यतीति। दृशिरौ प्रेक्षणे+"लटः शतृशानचाविति।" ३।२।१२४। इति शतृ।) ईक्षणकर्त्ता। इति व्याकरणम्॥ (यथा, मार्कण्डेये। ८२।२८।

"इत्युक्ता सा भगवती चण्डिका चण्डविक्रमा।
पश्यतामेव देवानां तत्रैवान्तरधीयत॥")

पश्यन्ती, स्त्री, (पश्यति या दृश्+शतृ+ङीप्। ततः "शप्श्यनोर्नित्यम्।"७।१।८१। इति नुम्।) मूलाधारोत्थितहृदयगतनादरूपवर्णः। यथा,—

"मूलाधारात् प्रथममुदितो यस्तु तारः पराख्यः
पश्चात् पश्यन्त्यथ हृदयगो बुद्धियुङ्मध्यमाख्यः॥"
इत्यलङ्कारकौस्तुभः॥

(यथाच,—

"वैखरीशक्तिनिष्पत्तिर्मध्यमा श्रुतिगोचरा।
द्योतितार्था तु पश्यन्ती सूक्ष्मा वागनपायिनी॥"
इति मल्लिनाथधृतवाक्यम्॥

ईक्षणकर्त्री। इति व्याकरणम्॥)

पश्वाचारः, पुं, (पशूनां तन्त्रोक्ताधिकारिविशेषाणामाचारः।) आचारविशेषः। यथा,—

"वेदोक्तेन विधानेन देवीं कामसङ्कल्पपूर्व्वकम्।
स एव वैदिकाचारः पश्वाचारः स उच्यते॥"
इत्याचारभेदतन्त्रम्॥

पष, क बन्धे। इति कविकल्पद्रुमः॥ (चुरां-परं-सकं-सेट्।) क, पाषयति। तालव्यान्त एवायमिति वद्वहः। दन्त्यान्त इति केचित्। मूर्द्धन्यान्तपाठस्तु कस्यचिदनुरोधात्। इति दुर्गादासः॥

पष, ञ बाधे। ग्रन्थे। इति कविकल्पद्रुमः॥ (भ्वां-उभं-सकं-सेट्।) ञ, पषति पषते। बाधो विहतिः। ग्रन्थो ग्रन्थनम्। मूर्द्धन्यस्थाने सर्वशेन केचित् पठन्ति। इति दुर्गादासः॥

पष, त क अनुपसर्गादन्यबाधयोः। सर्शगत्योः। इति कविकल्पद्रुमः॥ (अदन्तचुरां-परं-सकं-सेट्।) मूर्द्धन्योपधः। क, पषयति। अनुपसर्गादिति सोपसर्गस्य प्रयोगो निषिध्यते। बाधो विहतिः। इति दुर्गादासः॥

पस, इ क नाशे। इति कविकल्पद्रुमः। (चुरां-परं-सकं-सेट्।) नाश इह नष्टीकरणम्। इ क, पंसयति पापं गङ्गा। इति दुर्गादासः॥

पस, क बन्धे। इति कविकल्पद्रुमः॥ (चुरां-परं-सकं सेट्।) क, पासयति। पृथक्पाठादयं न मित्। अन्यथा पस कि ष इत्यनेनैवेष्टसिद्धे पृथक्पाठोऽनर्थकः स्यात्। इति दुर्गादासः॥

पस, ञ बाधे। ग्रन्थे। इति कविकल्पद्रुमः। (भ्वां-उभं-सकं-सेट्।) ञ, पसति पसते। इति दुर्गादासः॥

पस्त्यं, क्ली, (अपस्त्यायन्ति सङ्घीभूय तिष्ठन्ति जीवा यत्र। अप+स्त्यै सङ्घातशब्दयोः+"आतश्चोपसर्गे।" ३।१।१३६। इति कः। उपसर्गस्याकारलोपो निपातनात्।) गृहम्। इति हेमचन्द्रः। ४।५६॥ (यथा, ऋग्वेदे। १०।९६।११।
[सूर्याय॥")
प्र पस्त्यमसुर हर्य्यतं गोराविष्कृधि हरये

पह्लवः, पुं, श्मश्रुधारिम्लेच्छजातिविशेषः। तस्य विवरणं यथा, हरिवंशे। १४।१५—१९।

"सगरस्तां प्रतिज्ञाञ्च गुरोर्वाक्यं निशम्य च।
धर्म्मं जघान तेषां वै वेशान्यत्वं चकार ह॥
अर्द्धं शकानां शिरसो मुण्डयित्वा व्यसर्ज्जयत्।
यवनानां शिरः सर्व्वं काम्बोजानान्तथैव च॥
पारदा मुक्तकेशाश्च पह्लवाः श्मश्रुधारिणः।
निःस्वाध्यायवषट्काराः कृतास्तेन महात्मना॥
शका यवनकाम्बोजाः पारदाः पह्लवास्तथा।
कोलाः सर्पाः समहिषा दार्व्वाश्चोलाः सकेरलाः॥
सर्व्वे ते क्षत्त्रियास्तात! धर्म्मस्तेषां निराकृतः।
वशिष्ठवचनाद्राजन्! सगरेण महात्मना॥"।
(क्वचित् पह्नवः पाठोऽपि दृश्यते। यथा, गोः रामायणे। १।५५।१८।

"तस्या हुम्भारवोत्सृष्टाः पह्नवाः शतशो नृप!।
नाशयन् बलं सर्व्वं विश्वामित्रस्य पश्यतः॥")

पह्निका, स्त्री, वारिपर्णी। इति शब्दमाला॥

पा, पाने। इति कविकल्पद्रुमः॥ (भ्वां-परं-सकं-अनिट्।) अस्यैव पिबादेशः। पिबति पयः पान्थः। इति दुर्गादासः॥

पा, ल रक्षणे। इति कविकल्पद्रुमः॥ (अदां-परं-सकं-अनिट्।) ल, पाति। इति दुर्गादासः॥

पाः, त्रि, ( पिबतीति । पा पाने+क्विप् । ) पानकर्त्ता । (पाति रक्षतीति । पा रक्षणे+क्विप् ।) रक्षणकर्त्ता । ("विश्वं पातीति विश्वपाः ।" इति मुग्धबोधव्याकरणम् ।)

पांशवः, पु, (पांशोर्लवणविशेषस्य विकारः । पांशु + अण् ।) लवणविशेषः । पाङ्गा लोन इति भाषा । तत्पर्य्यायः । रोमकम् २ औद्भिज्जम् ३ वसुकम् ४ वसुपांशुः ५ ऊषरजम् ६ औषरम् ७ ऐरिणम् ८ ऊर्व्वम् ९ सहम् १० । अस्य गुणाः । तीक्ष्णत्वम् । अत्युष्णत्वम् । कटुत्वम् । तिक्तत्वम् । दीपनत्वम् । दाहशोषकरत्वम् । ग्राहित्वम् । पित्तकोपकरत्वञ्च । इति राजनिर्घण्टः ।

"औद्भिदं पांशुलवणं यज्जातं भूमितः स्वयम् ।
क्षारं गुरु कटु स्निग्धं शीतलं वातनाशनम् ॥"
इति भावप्रकाशः ॥

पांशुः, पु, ( पंशयति नाशयति आत्मानमिति । पशि नाशने + "अर्ज्जिदृशिकमीति ।" उणां । १ । २८ । इति कुः दीर्घश्च । ) धूलिः । इत्यमरः । ३ । ३ । १८ ॥ (यथा, मनुः । ४ । १०२ ।
"कर्णश्रवेऽनिले रात्रौ दिवा पांशुसमूहने ।
एतौ वर्षास्वनध्यायावध्यायज्ञाः प्रचक्षते ॥" )
शुष्कार्द्रचिरसञ्चितगोमयः । सार इति भाषा ॥ इति मेदिनी । शे, ११ ॥ पर्पटः । कर्पूरविशेषः । इति राजनिर्घण्टः ॥ ( दन्त्यसकारान्तोऽपि दृश्यते । )

पांशुकासीसं, क्ली, (पांशुरिव कासीसम् ।) कासीसम् । इति राजनिर्घण्टः ॥

पांशुकुली, स्त्री, ( पांशुना कोलति व्याकुलीभवतीति । कुल+कः । ततः स्त्रियां ङीष् । ) राजमार्गः । यथा । "रथ्या पांशुकुली भवेत् ।" इति हारावली । ११२ ॥

पांशुकूलं, क्ली, ( पांशोः कूलमिव । ) अनामपट्टोलिका । यथा, त्रिकाण्डशेषे ।
"शासनं धर्म्मकीलः स्यात्कुलिः शुल्कशासनम् ।
पट्टोलिका कृष्णकीला पांशुकूलं न कस्यचित् ॥"

पांशुचत्वरः, पुं, (पांशुभिश्चत्वर इव ।) घनोपलः । इति शब्दमाला ॥

पांशुचन्दनः, पुं, ( पांशुश्चिताभस्मरूपचन्दनमिव यस्य । ) शिवः । इति त्रिकाण्डशेषः ॥

पांशुचामरः, पुं, (पांशुर्धूलिश्चामर इव यस्य ।) पटवासः । इति जटाधरः ॥ संयु इति भाषा ॥ (पांशौ दूर्वा चामर इव यस्य ।) दूर्वाचिततटी भूमिः । वर्द्धावकः । प्रशंसा । पुरोटिः । धूलिगुच्छकः । इति मेदिनी । रे, २०५ ॥

पांशुजं, क्ली, ( पांशोर्जायते इति । पांशु+जन् +डः । ) पांशुलवणम् । पाङ्गा लोन इति भाषा ॥ तत्पर्य्यायः । ऊषम् २ औद्भिदम् ३ । पाक्यम् ४ लवणम् ५ पटु ६ । इति रत्नमाला ॥ अस्य गुणाः । भेदकत्वम् । पाचनत्वम् । पित्तकारित्वम् । इति राजवल्लभः ॥

पांशुपत्रं, क्ली, ( पांशुः कर्पूर इव गन्धि पत्रमस्य । ) वास्तूकम् । इति शब्दमाला ॥

पांशुमर्द्दनः, पुं, ( मृद्यतेऽसाविति । मृद् + ल्युट् । मर्द्दनः । ततः पांशुः मर्द्दनो यत्र । यद्वा पांशोर्मर्द्दनं यत्र । ) केदारः । इति त्रिकाण्डशेषः ॥

पांशुरः, पुं, ( पांशुं चिरसञ्चितगोमयादिकमुत्पत्तित्वेन रातीति । पांशु+रा+कः । ) दंशकः । डाँश इति भाषा ॥ पीठसर्पी । खञ्जः । इति हारावली । १२३ ॥ ( पांशुरस्यास्तीति । "नगपांसुपाण्डुभ्यश्च ।" ५ । २ । १०७ । इत्यस्य वार्त्तिं इति रः । पांशुविशिष्टे, त्रि । यथा, ऋग्वेदे । १ । २२ । १७ ।
"इदं विष्णुर्विचक्रमे त्रेधा निदधे पदम् ।
समूढमस्य पांशु(सु)रे ॥" )

पांशुरागिणी, स्त्री, ( पांशुरागो विद्यतेऽस्याः । इनिः स्त्रियां ङीप् च ।) महामेदा । इति राजनिर्घण्टः ॥

पांशुलः, पु, ( पांशुर्विद्यतेऽस्य । पांशु + "सिध्मादिभ्यश्च ।" ५ । २ । ९७ । इति लच् ।) हरः । पापी । इति शब्दरत्नावली ॥ पुंश्चलः । शम्भोः खट्वाङ्गम् । इति मेदिनी । ले, १०८ ॥ पूतिकः । काँटाकरञ्ज इति भाषा । इति शब्दचन्द्रिका ॥ पांशुयुक्ते त्रि । इति धरणिः ॥ (पांशुर्दोषः पापञ्च तद्युक्ते च त्रि । यथा, रघुः । २ ।
"तस्याः खुरन्यासपवित्रपांशु
मपांशुलानां धुरि कीर्त्तनीया ।
मार्गं मनुष्येश्वरधर्म्मपत्नी
श्रुतेरिवार्थं स्मृतिरन्वगच्छत् ॥" )

पांशुला, स्त्री, (पांशुल + टाप् ।) कुलटा । भूमिः । इति शब्दरत्नावली ॥ केतकी । रजस्वला । इति राजनिर्घण्टः ॥

पांसनः, त्रि, ( पंसयति गुणादिकं नाशयतीति । पसि+ल्युः । बाहुलकात् दीर्घः ।) दूषकः । इति त्रिकाण्डशेषः ॥ ( यथा, महाभारते । १ । १५४ । ३३ ॥
"निरर्थकस्त्वयि हते मयार राक्षसपांसन ! ।
वनमेतद्धारयिष्यन्ति पुरुषा वनचारिणः ॥")

पांसुः, पु, ( पंसयतीति । पसि नाशने + "अर्ज्जिदृशिकमीति ।" उणां । १ । २८ । इति कुर्दीर्घश्च । ) धूलिः । ( यथा, रामायणे । २ । ८० । ९ ।
"अपरे पूरयन् कूपान् पांसुभिः श्वभ्रमायतम् ।
निम्नभागांस्तथैवाशु समांश्चक्रुः समन्ततः ॥" )
चिरसञ्चितगोमयम् । इत्युणादिकोषः भरतश्च ॥ सार इति भाषा ॥

पाकः, पुं, (पच् + भावे घञ् ।) पचनम् । क्लेदनम् । तत्पर्य्यायः । पचा १ । इत्यमरः । ३ । २ । ८ ॥ रन्धनम् । स तु सप्तप्रकारो यथा,—
"भर्ज्जनं तलनं स्वेदः पचनं क्वथनं तथा ।
तान्दूरं पुटपाकश्च पाकः सप्तविधो मतः ॥"
भर्ज्जनं कैवलाग्नौ । तलनं स्नेहद्रवे । स्वेदनं वाष्पाधारे । पचनं जले । क्वथनं सिद्धद्रवपयसि । तान्दूरं दारुकृतभाण्डे । पुटपाकः अधोर्द्ध्वाग्निना क्षेमः । इति पाकराजेश्वरः ।
स्थालीमार्ज्जनाद्योदनपरीक्षान्तो व्यापारनिचयः पाकः । इति स्मृतिः ॥ * ॥ पाकभाण्डस्य व्याज्यत्वं यथा,—
"नित्यं नूतनभाण्डेन कर्त्तव्यः पाक एव च ।
अथवा पक्षपर्य्यन्तं ततस्त्याज्यं मनीषिभिः ॥"
इति ब्रह्मवैवर्त्तपुराणम् ॥ * ॥
पाककाले शूद्रायाग्निदाननिषेधो यथा,—
"शूद्रायाग्निञ्च यो दद्यात् पाककाले विशेषतः ।
शूद्रापक्वं भवेदन्नं ब्राह्मणः शूद्रतामियात् ॥"
इति कर्म्मलोचनम् ॥ * ॥
एकोद्दिष्टश्राद्धे तस्य नित्यत्वं यथा,—
"एकोद्दिष्टन्तु कर्त्तव्यं पाकेनैव सदा स्वयम् ।
अभावे पाकपात्राणां तदह्नःसमुपोषणम् ॥"
इति श्राद्धतत्त्वम् ॥ * ॥
तस्य विधिर्यथा,—
"पूर्व्वाशाभिमुखो भूत्वा उत्तराशामुखेन वा ।
पचेदन्नञ्च मध्याह्ने सायाह्ने च विवर्ज्जयेत् ॥
अधाराशाभिमुखे पक्वमन्नं विजानता ।
पूर्व्वामुखो धर्म्मकामः शोकहानिश्च दक्षिणे ।
श्रीकामश्चोत्तरमुखे पतिकामश्च पश्चिमे ।
ऐशान्याभिमुखे पक्त्वा दरिद्रो जायते नरः ॥
यदा तु आयसे पात्रे पक्वमश्नाति वै द्विजः ।
स पापिष्ठोऽपि भुङ्क्तेऽन्नं रौरवे परिपच्यते ॥
ताम्रे पक्त्वा चन्द्रमानिर्म्मलो भवति वै स्वयम् ॥
पित्तल्यां पक्वमन्नञ्च पित्रर्थेण यशस्विनि ! ।
पुण्डरीकस्य यज्ञस्य लभते फलमीप्सितम् ॥
मातुलेन तु यत् पक्वं भगिन्या च कनिष्ठया ।
असगोत्रेण यत् पक्वं शोणितं तदपि स्मृतम् ॥
अभक्तेन च यत् पक्वं स्त्रिया पक्वगतेन च ।
पक्वपात्रे च यत् पक्वं तत् सर्व्वं निष्फलं भवेत् ॥
उडुम्बरेण काष्ठेन कदम्बस्य दलेन च ।
शालेन करमर्द्दन उदरावर्त्तकेन च ॥
पक्वान्नं नैव भुञ्जीत भुक्त्वा रात्रिमुपावसेत् ।
गर्हितान्नमतीवास्तं भुक्त्वा कृच्छ्रं समाचरेत् ।
अप्रजा या तु वनिता नाश्नीयादेव तद्गृहे ॥
शालकाष्ठस्य पक्वान्नं शिरीषकस्य चैव हि ।
कलिपर्व्वातकस्यैव वैयाघ्रकस्य च ।
भेरुण्डशाल्मलेश्चापि पक्वान्नं गर्हितं स्मृतम् ॥
यदा स्वकपपात्रे तु पक्वं वै सार्व्वकालिकम् ।
मासे पक्षे तथाष्टौ च तत्पात्रं विसृजेत् यतौ ॥
मधुः पाके तथा सिंहे मिथुने वा वरानने ! ।
यः कुर्य्याद्दोषमन्नं देवि ! तत्क्षणेव विशुध्यति ॥
एकदा तु जलं दद्यात् द्विवारं न प्रदापयेत् ।
त्रिभागं पूरयेत् पात्रं चतुर्थांशं न दापयेत् ॥"
इति मत्स्यसूक्ते ४९ पटलः ॥ * ॥
परिणतिः । (यथा, मार्कण्डेये । ७० । १४ ।
"स्वकर्म्मफलपाकेन भर्त्तुस्तस्य महात्मनः ।
वियोजिताहं तद्दुष्कर्म्माज्ञौ निशाचरः ॥"
पिबति स्तन्यादिकं इति । पा पाने + "इण्भीकापाशल्यतिमर्चिभ्यः कन् ।" उणां । ३ । ४३ । इति कन् । ) शिशुः । अस्य कैशस्य पौरुषम् । स्थाल्यादि । इति मेदिनी । के, २५ ॥

कालेन तीर्थसलिलानि पुनन्ति पापं
पादोदकं भगवतः प्रपुनाति सद्यः ॥"
स्मृतौ च ।
"त्रिरात्रिफलदा नद्यो याः काश्चिदसमुद्रगाः ।
समुद्रगाश्च पक्षस्य मासस्य सरितां पतिः ॥
षण्मासफलदा गोदा वत्सरस्य तु जाह्नवी ।
पादोदकं भगवतो द्वादशाब्दफलप्रदम् ॥"
तन्नित्यता च गरुडपुराणे ।
"जलञ्च येषां तुलसीविमिश्रितं
पादोदकं चक्रशिलासमुद्भवम् ।
नित्यं त्रिसन्ध्यं स्रवते न गात्रं
खगेन्द्र ! ते धर्मवहिष्कृता नराः ॥"
अथ श्रीचरणोदकपानमाहात्म्यम् । पाद्मे गौतमाम्बरीषसंवादे ।
"हरेः स्नानावशेषन्तु जलं यस्योदरे स्थितम् ।
अम्बरीष ! प्रणम्योच्चैः पादपांशुः प्रगृह्यताम् ॥"
तत्रैव देवदूतविकुण्डलसंवादे ।
"ये पिबन्ति नरा नित्यं शालग्रामशिलाजलम् ।
पञ्चगव्यसहस्रैस्तु सेवितैः किं प्रयोजनम् ॥
कोटितीर्थसहस्रैस्तु सेवितैः किं प्रयोजनम् ।
नित्यं यदि पिबेत् पुण्यं शालग्रामशिलाजलम् ॥
शालग्रामशिलातोयं यः पिबेद्विन्दुना समम् ।
मातुः स्तन्यं पुनर्नैव स पिबेन्मुक्तिभाग्नरः ॥"
किञ्च ।
"दहन्ति नरकान् सर्व्वान् गर्भवासञ्च दारुणम् ।
पीतं यैस्तु सदा नित्यं शालग्रामशिलाजलम् ॥"
तत्रैव श्रीयमधूम्रकेतुसंवादे ।
"शालग्रामशिलातोयं विन्दुमात्रं तु यः पिबेत् ।
सर्व्वपापैः प्रमुच्येत मुक्तिमार्गे स्ततोद्यमः ॥"
तत्रैव पुलस्त्यभगीरथसंवादे ।
"पादोदकस्य माहात्म्यं भगीरथ ! वदामि ते ।
पावनं सर्व्वतीर्थेभ्यो हत्याकोटिविनाशनम् ॥
धृते शिरसि पीते च सर्व्वास्तुष्यन्ति देवताः ।
प्रायश्चित्तन्तु पापानां कलौ पादोदकं हरेः ॥"
किञ्च ।
"त्रिभिः सारस्वतं तोयं सप्ताहेन तु नार्म्मदम् ।
सद्यः पुनाति गाङ्गेयं दर्शनादेव यामुनम् ॥
पुनन्त्येतानि तोयानि स्नानदर्शनकीर्त्तनैः ।
पुनाति स्मरणादेव कलौ पादोदकं हरेः ॥
अर्च्चितैः कोटिभिर्लिङ्गैर्नित्यं यत् क्रियते फलम् ।
तत् फलं शतसाहस्रं पीतैः पादोदकैर्हरेः ॥
अशुचिर्वा दुराचारो महापातकसंयुतः ।
स्पृष्ट्वा पादोदकं विष्णोः सदा शुद्ध्यति मानवः ॥
पापकोटियुतो यस्तु मृत्युकाले शिरे मुखे ।
देहे पादोदकं यस्य न प्रयाति यमालयम् ॥
न दानं न हविर्य्येषां स्वाध्यायो न सुरार्च्चनम् ।
तेऽपि पादोदकं पीत्वा प्रयान्ति परमां गतिम् ॥
विशाखाऋक्षसंयुक्ता वैशाखी किं करिष्यति ।
पिण्डारके महातीर्थे उज्जयिन्यां भगीरथ ! ॥
माघमासे प्रयागे तु स्नानं वै किं करिष्यति ।
प्रयागं सततं तस्य यस्य पादोदकं हरेः ॥
कार्त्तिके कार्त्तिकीयोगे किं करिष्यति पुष्करे ।
नित्यन्तु पुष्करं तस्य यस्य पादोदकं हरेः ॥
प्रबोधवासरे प्राप्ते मथुरायाञ्च तस्य किम् ।
नित्यञ्च यामुनं स्नानं यस्य पादोदकं हरेः ॥
काश्यामुत्तरवाहिन्यां गङ्गायान्तु मृतस्य किम् ।
यस्य पादोदकं विष्णोर्मुखे चैवावतिष्ठते ॥"
किञ्च ।
"पीत्वा पादोदकं विष्णोर्योऽन्यतीर्थानि गच्छति ।
अनर्घरत्नमुत्सृज्य लोष्ट्रं वाञ्छति दुर्म्मतिः ॥
कुरुक्षेत्रसमो देशो विन्दुपादोदकं मतः ।
पतेद् यत्राचये पुण्यं नित्यं भवति तद्गृहे ॥
गयापिण्डसमं पुण्यं पुत्त्राणामपि जायते ।
पादोदकेन देवस्य ये कुर्य्युः पितृतर्पणम् ॥
नासुराणां भयं तस्य प्रेतजन्यं न राक्षसम् ।
न रोगस्य भयं चैव नास्ति विघ्नकृतं भयम् ॥
न दुष्टा नैव घोराश्चाप्यपमृत्युभयं नहि ।
ग्रहाः पीड़ां न कुर्व्वन्ति वैरा नश्यन्ति दारुणाः ॥
किं तस्य तीर्थगमने देवर्षीणाञ्च दर्शने ।
यस्य पादोदकं मूर्द्ध्नि शालग्रामशिलोद्भवम् ॥
प्रीतो भवति मार्त्तण्डः प्रीतो भवति केशवः ।
ब्रह्मा भवति सुप्रीतः प्रीतो भवति शङ्करः ॥
पादोदकस्य माहात्म्यं यः पठेत् केशवाग्रतः ।
स याति परमं स्थानं यत्र देवो जनार्द्दनः ॥"
ब्रह्माण्डपुराणे श्रीब्रह्मनारदसंवादे ।
"प्रायश्चित्तं यदि प्राप्तं कृच्छ्रं वा लघमर्षणम् ।
सोऽपि पादोदकं पीत्वा शुद्धिं प्राप्नोति तत्क्षणात् ॥
अशौचं नैव विद्येत सूतके मृतकेऽपि च ।
येषां पादोदकं मूर्द्ध्नि प्राशनं ये प्रकुर्व्वते ॥
अन्तकालेऽपि यस्येह दीयते पादयोर्जलम् ।
सोऽपि सद्गतिमाप्नोति सदाचारैर्व्वहिष्कृतः ॥
अपेयं पिबते यस्तु भुङ्क्ते यच्चाप्यभोजनम् ।
अगम्यागमना ये वै पापाचाराश्च ये नराः ।
तेऽपि पूता भवन्त्याशु सद्यः पादाम्बुसेवनात् ॥"
किञ्च ।
"अपवित्रं यदन्नं स्यात् पानीयं चापि पापिनाम् ।
भुक्ता पीत्वा विशुद्धः स्यात् पीत्वा पादोदकं हरेः ॥
तप्तकृच्छ्रात् पञ्चगव्यात् महाकृच्छ्रादिशिष्यते ।
चान्द्रायणात् पादकृच्छ्रात् पराकादपि सुव्रत ।
कायशुद्धिर्भवेदाशु पीत्वा पादोदकं हरेः ॥
अगुरुं कुङ्कुमं चापि कर्पूरं चानुलेपनम् ।
विष्णुपादाम्बुसंलग्नं तद्धि पावनपावनम् ॥
हरिपूतन्तु यत्तोयं विष्णुना प्रभविष्णुना ।
तद्वै पापहरं पुत्त्र ! किं पुनः पादयोर्जलम् ॥
एतदर्थमहं पुत्त्र ! शिरसा विष्णुतत्परः ।
धारयामि पिबाम्येव माहात्म्यं विदितं मम ॥
प्रियत्वमग्रजः पुत्त्र त्वदर्थं गदितं मया ।
रहस्यं मे त्वनर्हस्य न वक्तव्यं कदाचन ॥
धारयस्व सदा मूर्द्ध्नि प्राशनं कुरु नित्यशः ॥
जन्ममृत्युजराद्दुःखैर्मोक्षं यास्यसि पुत्त्रक ! ॥"
विष्णुधर्म्मोत्तरे ।
"सद्यः फलप्रदं पुण्यं सर्व्वपापविनाशनम् ।
सर्व्वमङ्गलमङ्गल्यं सर्व्वदुःखविनाशनम् ।
दुःस्वप्ननाशनं पुण्यं विष्णुपादोदकं शुभम् ॥
सर्व्वोपद्रवहन्तारं सर्व्वव्याधिविनाशनम् ।
सर्व्वोत्पातप्रशमनं सर्व्वतापनिवारणम् ॥
सर्व्वकल्याणसुखदं सर्व्वकामफलप्रदम् ।
सर्व्वसिद्धिप्रदं धन्यं सर्व्वधर्म्मविवर्द्धनम् ॥
सर्व्वशत्रुप्रशमनं सर्व्वभोगप्रदायकम् ।
सर्व्वतीर्थस्य फलदं मूर्द्ध्नि पादाम्बुधारणम् ॥
प्रयागस्य प्रभासस्य पुष्करस्य च सेवने ।
पृथूदकस्य तीर्थस्य आचान्तो लभते फलम् ॥
चक्रतीर्थे फलं यादृक् तादृक् पादाम्बुधारणात् ॥
सरस्वत्यां गयायाञ्च गत्वा यत् प्राप्नुयात् फलम् ।
तत् फलं लभते श्रेष्ठं मूर्द्ध्नि पादाम्बुधारणात् ॥"
स्कान्दे ।
"पादोदकस्य माहात्म्यं देवो जानाति शङ्करः ।
विष्णुपादच्युता गङ्गा शिरसा येन धारिता ॥
स्थानं नैवास्ति पापस्य देहिनां देहमध्यतः ।
सबाह्याभ्यन्तरं यस्य व्याप्तं पादोदकेन वै ॥
पादोदं विष्णुनैवेद्यमुदरे यस्य तिष्ठति ।
नाश्रयं लभते पापं स्वयमेव विनश्यति ॥
महापापग्रहग्रस्तो व्याप्तो रोगशतैरपि ।
हरेः पादोदकं पीत्वा मुच्यते नात्र संशयः ॥
शिरसा तिष्ठते येषां नित्यं पादोदकं हरेः ।
किं करिष्यन्ति ते लोके तीर्थकोटिमनोरथैः ॥
अयमेव परो धर्म्म इदमेव परं तपः ।
इदमेव परं तीर्थं विष्णुपादाम्बु यत् पिबेत् ॥"
तत्रैव शिवोमासंवादे ।
"विलयं यान्ति पापानि पीते पादोदके हरेः ।
किं पुनर्विष्णुपादोदं शालग्रामशिलामृतम् ॥
विशेषेण हरेत् पापं ब्रह्महत्यादिकं प्रिये ॥
पीते पादोदके विष्णोर्यदि प्राणैर्विमुच्यते ।
हत्वा यमभटान् सर्व्वान् वैष्णवं लोकमाप्नुयात् ।
तत्रैव शिवकार्त्तिकेयसंवादे शालग्रामशिलामाहात्म्ये ।
"छिन्नस्तेन महासेन । गर्भवासः सुदारुणः ।
पीतं येन सदा विष्णोः शालग्रामशिलाजलम् ॥
ये पिबन्ति नरा नित्यं शालग्रामशिलाजलम् ।
पञ्चगव्यसहस्रैस्तु प्राशितैः किं प्रयोजनम् ॥
प्रायश्चित्ते समुत्पन्ने किं दानैः किमुपोषणैः ।
चान्द्रायणैश्च तीर्थैश्च पीत्वा पादोदकं शुचिः ॥
वृहन्नारदीये लुब्धकोपाख्यानारम्भे ।
हरिपादोदकं यस्तु क्षणमात्रञ्च धारयेत् ।
स स्नातः सर्व्वतीर्थेषु विष्णोः प्रियतरस्तथा ॥
अकालमृत्युशमनं सर्व्वव्याधिविनाशनम् ।
सर्व्वदुःखोपशमनं हरिपादोदकं शुभम् ॥"
तत्रैव तदुपाख्यानान्ते ।
"हरिपादोदकस्पर्शाल्लुब्धको वीतकल्मषः ।
दिव्यं विमानमारुह्य मुनिमेनमथाब्रवीत् ॥
हरिपादोदकं यस्मान्मयि त्वं क्षिप्तवान् मुने ।
प्रापितोऽस्मि त्वया तस्मात्तद्विष्णोः परमं पदम् ॥"
हरिभक्तिसुधोदये ।
"पादं पूर्व्वं किल स्पृष्ट्वा गङ्गाभूत् सर्व्वमोक्षदा ।
विष्णोः सद्यस्तु तत्सङ्गि पादाम्बु कथमीर्य्यते ॥

कालेन तीर्थसलिलानि पुनन्ति पापं
पादोदकं भगवतः प्रपुनाति सद्यः ॥”
स्मृतौ च ।
“त्रिरात्रिफलदा नद्यो याः काश्चिदसमुद्रगाः ।
समुद्रगाश्च पक्षस्य मासस्य सरितां पतिः ॥
षण्मासफलदा गोदा वत्सरस्य तु जाह्नवी ।
पादोदकं भगवतो द्वादशाब्दफलप्रदम् ॥”
तन्नित्यता च गरुड़पुराणे ।
“जलञ्च येषां तुलसीविमिश्रितं
पादोदकं चक्रशिलासमुद्भवम् ।
नित्यं त्रिसन्ध्यं प्रभवेन्न गात्रं
खगेन्द्र ! ते धर्म्मबहिष्कृता नराः ॥”
अथ श्रीचरणोदकपानमाहात्म्यम् । पाद्मे गौतमाम्बरीषसंवादे ।
“हरेः स्नानावशेषन्तु जलं यस्योदरे स्थितम् ।
अम्बरीष ! प्रणम्योच्चैः पादपांशुः प्रगृह्यताम् ॥”
तत्रैव देवदूतविकुण्डलसंवादे ।
“ये पिबन्ति नरा नित्यं शालग्रामशिलाजलम् ।
पञ्चगव्यसहस्रैस्तु सेवितैः किं प्रयोजनम् ॥
कोटितीर्थसहस्रैस्तु सेवितैः किं प्रयोजनम् ।
नित्यं यदि पिबेत् पुण्यं शालग्रामशिलाजलम् ॥
शालग्रामशिलातोयं यः पिबेद्बिन्दुना समम् ।
मातुः स्तन्यं पुनर्नैव स पिबेन्मुक्तिभाग्नरः ॥”
किञ्च ।
“दहन्ति नरकान् सर्व्वान् गर्भवासञ्च दारुणम् ।
पीतं यैस्तु सदा नित्यं शालग्रामशिलाजलम् ॥”
तत्रैव श्रीयमधूम्रकेतुसंवादे ।
“शालग्रामशिलातोयं विन्दुमात्रं तु यः पिबेत् ।
सर्व्वपापैः प्रमुच्येत मुक्तिमार्गे रतो यमः ॥”
तत्रैव पुलस्त्यभगीरथसंवादे ।
“पादोदकस्य माहात्म्यं भगीरथ ! वदामि ते ।
पावनं सर्व्वतीर्थेभ्यो हत्याकोटिविनाशनम् ॥
धृते शिरसि पीते च सर्व्वास्तुष्यन्ति देवताः ।
प्रायश्चित्तन्तु पापानां कलौ पादोदकं हरेः ॥”
किञ्च ।
“त्रिभिः सारस्वतं तोयं सप्ताहेन तु नार्मदम् ।
सद्यः पुनाति गाङ्गेयं दर्शनादेव यामुनम् ॥
पुनन्त्येतानि तोयानि स्नानदर्शनकीर्त्तनैः ।
पुनाति स्मरणादेव कलौ पादोदकं हरेः ॥
अर्च्चितैः कोटिभिर्लिङ्गैर्नित्यं यत् क्रियते फलम् ।
तत् फलं शतसाहस्रं पीतैः पादोदकैर्हरेः ॥
अशुचिर्वा दुराचारो महापातकसंयुतः ।
स्पृष्ट्वा पादोदकं विष्णोः सदा शुद्ध्यति मानवः ॥
पापकोटियुतो यस्तु मृत्युकाले शिरे मुखे ।
देहे पादोदकं यस्य न प्रयाति यमालयम् ॥
न दानं न हविर्येषां स्वाध्यायो न सुरार्च्चनम् ।
तेऽपि पादोदकं पीत्वा प्रयान्ति परमां गतिम् ॥
विशाखात्र्यक्षसंयुक्ता वैशाखी किं करिष्यति ।
पिण्डारके महातीर्थे लब्धयित्वा भगीरथ ! ॥
माघमासि प्रयागे तु स्नानं वै किं करिष्यति ।
प्रयागं सततं तस्य यस्य पादोदकं हरेः ॥
कार्त्तिके कार्त्तिकीयोगे किं करिष्यति पुष्करे ।
नित्यन्तु पुष्करं तस्य यस्य पादोदकं हरेः ॥
प्रबोधवासरे प्राप्ते मथुरायाञ्च तस्य किम् ।
नित्यञ्च यामुनं स्नानं यस्य पादोदकं हरेः ॥
काश्यामुत्तरवाहिन्यां गङ्गायान्तु मृतस्य किम् ।
यस्य पादोदकं विष्णोर्मुखे चैवावतिष्ठते ॥”
किञ्च ।
“हित्वा पादोदकं विष्णोर्योऽन्यतीर्थानि गच्छति ।
अनर्घ्यरत्नमुत्सृज्य लोष्ट्रं वाञ्छति दुर्म्मतिः ॥
कुरुक्षेत्रसमो देशो विष्णुपादोदकं मतः ।
पतेद् यत्राक्षयं पुण्यं नित्यं भवति तद्गृहे ॥
गयापिण्डसमं पुण्यं पुत्त्राणामपि जायते ।
पादोदकेन देवस्य ये कुर्य्युः पितृतर्पणम् ॥
नासुराणां भयं तस्य प्रेतजन्यं न राक्षसम् ।
न रोगस्य भयं चैव नास्ति विषकृतं भयम् ॥
न दुष्टा नैव घोराश्चाद्यापदोत्थभयं नहि ।
ग्रहाः पीड़ां न कुर्व्वन्ति वैरा नश्यन्ति दारुणाः ॥
किं तस्य तीर्थगमने देवानाञ्च दर्शने ।
यस्य पादोदकं मूर्द्ध्नि शालग्रामशिलोद्भवम् ॥
प्रीतो भवति मार्त्तण्डः प्रीतो भवति केशवः ।
ब्रह्मा भवति सुप्रीतः प्रीतो भवति शङ्करः ॥
पादोदकस्य माहात्म्यं यः पठेत् केशवाग्रतः ।
स याति परमं स्थानं यत्र देवो जनार्दनः ॥”
ब्रह्माण्डपुराणे श्रीब्रह्मनारदसंवादे ।
“प्रायश्चित्तं यदि प्राप्तं कृच्छ्रं वा त्वघमर्षणम् ।
सोऽपि पादोदकं पीत्वा शुद्धिं प्राप्नोति तत्क्षणात् ॥
अशौचं नैव विद्येत सूतके मृतकेऽपि च ।
येषां पादोदकं मूर्द्ध्नि प्राशनं ये प्रकुर्व्वते ॥
अन्तकालेऽपि यस्येह दीयते पादयोर्जलम् ।
सोऽपि सद्गतिमाप्नोति सदाचारैर्बहिष्कृतः ॥
अपेयं पिबते यस्तु भुङ्क्ते यश्चाप्यभोजनम् ।
अगम्यागमना ये वै पापाचाराश्च ये नराः ।
तेऽपि पूता भवन्त्याशु सद्यः पादाम्बुसेवनात् ॥”
किञ्च ।
“अपवित्रं यदन्नं स्यात् पानीयं चापि पापिनाम् ।
भुक्त्वा पीत्वा विशुद्धः स्यात् पीत्वा पादोदकं हरेः ॥
तप्तकृच्छ्रात् पञ्चगव्यात् महाकृच्छ्राद्विशिष्यते ।
चान्द्रायणात् पादकृच्छ्रात् पराकादपि सुव्रत ।
कायशुद्धिर्भवेदाशु पीत्वा पादोदकं हरेः ॥
अगुरुं कुङ्कुमं चापि कर्पूरं चानुलेपनम् ।
विष्णुपादाम्बुसंलग्नं तद्धि पावनपावनम् ॥
हस्तिपूतन्तु यत्तोयं विष्णुना प्रभविष्णुना ।
तद्धि पापहरं पुत्त्र ! किं पुनः पादयोर्जलम् ॥
एतदर्थमहं पुत्त्र ! शिरसा विष्णुतत्परः ।
धारयामि पिवाम्यद्य माहात्म्यं विदितं मम ॥
प्रियत्वमग्रजः पुत्त्र त्वदर्थं गदितं मया ।
रहस्यं मे त्वनर्हस्य न वक्तव्यं कदाचन ॥
धारयस्व सदा मूर्द्ध्नि प्राशनं कुरु नित्यशः ॥
जन्ममृत्युजरादुःखैर्मोक्षं यास्यसि पुत्त्रक ! ॥”
विष्णुधर्म्मोत्तरे ।
“सद्यः फलप्रदं पुण्यं सर्व्वपापविनाशनम् ।
सर्व्वमङ्गलमाङ्गल्यं सर्व्वदुःखनिनाशनम् ।
दुःस्वप्ननाशनं पुण्यं विष्णुपादोदकं शुभम् ॥
सर्व्वोपद्रवहन्तारं सर्व्वव्याधिविनाशनम् ।
सर्व्वोत्पातप्रशमनं सर्व्वतापनिवारणम् ॥
सर्व्वकल्याणसुखदं सर्व्वकामफलप्रदम् ।
सर्व्वसिद्धिप्रदं धन्यं सर्व्वधर्म्मविवर्द्धनम् ॥
सर्व्वशत्रुप्रशमनं सर्व्वभोगप्रदायकम् ।
सर्व्वतीर्थस्य फलदं मूर्द्ध्नि पादाम्बुधारणम् ॥
प्रयागस्य प्रभासस्य पुष्करस्य च सेवने ।
पृथूदकस्य तीर्थस्य आचान्तो लभते फलम् ॥
चक्रतीर्थे फलं यादृक् तादृक् पादाम्बुधारणात् ॥
सरस्वत्यां गयायाञ्च गत्वा यत् प्राप्नुयात् फलम् ।
तत् फलं लभते श्रेष्ठं मूर्द्ध्नि पादाम्बुधारणात् ॥”
स्कान्दे ।
“पादोदकस्य माहात्म्यं देवो जानाति शङ्करः ।
विष्णुपादच्युता गङ्गा शिरसा येन धारिता ॥
स्थानं नैवास्ति पापस्य देहिनां देहमध्यतः ।
सबाह्याभ्यन्तरं यस्य व्याप्तं पादोदकेन वै ॥
पादोदं विष्णुनैवेद्यमुदरे यस्य तिष्ठति ।
नाश्रयं लभते पापं स्वयमेव विनश्यति ॥
महापापग्रहग्रस्तो व्याप्तो रोगशतैरपि ।
हरेः पादोदकं पीत्वा मुच्यते नात्र संशयः ॥
शिरसा तिष्ठते येषां नित्यं पादोदकं हरेः ।
किं करिष्यन्ति ते लोके तीर्थकोटिमनोरथैः ॥
अयमेव परो धर्म्म इदमेव परं तपः ।
इदमेव परं तीर्थं विष्णुपादाम्बु यत् पिबेत् ॥”
तत्रैव शिवोमासंवादे ।
“विलयं यान्ति पापानि पीते पादोदके हरेः ।
किं पुनर्विष्णुपादोदं शालग्रामशिलाप्लुतम् ॥
विशेषेण हरेत् पापं ब्रह्महत्यादिकं प्रिये ॥
पीते पादोदके विष्णोर्यदि प्राणैर्विमुच्यते ।
हत्वा यमभटान् सर्व्वान् वैष्णवं लोकमाप्नुयात् ।
तत्रैव शिवकार्त्तिकेयसंवादे शालग्रामशिलामाहात्म्ये ।
“छिन्नस्तेन महासंग । गर्भवासः सुदारुणः ।
पीतं येन सदा विष्णोः शालग्रामशिलाजलम् ॥
ये पिबन्ति नरा नित्यं शालग्रामशिलाजलम् ।
पञ्चगव्यसहस्रैस्तु प्राशितैः किं प्रयोजनम् ॥
प्रायश्चित्ते समुत्पन्ने किं दानैः किमुपोषणैः ।
चान्द्रायणैश्च तीर्थैश्च पीत्वा पादोदकं शुचिः ॥
बृहन्नारदीये लुब्धकोपाख्यानारम्भे ।
हरिपादोदकं यस्तु क्षणमात्रञ्च धारयेत् ।
स स्नातः सर्व्वतीर्थेषु विष्णोः प्रियतरस्तथा ॥
अकालमृत्युशमनं सर्व्वव्याधिविनाशनम् ।
सर्व्वदुःखोपशमनं हरिपादोदकं शुभम् ॥”
तत्रैव तदुपाख्यानान्ते ।
“हरिपादोदकस्पर्शाल्लुब्धको वीतकल्मषः ।
दिव्यं विमानमारुह्य मुनिमेनमथाब्रवीत् ॥
हरिपादोदकं यस्मान्मयि त्वं क्षिप्तवान् मुने ।
प्रापितोऽस्मि त्वया तस्मात्तद्विष्णोः परमं पदम् ॥”
हरिभक्तिसुधोदये ।
“पादं पूर्व्वं किल स्पृष्ट्वा गङ्गाभूत् सर्व्वमोक्षदा ।
विष्णोः सदस्तु तत्सङ्गि पादाम्बु कथमीर्य्यते ॥

कालेन तीर्थसलिलानि पुनन्ति पापं
पादोदकं भगवतः प्रपुनाति सद्यः ॥”
स्मृतौ च ।
“त्रिरात्रिफलदा नद्यो याः काश्चिदसमुद्रगाः ।
समुद्रगाश्च पक्षस्य मासस्य सरितां पतिः ॥
षण्मासफलदा गोदा वत्सरस्य तु जाह्नवी ।
पादोदकं भगवतो द्वादशाब्दफलप्रदम् ॥”
तन्नित्यता च गरुडपुराणे ।
“जलञ्च येषां तुलसीविमिश्रितं
पादोदकं चक्रशिलासमुद्भवम् ।
नित्यं त्रिसन्ध्यं प्रवते न गात्रं
खगेन्द्र ! ते धर्मबहिष्कृता नराः ॥”
अथ श्रीचरणोदकपानमाहात्म्यम् । पाद्मे गौत-
माम्बरीषसंवादे ।
“हरेः स्नानावशेषन्तु जलं यस्योदरे स्थितम् ।
अम्बरीष ! प्रणम्योच्चैः पादपांशुः प्रगृह्यताम् ॥”
तत्रैव देवदूतविकुण्डलसंवादे ।
“ये पिबन्ति नरा नित्यं शालग्रामशिलाजलम् ।
पञ्चगव्यसहस्रैस्तु सेवितैः किं प्रयोजनम् ॥
कोटितीर्थसहस्रैस्तु सेवितैः किं प्रयोजनम् ।
नित्यं यदि पिबेत् पुण्यं शालग्रामशिलाजलम् ॥
शालग्रामशिलातोयं यः पिबेद्बिन्दुना समम् ।
मातुः स्तन्यं पुनर्नैव स पिबेन्मुक्तिभाग्नरः ॥”
किञ्च ।
“दहन्ति नरकान् सर्व्वान् गर्भवासञ्च दारुणम् ।
पीतं यैस्तु सदा नित्यं शालग्रामशिलाजलम् ॥”
तत्रैव श्रीयमधूम्रकेतुसंवादे ।
“शालग्रामशिलातोयं बिन्दुमात्रं तु यः पिबेत् ।
सर्व्वपापैः प्रमुच्येत मुक्तिमार्गे सतोद्यमः ॥”
तत्रैव पुलस्त्यभगीरथसंवादे ।
“पादोदकस्य माहात्म्यं भगीरथ ! वदामि ते ।
पावनं सर्व्वतीर्थेभ्यो हत्याकोटिविनाशनम् ॥
धृते शिरसि पीते च सर्व्वास्तुष्यन्ति देवताः ।
प्रायश्चित्तन्तु पापानां कलौ पादोदकं हरेः ॥”
किञ्च ।
“त्रिभिः सारस्वतं तोयं सप्ताहेन तु नार्मदम् ।
सद्यः पुनाति गाङ्गेयं दर्शनादेव यामुनम् ॥
पुनन्त्येतानि तोयानि स्नानदर्शनकीर्त्तनैः ।
पुनाति स्मरणादेव कलौ पादोदकं हरेः ॥
अर्च्चितैः कोटिभिर्लिङ्गैर्नित्यं यत् क्रियते फलम् ।
तत् फलं शतसाहस्रं पीतैः पादोदकैर्हरेः ॥
अशुचिर्वा दुराचारो महापातकसंयुतः ।
स्पृष्ट्वा पादोदकं विष्णोः सदा शुद्ध्यति मानवः ॥
पापकोटियुतो यस्तु मृत्युकाले शिरे मुखे ।
देहे पादोदकं यस्य न प्रयाति यमालयम् ॥
न दानं न हविर्येषां स्वाध्यायो न सुरार्च्चनम् ।
तेऽपि पादोदकं पीत्वा प्रयान्ति परमां गतिम् ॥
विशाखाऋक्षसंयुक्ता वैशाखी किं करिष्यति ।
पिण्डारके महातीर्थे उज्जयिन्यां भगीरथ ! ॥
माघमासे प्रयागे तु स्नानं वै किं करिष्यति ।
प्रयागं सततं तस्य यस्य पादोदकं हरेः ॥
कार्त्तिके कार्त्तिकीयोगे किं करिष्यति पुष्करे ।
नित्यन्तु पुष्करं तस्य यस्य पादोदकं हरेः ॥
प्रबोधवासरे प्राप्ते मथुरायाञ्च तस्य किम् ।
नित्यञ्च यामुनं स्नानं यस्य पादोदकं हरेः ॥
काश्यासुत्तरवाहिन्यां गङ्गायान्तु मृतस्य किम् ।
यस्य पादोदकं विष्णोर्मुखे चैवावतिष्ठते ॥”
किञ्च ।
“पीत्वा पादोदकं विष्णोर्योऽन्यतीर्थानि गच्छति ।
अनर्घ्यरत्नमुत्सृज्य लोष्ट्रं वाञ्छति दुर्म्मतिः ॥
कुरुक्षेत्रसमो देशो विष्णुपादोदकं मतः ।
पतेद् यत्राक्षयं पुण्यं नित्यं भवति तद्गृहे ॥
गयापिण्डसमं पुण्यं पुत्त्राणामपि जायते ।
पादोदकेन देवस्य ये कुर्य्युः पितृतर्पणम् ॥
नासुराणां भयं तस्य प्रेतजन्यं न राक्षसम् ।
न रोगस्य भयं चैव नास्ति विघ्नकृतं भयम् ॥
न दुष्टा नैव घोराश्च श्वापदोत्थभयं नहि ।
ग्रहाः पीडां न कुर्व्वन्ति वैरा नश्यन्ति दारुणाः ॥
किं तस्य तीर्थगमने देवर्षीणाञ्च दर्शने ।
यस्य पादोदकं मूर्द्ध्नि शालग्रामशिलोद्भवम् ॥
प्रीतो भवति मार्त्तण्डः प्रीतो भवति केशवः ।
ब्रह्मा भवति सुप्रीतः प्रीतो भवति शङ्करः ॥
पादोदकस्य माहात्म्यं यः पठेत् केशवाग्रतः ।
स याति परमं स्थानं यत्र देवो जनार्द्दनः ॥”
ब्रह्माण्डपुराणे श्रीब्रह्मनारदसंवादे ।
“प्रायश्चित्तं यदि प्राप्तं कृच्छ्रं वा त्वघमर्षणम् ।
सोऽपि पादोदकं पीत्वा शुद्धिं प्राप्नोति तत्क्षणात् ॥
अशौचं नैव विद्येत सूतके मृतकेऽपि च ।
येषां पादोदकं मूर्द्ध्नि प्राशनं ये प्रकुर्व्वते ॥
अन्तकालेऽपि यस्येह दीयते पादयोर्जलम् ।
सोऽपि सद्गतिमाप्नोति सदाचारैर्बहिष्कृतः ॥
अपेयं पिबते यस्तु भुङ्क्ते यच्चाप्यभोजनम् ।
अगम्यागमना ये वै पापाचाराश्च ये नराः ।
तेऽपि पूज्या भवन्त्याशु सद्यः पादाम्बुसेवनात् ॥”
किञ्च ।
“अपवित्रं यदन्नं स्यात् पानीयं चापि पापिनाम् ।
भुक्त्वा पीत्वा विशुद्धः स्यात् पीत्वा पादोदकं
हरेः ॥
तप्तकृच्छ्रात् पञ्चगव्यात् महाकृच्छ्राद्विशिष्यते ।
चान्द्रायणात् पादकृच्छ्रात् पराकादपि सुव्रत ।
कायशुद्धिर्भवेदाशु पीत्वा पादोदकं हरेः ॥
अगुरुं कुङ्कुमं चापि कर्पूरं चानुलेपनम् ।
विष्णुपादाम्बुसंलग्नं तद्वै पावनपावनम् ॥
दृष्टिपूतन्तु यत्तोयं विष्णुना प्रभविष्णुना ।
तद्वै पापहरं पुत्त्र ! किं पुनः पादयोर्जलम् ॥
एतदर्थमहं पुत्त्र ! शिरसा विष्णुतत्परः ।
धारयामि पिबाम्येव माहात्म्यं विदितं मम ॥
प्रियस्त्वमग्रजः पुत्त्र त्वदर्थं गदितं मया ।
रहस्यं मे त्वनर्हस्य न वक्तव्यं कदाचन ॥
धारयस्व सदा मूर्द्ध्नि प्राशनं कुरु नित्यशः ॥
जन्ममृत्युजरादुःखैर्मोक्षं यास्यसि पुत्त्रक ! ॥”
विष्णुधर्म्मोत्तरे ।
“सद्यः फलप्रदं पुण्यं सर्व्वपापविनाशनम् ।
सर्व्वमङ्गलमाङ्गल्यं सर्व्वदुःखविनाशनम् ।
दुःस्वप्ननाशनं पुण्यं विष्णुपादोदकं शुभम् ॥
सर्व्वोपद्रवहन्तारं सर्व्वव्याधिविनाशनम् ।
सर्व्वोत्पातप्रशमनं सर्व्वतापनिवारणम् ॥
सर्व्वकल्याणसुखदं सर्व्वकामफलप्रदम् ।
सर्व्वसिद्धिप्रदं धन्यं सर्व्वधर्म्मविवर्द्धनम् ॥
सर्व्वशत्रुप्रशमनं सर्व्वभोगप्रदायकम् ।
सर्व्वतीर्थस्य फलदं मूर्द्ध्नि पादाम्बुधारणम् ॥
प्रयागस्य प्रभासस्य पुष्करस्य च सेवने ।
पृथूदकस्य तीर्थस्य आचान्तो लभते फलम् ॥
चक्रतीर्थे फलं यादृक् तादृक् पादाम्बुधारणात् ॥
सरस्वत्यां गयायाञ्च गत्वा यत् प्राप्नुयात् फलम् ।
तत् फलं लभते श्रेष्ठं मूर्द्ध्नि पादाम्बुधारणात् ॥”
स्कान्दे ।
“पादोदकस्य माहात्म्यं देवो जानाति शङ्करः ।
विष्णुपादच्युता गङ्गा शिरसा येन धारिता ॥
स्थानं नैवास्ति पापस्य देहिनां देहमध्यतः ।
सबाह्याभ्यन्तरं यस्य व्याप्तं पादोदकेन वै ॥
पादोदं विष्णुनैवेद्यमुदरे यस्य तिष्ठति ।
नाश्रयं लभते पापं स्वयमेव विनश्यति ॥
महापापग्रहग्रस्तो व्याप्तो रोगशतैरपि ।
हरेः पादोदकं पीत्वा मुच्यते नात्र संशयः ॥
शिरसा तिष्ठते येषां नित्यं पादोदकं हरेः ।
किं करिष्यन्ति ते लोके तीर्थकोटिमनोरथैः ॥
अयमेव परो धर्म्म इदमेव परं तपः ।
इदमेव परं तीर्थं विष्णुपादाम्बु यत् पिबेत् ॥”
तत्रैव शिवोमासंवादे ।
“विलयं यान्ति पापानि पीते पादोदके हरेः ।
किं पुनर्विष्णुपादोदं शालग्रामशिलाप्लुतम् ॥
विशेषेण हरेत् पापं ब्रह्महत्यादिकं प्रिये ॥
पीते पादोदके विष्णोर्यदि प्राणैर्विमुच्यते ।
हत्वा यमभटान् सर्व्वान् वैष्णवं लोकमाप्नुयात् ।
तत्रैव शिवकार्त्तिकेयसंवादे शालग्रामशिला-
माहात्म्ये ।
“हुमस्तेन महासेन । गर्भवासः सुदारुणः ।
पीतं येन सदा विष्णोः शालग्रामशिलाजलम् ॥
ये पिबन्ति नरा नित्यं शालग्रामशिलाजलम् ।
पञ्चगव्यसहस्रैस्तु प्राशितैः किं प्रयोजनम् ॥
प्रायश्चित्ते समुत्पन्ने किं दानैः किमुपोषणैः ।
चान्द्रायणैश्च तीर्थैश्च पीत्वा पादोदकं शुचिः ॥
बृहन्नारदीये लुब्धकोपाख्यानारम्भे ।
हरिपादोदकं यस्तु क्षणमात्रञ्च धारयेत् ।
स स्नातः सर्व्वतीर्थेषु विष्णोः प्रियतरस्तथा ॥
अकालमृत्युशमनं सर्व्वव्याधिविनाशनम् ।
सर्व्वदुःखोपशमनं हरिपादोदकं शुभम् ॥”
तत्रैव तदुपाख्यानान्ते ।
“हरिपादोदकस्पर्शाल्लुब्धको वीतकल्मषः ।
दिव्यं विमानमारुह्य मुनिमेनमथाब्रवीत् ॥
हरिपादोदकं यस्मान्मयि त्वं क्षिप्तवान् मुने ।
प्रापितोऽस्मि त्वया तस्मात्तद्विष्णोः परमं पदम् ॥”
हरिभक्तिसुधोदये ।
“पादं पूर्व्वं किल स्पृष्ट्वा गङ्गाभूत् स्वर्गमोक्षदा ।
विष्णोः सद्यस्तु तत्वङ्गि पादाम्बु कथमीक्ष्यते ॥

तापत्रयानलो योऽघौ न शाम्येत् सकलाब्धिभिः।
द्रुतं शाम्यति सोऽप्यत्र श्रीमद्विष्णुपदाम्बुना ॥
अघाख्याभेद्यकवचं भवाभिख्यमनौषधम्।
सर्व्वाङ्गैः सर्व्वथा धार्य्यं पाद्यं सुधियः सदा ॥
अमृतत्वावहं नित्यं विष्णुपादाम्बु यः पिवेत्।
स पिवत्यमृतं नित्यं मासे मासे तु देवताः ॥
माहात्म्यमियदित्यस्य यो वक्ता सोऽपि निर्भयः।
न त्वनर्घमणेर्मूल्यं कलयन्नघमन्नुते ॥"
अन्यत्रापि।
"स ब्रह्मचारी स व्रती आश्रमी च सदा शुचिः।
विष्णुपादोदकं यस्य मुखे शिरसि विग्रहे ॥
जन्मप्रभृतिपापानां प्रायश्चित्तं यदीच्छति।
शालग्रामशिलावारि पापहारि निषेव्यताम् ॥"
अतएव तेजोद्रविणपञ्चरात्रे श्रीब्रह्मोक्तम्।
"पीठपर्य्यालादुदकं पृथगादाय पुत्रक !।
सिञ्चयेन्मूर्द्धि भक्तानां सर्व्वतीर्थमयं हि तत् ॥"
इति।
"पादोदकस्य माहात्म्यं विख्यातं सर्व्वशास्त्रतः।
लेखितुं शक्नुयात् को हि सिन्धूर्म्मीन् गणयन्नपि ॥
विशेषतस्तु पादोदं तुलसीदलसंयुतम्।
शङ्खे कृत्वा वैष्णवेभ्यो दत्त्वा प्राग्वत् पिवेत्स्वयम् ॥"
अथ महत्तपादोदकमाहात्म्यं स्कान्दे ब्रह्म-नारदसंवादे।
"कृत्वा पादोदकं शङ्खे वैष्णवानां महात्मनाम्।
यो दद्यात्तुलसीमिश्रं चान्द्रायणशतं लभेत् ॥
गृहीत्वा कृष्णपादाम्बु शङ्खे कृत्वा तु वैष्णवः।
यो वहेत् शिरसा नित्यं स मुनिस्तापसोत्तमः ॥"
पाद्मे देवदूतविकुण्डलसंवादे।
"शालग्रामशिलातोयं यदि प्रस्थमतं पिबेत्।
हत्याकोटिविनाशं तु कुरुते नात्र संशयः ॥"
अगस्त्यसंहितायाञ्च।
"शालग्रामशिलातोयं तुलसीदलवासितम्।
ये पिवन्ति पुनस्तेषां स्तन्यपानं न विद्यते ॥
श्रीविष्णोर्व्वैष्णवानाञ्च पावनञ्चरणोदकम्।
सर्व्वतीर्थमयं पीत्वा कुर्य्यादाचमनं न हि ॥"
तदुक्तं स्कान्दे श्रीशिवेन।
"विष्णोः पादोदकं पीत्वा पश्चादशुचिशङ्कया।
आचामति च यो मोहाद्ब्रह्महा स निगद्यते ॥"
श्रुतिश्च। "भगवान् पवित्रो भगवत्पादौ पवित्रौ पादोदकं पवित्रं न तत्पाने आचमनीयं यथा हि सोम इति।" सौपर्णे च।
"विष्णुपादोदकं पीत्वा भक्तपादोदकं तथा।
य आचामति संमोहात् ब्रह्महा स निगद्यते ॥"
इति श्रीहरिभक्तिविलासः ॥

पाद्यं, क्ली, (पादार्थमुदकम्। पाद+"पादार्घाभ्याञ्च।" ५।४।२५। इति यत्।) पादाय वारि। पादप्रक्षालनार्थजलम्। इत्यमरः ॥ तत्-लक्षणं यथा, —
"पादावनेजनजलार्थं पात्रमद्भुतम्।
सौवर्णं वा तथा राजतमेव वा।
ताम्रमश्मसमपि वा यदेतं सताभिति ॥"
इति वैखानसग्रन्थः ॥
"षडङ्गुलं प्रविस्तारमुत्सेधश्चतुरङ्गुलम्।
ओष्ठमेकाङ्गुलं कुर्य्यान्नासिका चतुरङ्गुलाम् ॥
एतं पादसमाख्यातं चतुरङ्गुलमानतः।
पाद्यपात्रमिति ख्यातं सर्व्वदेवप्रपूजने ॥"
इति सिद्धान्तशेखरः ॥

पानं, क्ली, (पा पाने+भावे ल्युट्।) पीतिः। द्रवद्रव्यस्य गलाधःकरणम्। (यथा, हितोपदेशे।
"पयःपानं भुजङ्गानां केवलं विषवर्द्धनम् ॥")
भाजनम्। (पाल रक्षणे+भावे ल्युट्।) रक्षणम्। इति मेदिनी ॥ (पीयते खगादिभिर्यत्र। पा+अधिकरणे ल्युट्।) कुल्या। इति हेमचन्द्रः। ४। १५५ ॥ पीयते यदिति। कर्म्मणि ल्युट्। जलम्। इति युक्तिकल्पतरुः ॥ * ॥ पाति रक्षतीति। पा+ल्युः। रक्षाकर्त्तरि, त्रि। यथा, ऋग्वेदे। ८। ७०। ४।
"व्रतानि पानो अमृतस्य चारुणा
उभे कृपया अनु मन्यते विभ्नी ॥"
पायनम्। अस्त्रशस्त्राणां तीक्ष्णाग्रतासम्पादनव्यापारभेदः। पान् इति भाषा ॥ यदुक्तं वृहत्संहितायाम्।
"वडवोष्ट्रकरेणुदुग्धपानं
यदि पानेन समीहतेऽर्थसिद्धिम्।
झषपित्तमृगाश्व वस्तदुग्धैः
करिहस्तच्छिदये सतालगर्भैः ॥
आर्कं पयोहुडुविषाणमसीसमेतं
पारावताखुशकृता च युतं प्रलेपः।
शस्त्रस्य तैलमथितस्य ततोऽस्य पानं
पश्चाच्छितस्य न शिलासु भवेद्विघातः ॥
क्षारे कदल्या मथितेन युक्ते
दिनोषिते पायितमायसं यत्।
सम्यक् शितं चाश्मनि नैति भङ्गं
न चान्यलौहेष्वपि तस्य कौण्ठ्यम् ॥"
तथाच शुक्रनीत्याम्।
"इदमौशनसञ्च शस्त्रपानं
रुधिरेण श्रियमिच्छतः प्रदीप्ताम्।
हविषा गुणवत् सुताभिलिप्सोः
सलिलेनाक्षयमिच्छतश्च वित्तम् ॥")

पानः, पुं, (पीयते यस्मादिति। पा+अपादाने ल्युट्।) शौण्डिकः। इति जटाधरः ॥ निःश्वासः। इति हेमचन्द्रः। ६। ४ ॥

पानकं, क्ली, (पानाय कायतीति। कै+कः।) पानद्रव्यविशेषः। तत्प्रकारो यथा, "यथोक्तपरिमितशर्करानिम्बूरसयुक्तोऽथवाम्लान्वयुक्तः मकरसः। इति पाकराजेश्वरः ॥ (यथा, मनुः। ११। ९६।
"पानीयं पानकं मद्यं श्मशानेषु प्रदापयेत्॥"
क्वचित् पुंस्यपि दृश्यते। यथा, तत्रैव। २। ३८।
"एभिर्लभ्यन्त कषायाश्च तैलं सर्पींषि पानकान् ॥"
तत्राम्रफलपानकम्। यथा, —
"आम्रमामं जलस्विन्नं मर्द्दितं दृढपाणिना।
सिताशीताम्बुसंयुक्तं कर्पूरमरिचान्वितम् ॥
प्रपानकमिदं श्रेष्ठं भीमसेनेन निर्म्मितम्।
सद्यो रुचिकरं बल्यं शीघ्रमिन्द्रियतर्पणम् ॥
अपक्वाम्ररसोद्भूतपानकं वातनाशनम्।
कफपित्तकरं किञ्चित् प्रत्यहं यदि सेवितम् ॥"
पक्वाम्रस्य तु।
"सुपक्वमाम्रस्य फलं सुहृद्धिना
सम्मर्द्दितं शर्करया समन्वितम्।
एलालवङ्गार्द्रकवासवासितं
घर्मान्वितं कस्य न रोचकं भवेत् ॥
पानकं चाम्रसम्भूतं स्वाद्वम्लं गुरुपित्तजित्।
सुहृद्यं श्लेष्मदं बल्यं वर्ण्यं हृद्यं रुचिप्रदम् ॥"
अम्लिकाफलपानकं यथा, —
"अम्लिकायाः फलं पक्वं मर्द्दितं वारिणा दृढम्।
शर्करा मरिचोन्मिश्रं लवङ्गेन्दुसुवासितम् ॥
अम्लिकाफलसम्भूतं पानकं वातनाशनम्।
पित्तश्लेष्मकरं किञ्चित् सुरुच्यं वह्निबोधनम् ॥"
निम्बुफलपानकं यथा —
"भागैकनिम्बुजं तोयं षड्भागं शर्करोदकम्।
लवङ्गमरिचोन्मिश्रं पानकं पानकोत्तमम् ॥
निम्बूफलभवं पानमत्यम्लं वातनाशनम्।
वह्निदीप्तिकरं रुच्यं समस्ताहारपाचकम् ॥"
धान्याकपानकं यथा, —
"शिलायां साधुसम्पिष्टं धान्याकं वस्त्रगालितम्।
शर्करोदकसंयुक्तं कर्पूरादिसुसंस्कृतम् ॥
नवीने मृण्मये पात्रे स्थितं पित्तहरं परम् ॥"
जम्बुवाः पानकं यथा, —
"जम्बूफलं स्थूलतरं सुपक्वं
सम्मर्द्दितं शर्करयाम्बुनालम्।
सुवासितं वैलजभृङ्गपत्रै
रुचिं विधत्ते विरुचौ जनानाम् ॥
जम्बूफलभवं रुच्यं पानकं कफनाशनम्।
कषायं वातकृत् स्तोकं स्वाद्वम्लं ग्राहकं परम् ॥"
वीजपूरपानकम्।
"मातुलुङ्गरसे योज्यं त्रिगुणं शार्करं जलम्।
कर्पूरमरिचोन्मिश्रं पानकं स्वादितं वरम् ॥
मातुलुङ्गभवं पानं शूलानाहविनाशनम्।
श्वासे कासेऽरुचौ वातविड्बन्धेषु च पूजितम् ॥"
हैमकिरणम्।
"शर्करानारिकेलस्य वीजपूररसप्लुतम्।
पटपूतं भवेद्धैमकिरणं नामपानकम् ॥
पानकं हैमकिरणं रुच्यं हृद्यं बलप्रदम्।
सुस्निग्धं वातहृत्स्तम्भं किञ्चित् कफकरं गुरु ॥"
करमर्द्दपानकं यथा, —
"लवङ्गार्द्रकसंयुक्तं सुपिष्टं वारिणा युतम्।
करमर्द्दं करैर्मर्द्दं सप्तभागसितान्वितम् ॥
वातहृद्रुचिदं भव्यं हृद्यमम्लतरं सुतम्।
रक्तपित्तकरञ्चोष्णमाकण्ठं कारमर्द्दितम् ॥"
नारङ्गपानकं यथा, —
"सुपक्वनारङ्गफलं निपीडितं
संयोजितं शर्करयासितशुभ्रया।
सदार्द्रकं चन्द्रकणेन वासितं
पानेच्छया केन न संस्तुतं पुनः ॥

नारङ्गफलसम्भूतं पानकं वातनाशनम् ।
मधुरं विशदं रुच्यं सुस्निग्धं पित्तहृद्दृढ़म् ॥"
चारस्य तु ।

"चारद्रुफलजं सशर्करं
मर्द्दितं शिशिरवारिणा दृढ़म् ।
एलमार्द्रकयुतेन सुवासं
भक्तसिक्थमिलितं कृतहासम् ॥

चारस्य फलजं पानं गुरु हृद्यं रुचिप्रदम् ।
कफपित्तहरं श्रेष्ठं हृद्यं मधुरपाकि च ॥
परूषजीरचुक्रादिद्राचादाड़िमजं तथा ।
एकैकं सम्भवं भिन्नं पानकं क्रियते बुधैः ॥
एवमम्लस्य पुष्पस्य फलस्याम्लस्य वा तथा ।
शर्करामरिचोन्मिश्रं रस्यं स्यात् पानकं वरम् ॥
एवं हि पानकं कार्य्यं सुधिया सुष्ठु यत्कृतम् ।
गुणा द्रव्यानुसारेण ज्ञातव्याः पानकेषु च ॥"
यथास्य गुणाः,—
"श्रमक्षुत्तृट्क्लमहरं पानकं प्रीणनं गुरु ।
विष्टम्भि मूत्रलं हृद्यं यथाद्रव्यगुणञ्च तत् ॥"
इति वाभटे सूत्रस्थाने षष्ठेऽध्याये ॥
"गौड़मम्लमनम्लं वा पानकं गुरु मूत्रलम् ।
तदेव खण्डमृद्वीकाशर्करासहितं पुनः ॥
साम्लं सुतीक्ष्णं सुहिमं पानकं स्यान्निरत्ययम् ।
"प्रद्रवाणि रसांश्चैव पानीयं पानकं पयः ।
खड़ान् यूषांश्च पेयांश्च सव्ये पार्श्वे प्रदापयेत् ॥"
इति सुश्रुते सूत्रस्थाने ४६ अध्याये ॥"

**पानगोष्ठिका**, स्त्री, (पानस्य पानाय वा गोष्ठिका ।) यत्र सम्भूय पीयते । मद्यपानचक्रम् । तत्पर्य्यायः । आपानम् २ । इत्यमरः ।२।१०।४३॥ चक्रानुष्ठानं यथा श्यामारहस्यधृतम् । चक्राकारेण पंक्त्याकारेण वा भिन्नभिन्नासने स्वशक्तियुक्तश्चेत् युग्मयुग्मक्रमेण पद्मासनेनोपविश्य सामयिकललाटे चन्दनं दत्त्वा शिवशक्तिबुद्ध्या पुष्पञ्च दद्यात् । ततो यदि गुरुस्तत्र तिष्ठति तदादौ गन्धादिना तं पूजयित्वा तत्पात्रे पुष्पं दत्त्वा शुद्धिसहितं तस्मै समर्प्य प्रणमेत् । गुरोरभावे तत् पात्रं जले क्षिपेत् । ततः शक्तिपात्रं शुद्धिसहितं शक्त्यै दत्त्वा सामयिकेभ्योऽपि ज्येष्ठानुक्रमेण वीरपात्रात् परामृतं शुद्धिसहितं दद्यात् । ततः सामयिकोऽपि भक्त्या हस्तद्वयेन संगृह्य तदुपरि मूलमन्त्रमष्टधा जप्त्वा पूर्व्ववदानन्दभैरवं भैरवीञ्च सन्तर्प्य गुरून् देवताश्च सन्तर्पयेत् । स्वस्वकल्पोक्तविधिना भूतशुद्धिं कुर्य्यात् । ततश्चक्रनायकस्तैः सह पात्रवन्दनं कुर्य्यात् । यथा,
"श्रीमद्भैरवशेखरप्रविलसच्चन्द्रामृतप्लावितं
क्षेत्राधीश्वरयोगिनीसुरगणैः सिद्धैः समाराधितम् ।
आनन्दार्णवकं महात्मकमिदं साक्षात्त्रिखण्डामृतं
वन्दे श्रीप्रथमं कराम्बुजगतं पात्रं विशुद्धिप्रदम् ॥"
इत्यभिमन्त्र्य वामहस्तेन पात्रमुत्तोल्य अन्योन्यवन्दनं कृत्वा गृह्णामीति गुरुशक्तिसाधकेश्वराणामाज्ञां गृह्णीयात् । ते जुषस्वेति ब्रूयुः । ततो मूलाधारात् कुण्डलिनीं इष्टदेवतास्वरूपां आजिह्वान्तां विभाव्य गुरुपादुकां स्मृत्वा शिवोऽहमिति विचिन्त्य हस्ताभ्यां पात्रं धृत्वा मूलमुच्चरन् कुण्डलिनीमुखे देवीं तर्पयेत् । एतदुक्तमुदयाकरपद्धत्याम् ।
"कृत्वा मन्त्रतनुं स्मरेत् गुरुपदं देवीं वलां चिन्मयीं
पश्चात् वारत्रयं सदासवहृतं दीपैर्युतं कज्जलैः ।
पुष्पाद्यैरभिमन्त्रितञ्च निविड़ं सम्मोहकध्वंसकं
ये सञ्चिन्त्य पिबन्ति यान्ति खलु ते भुक्तिञ्च
मुक्तिं पराम् ॥"
तन्त्रान्तरे च ।
"सिन्दूरतिलकं भाले पाणौ च मदिरासवम् ।
कृत्वा पिबेद्गुरुं ध्यायंस्तथा देवीञ्च चिन्मयीम् ॥"
ततः पात्रमाधारोपरि संस्थाप्य पुनस्तेन क्रमेण परामृतं गृहीत्वा पात्रवन्दनं कुर्य्यात् । यथा,—
"मद्यं मीनरसावहं यदि तया दत्तञ्च पेयादिभिः
किञ्चिच्चञ्चलरक्तपङ्कजदृशा तस्यै समावेदितम् ।
वामे स्वात्मविशुद्धिशुद्धिकमलं पाणौ विधायात्मके
वन्दे पात्रमहं द्वितीयमधुनानन्दैकसंवर्द्धनम् ॥"
ततः पूर्व्ववत् पात्रं स्वीकृत्य अन्यत् पात्रवन्दनं कुर्य्यात् । यथा,—
"सर्व्वाम्नायकलाकलापकलितं कौतूहलद्योतनं
चन्द्रोपेन्द्रमहेन्द्रशम्भुवरुणब्रह्मादिभिः सेवितम् ।
ध्यातं देवगणैः परं मुनिगणैर्म्मोक्षार्थिभिः
सर्व्वदा
वन्दे पात्रमहं तृतीयमधुना चात्मावबोधक्षमम् ॥"
तृतीयपात्राभिवन्दनं कृत्वान्यत् पात्रवन्दनं कुर्य्यात् । यथा,—
"हैमं मीनरसावहं हरिहरब्रह्मादिभिः सेवितं
मुद्रामैथुनधर्म्मकर्म्मनिरतं चाराम्लतिक्ताश्रयम् ।
आचार्य्याष्टकसिद्धिभैरवकलामांसेन संशोधितं
पायात् पञ्चमकारतत्त्वसहितं पात्रं चतुर्थं नमः ॥"
इति चतुर्थपात्रवन्दनं कृत्वान्यतपात्रवन्दनं कुर्य्यात् । यथा,—
"आधारे भुजगाधिराजवलये पात्रं महीमण्डलं
मद्यं सप्तसमुद्रवारि पिशितं चाष्टौ च दिग्दन्तिनः ।
सोऽहञ्चैव विभावयन् प्रतिदिनं तारागणै रचितो
ऽप्यादित्यप्रमुखैः सुरासुरगणैराज्ञाकरैः
किङ्करैः ॥"
इति पञ्चमपात्रं स्वीकुर्य्यात् । ततो यावद्दृष्ट्यादिकं न चलति तावत् पानादिकं कार्य्यम् । अथास्य प्रमाणं यथा रुद्रयामले ।
"साधकेभ्यश्च शक्तिभ्यो दद्यान्निर्म्माल्यचन्दनम् ।
सामयिकैः समं कुर्य्याद्देवि! पानादिभक्षणम् ॥"
अन्यत्रापि ।
"निविशेच्चक्ररूपेण पंक्त्याकारेण वा यथा ।
शक्तियुक्तो वसेद्वापि युग्मयुग्मविधानतः ।
शिवशक्तिधिया सर्व्वं चक्रमध्ये समर्पयेत् ॥"
तन्त्रान्तरे च ।
"ततः पुष्पं समादाय गुरोः पात्रे निवेदयेत् ।
गुरवे च निवेद्याथ शक्त्यै दत्त्वा स्वयं हरेत् ॥"
भावचूड़ामणौ च ।
"साक्षाद्यदि गुरुर्न स्यात्तदातोये विवर्ज्जयेत ॥"
एतत् सर्व्वं कलीतरपरम् ।
"दिव्यवीरमयो भावः कलौ नास्ति कदाचन ॥"
इति कालीविलासवचनात् ॥

**पानपात्रं**, क्ली, (पानस्य पेयमद्यादेः पात्रम् ।) मद्यपानपात्रम् । मद्यपानस्य भाजनम् । तत्पर्य्यायः । चषकः २ सरकः ३ अनुतर्षणम् ४ । इत्यमरः ॥ पूर्व्वद्वयं मद्यपानपात्रे शेषद्वयं मद्यपरिवेशनपात्रे । इति भरतः ॥ चषकम् ५ अनतर्षः ६ पारी ७ पारीकम् ८ । इति शब्दरत्नावली ॥ ॥ (यथा, मार्कण्डेये ।८२।१६।
"ददावशून्यं सुरया पानपात्रं धनाधिपः ॥")
अथ पानपात्रपरिमाणादि यथा कुलसारे ।
"नयनाग्निबाणसंख्यकर्षैस्तु परमेश्वरि ! ।
पात्रं प्रकर्त्तुमित्युक्तं कुलसाधने ॥
इतोऽप्यधिकपात्रन्तु न कर्त्तव्यञ्च साधकैः ॥"
कर्षं लौकिकतोलकमित्यर्थः । तदुक्तं कुलोत्तमे ।
"गुञ्जाद्वादश माषः स्यात्तदष्टौ कर्ष उच्यते ॥"
अथोत्तरतन्त्रे ।
"अनुज्ञां पुरतो लब्ध्वा गृह्णामीति स्वयं वदेत् ।
जुषस्वेत्यभ्यनुज्ञातो गुरुणा वा कुलीनकैः ॥
गृह्णीयाच्च स्वयं सिद्धो बद्धपद्मासनः सुधीः ॥"
कुलार्णवे ।
"एकासने निविष्टा ये सुक्षीरंश्चैव भाजने ।
एकपात्रे पिबेद्द्रव्यं ते यान्ति नरकाधमे ॥"
एकपात्रमिति सर्व्वैर्मिलित्वा नैकपात्रे पिबेत् । न तु प्रतिवारं द्रव्यपाने भिन्नभिन्नपात्रं कार्य्यं अनुष्ठानलक्षणापत्तेः सम्प्रदायविरोधाच्च ॥

**पानवणिक्**, [ ज् ] पुं, (पानाय पेयसुरादेर्विक्रयार्थं वणिक् पानस्य वणिक वा ।) शौण्डिकः । इति हेमचन्द्रः ॥

**पानभाजनं**, क्ली, (पानाय पानस्य वा भाजनं पात्रम् ।) पानपात्रम् । तत्पर्य्यायः । कंसः २ । इत्यमरः । २ । ६ । ३२ ॥ "काम्यतेऽसौ कंसः कमुकड्सृहि नाम्नीति सः दन्त्यान्तः । स्वार्थे ष्णिञ् कांस्यञ्च । स्वर्णरजतादिनिर्म्मिते पात्रमात्रेऽपि कंसः । 'कंसः स्यात् तैजसे द्रव्ये पानपात्रेऽपि कांस्यवत् ।' इति शाश्वतः ॥
'पात्रान्तरे पानपात्रे कांस्यं कंसे च तैजसे ।
इति रभसः ॥
पीयते पानं मद्यादि तस्य भाजनं पानभाजनम् ।" इति भरतः ॥

**पानसं**, क्ली, (पनसस्य इदं पनसफले भवं तत्फलस्य विकार इति वा अण् ।) पनसभवमद्यम् । इति जटाधरः ॥ पनससम्बन्धिनि, त्रि ॥

**पानात्ययः**, पुं, (पानाद्धेतोः जातो योऽत्ययः रोगविशेषः ।) मदात्ययरोगः । इति राजनिर्घण्टः ॥

**पानिलं**, क्ली, (पानमाधारत्वेनास्त्यत्र इति इलच् ।) पानपात्रम् । इति शब्दचन्द्रिका ॥

**पानीयं**, क्ली, (पीयते इति । पा + अनीयर् ।) जलम् । इत्यमरः । १ । १० । ४ ॥ पानचे रस-

पाशपाणिः, पुं, ( पाशः पाणौ यस्य । ) वरुणः । इति हलायुधः ॥

पाशवपालनं, क्ली, ( पाशवं पशुसंघं पालयतीति । पालि + ल्युः । ) घासः । इति शब्दचन्द्रिका ॥

पाशितः, त्रि, ( पाश + क्त । ) पाशयुक्तः । बद्धः । इति धरणिः ॥

पाशी, [ न् ] पुं, ( पाशोऽस्यस्येति । पाश + इनिः । ) वरुणः । इत्यमरः । १ । १ । ६४ ॥ ( यथा, हरिवंशे भविष्यपर्व्वणि । ३ । ८ ।
"यदि शक्रं यमं वापि कुवेरमपि पाशिनम् ॥")
व्याधः । इति मेदिनी । ने, ६१ ॥ यमः । इति कश्चित् ॥ पाशधरे, त्रि । इति विश्वः ॥

पाशीकृतः, त्रि, पाशबद्धः । अभूततद्भावे च्वि-प्रत्ययनिष्पन्नः ॥

पाशुपतः, पुं, ( पशुपतिर्द्देवतास्येति । "सास्य देवता ।" ४ । २ । २४ । इति अण् । ) वक-पुष्पम् । ( अस्य पर्य्यायो यथा, भावप्रकाशे । १ । १ ।
"शिवमल्ली पाशुपत एकाष्ठीलो वुको वसुः ॥")
पशुपत्यधिदेवतः । तद्भक्तः । इति मेदिनी । ते, २११ ॥ ( क्ली, तन्त्रशास्त्रविशेषः । यथा, कूर्म्म-पुराणे १४ अध्याये ।
"एवं सम्बोधितो रुद्रो माधवेन मुरारिणा ।
चकार मोहशास्त्राणि केशवोऽपि शिवेरितः ॥
कापालं नाकुलं वामं भैरवं पूर्व्वपश्चिमम् ।
पञ्चरात्रं पाशुपतं तथान्यानि सहस्रशः ॥"
अथर्व्ववेदान्तर्गतोपनिषद्विशेषः । यथा, मुक्ति-कोपनिषदि ।
"सावित्र्यात्मा पाशुपतं परब्रह्मावधूतकम् ॥" )

पाशुपतव्रतं, क्ली, ( पाशुपतं पशुपतिसम्बन्धि व्रतम् । ) पशुपतिव्रतविशेषः । यथा,—
"यथा पशुपतिर्नित्यं हत्वा सर्व्वमिदं जगत् ।
न लिप्यते पुनः सोऽपि यो नित्यं व्रतमाचरेत् ॥
इहजन्मकृतं पापं पूर्व्वजन्मकृतञ्च यत् ।
व्रतं पाशुपतं नाम कृत्वा हन्ति द्विजोत्तम ! ॥
द्वादश्यामेकभक्ताशी त्रयोदश्यामयाचितम् ।
चतुर्द्दश्यां तथा नक्तमुपवासं परेऽहनि ॥
गोवृषञ्चैव हैरण्यं रौप्यं ताम्रमयन्तथा ।
सौवर्णं कारयेत् पत्रं गुञ्जाशीत्या पृथक् पृथक् ॥
तत्रैवोल्लिखयेन्मूर्त्तिं शिवायाश्च शिवस्य च ।
तत्प्रमाणं वृषं कुर्य्याद्रौप्यं हेमश्चतुर्गुणैः ॥
रौप्यादष्टगुणं ताम्रं तदर्द्धं वापि कारयेत् ।
ताम्रपत्रे समारोप्य वस्त्रोत्तमयुतन्तथा ॥
त्रयोदश्यामेकभक्तं रिक्तायां नक्तमाचरेत् ।
कुर्य्यादयाचितं दर्शे पादकृच्छ्रव्रतञ्चरेत् ॥
गन्धपुष्पैः सुनैवेद्यैर्व्वस्त्राभरणदीपकैः ।
गङ्गाधरं समभ्यर्च्च्य प्रार्थयेत् प्रवरं वरम् ॥
गङ्गाधर ! महादेव ! सर्व्वलोकचराचर ! ।
जहि मे सर्व्वपापानि पूजितस्त्विह शङ्कर ! ॥
शङ्कराय नमस्तुभ्यं सर्व्वपापहराय च ।
यथा यमं न पश्यामि तथा मे कुरु शङ्कर ! ॥
यममार्गं यथा शम्भो ! न पश्यामि कदाचन ।
संपूजितो मया भक्त्या तथा मे कुरु शङ्कर ! ॥
गङ्गाधर ! धराधीश ! परात्पर वरप्रद ! ।
श्रीकण्ठ ! नीलकण्ठस्त्वमुमाकान्त ! नमोऽस्तु ते ॥
संपूज्यैवंविधानेन प्रतिपद्युदिते रवौ ।
हैरण्यादीन् गोवृषांश्च ब्राह्मणेभ्यो निवेदयेत् ॥
यथा त्वं सर्व्वगः सर्व्वः सर्व्ववासस्तु सर्व्वहृत् ।
न लिप्यसे विकुर्व्वाणस्तथा मां कुरु शङ्कर ! ॥
एवं स्तुत्वा नमस्कृत्य वृषादींश्च यथोदितान् ।
गुर्व्वादिभ्यो द्विजेभ्यश्च शङ्करः प्रीयतामिति ॥
एवं व्रतमिदं कृत्वा वृषं दद्याद्द्विजातये ।
यममार्गं महाघोरं न पश्यति कदाचन ॥
यः करोति व्रतेनैव सर्व्वपापप्रणाशनम् ।
न स लिप्येत पापेन पद्मपत्रमिवाम्भसा ।
ब्रह्महत्यादिभिः पापैरगम्यागमनादिभिः ।
मुच्यते पातकेभ्योऽथ ह्यभक्ष्यापेयजैः पुमान् ॥
यः करोति महाभाग ! दानं सर्व्वसुखावहम् ।
हत्वा पापान्यशेषाणि स्वर्गलोकं स गच्छति ॥"
इति वह्निपुराणे पाशुपतव्रतदानाध्यायः ॥
( यथा च शिवपुराणे वायुसंहितायां पूर्व्वभागे २८ अध्याये ।

ऋषय ऊचुः ।

"भगवन् ! श्रोतुमिच्छामो व्रतं पाशुपतं परम् ।
ब्रह्मादयोऽपि यत् कृत्वा सर्व्वे पाशुपताः स्मृताः ॥

वायुरुवाच ।

रहस्यं वः प्रवक्ष्यामि सर्व्वपापनिकृन्तनम् ।
व्रतं पाशुपतं श्रौतमथर्व्वशिरसि श्रुतम् ॥
कालश्चैत्रीपौर्णमासी देशः शिवपरिग्रहः ।
क्षेत्रारामादिरण्यो वा प्रशस्तः शुभलक्षणः ॥
तत्र पूर्व्वं त्रयोदश्यां सुस्नातः सुकृताह्निकः ।
अनुज्ञाप्य स्वमाचार्य्यं संपूज्य प्रणिपत्य च ॥
पूजां वैशेषिकीं कृत्वा शुक्लाम्बरधरः स्वयम् ।
शुक्लयज्ञोपवीती च शुक्लमाल्यानुलेपनः ॥
दर्भासने समासीनो दर्भमुष्टिं प्रगृह्य च ।
प्राणायामत्रयं कृत्वा प्राङ्मुखो वाप्युदङ्मुखः ॥
ध्यात्वा देवञ्च देवीञ्च तद्विज्ञापनवर्त्मना ।
व्रतमेतत् करोमीति भवेत् संकल्प्य दीक्षितः ॥
यावच्छरीरपातं वा द्वादशाब्दमथापि वा ।
तदर्द्धं वा तदर्द्धं वा मासद्वादशकन्तु वा ॥
तदर्द्धं वा तदर्द्धं वा मासमेकमथापि वा ।
दिनद्वादशकं वाथ दिनषट्कमथापि वा ॥
तदर्द्धं दिनमेकं वा व्रतसंकल्पनावधि ।
अग्निमाधाय विधिवद्विरजा होमकारणात् ॥
हुत्वाज्येन समिद्भिश्च चरुणा च यथाक्रमम् ।
पूर्णाहुतिः पुरतो भूयस्तत्त्वानां शुद्धिमुद्दिशन् ॥
जुहुयान्मूलमन्त्रेण तैरेव समिदादिभिः ।
तत्त्वान्येतानि मद्देहे शुध्यन्तामित्यनुस्मरन् ॥
पञ्च भूतानि तन्मात्राः पञ्च कर्म्मेन्द्रियाणि च ।
ज्ञानकर्म्मविभेदेन पञ्च पञ्च विभागशः ॥
त्वगादिधातवः सप्त पञ्च प्राणादिवायवः ।
मनोबुद्धिरहंख्यातिर्गुणाः प्रकृतिपूरुषौ ॥
रागो विद्या कला चैव नियतिः काल एव च ।
माया च शुद्धविद्या च महेश्वरसदाशिवौ ॥
शक्तिश्च शिवतत्त्वञ्च तत्त्वानि क्रमशो विदुः ।
मन्त्रैस्तु विरजैर्हुत्वा होतासौ विरजो भवेत् ॥
अथ गोमयमादाय पिण्डीकृत्याभिमन्त्र्य च ।
न्यस्याग्नौ तञ्च संरक्ष्य दिने तस्मिन् हविष्य-भुक् ॥
प्रभाते तु चतुर्द्दश्यां कृत्वा सर्व्वं पुरोदितम् ।
दिने तस्मिन्निराहारः कालशेषं समापयेत् ॥
प्रातःपर्व्वणि चाप्येवं कृत्वा होमावसानतः ।
उपसंहृत्य रुद्राग्निं गृह्णीयाद्भस्म यत्नतः ॥
ततस्तु जटिलो मुण्डः शिखैकजट एव वा ।
भूत्वा स्नात्वा पुनर्वीतलज्जश्चेत् स्याद्दिगम्बरः ॥
अन्यः काषायवसनश्चर्म्मचीराम्बरोऽथवा ।
एकाम्बरो वल्कली वा भवेद्दण्डी च मेखली ॥
प्रक्षाल्य चरणौ पश्चाद्द्विराचम्यात्मनस्तनुम् ।
संकलीकृत्य तद्भस्म विरजानलसम्भवम् ॥
अग्निरित्यादिभिर्म्मन्त्रैः षड्भिराथर्व्वणैः क्रमात् ।
विमृज्याङ्गानि मूर्द्धादिचरणान्तञ्च संस्पृशेत् ॥
ततस्तेन क्रमेणैव समुद्धृत्य च भस्मना ।
सर्व्वाङ्गोद्धूलनं कुर्य्यात् प्रणवेन शिवेन वा ॥
ततस्त्रिपुण्ड्रं रचयेत्त्रियायुषसमाह्वयम् ।
शिवभावं समागम्य शिवयोगं समाचरेत् ॥
कुर्य्यात्त्रिसन्ध्यमप्येवमेतत् पाशुपतं व्रतम् ।
पूजनीयो महादेवो लिङ्गमूर्त्तिः सनातनः ।
पद्ममष्टदलं हैमं नवरत्नैरलङ्कृतम् ।
कर्णिकाकेसरोपेतमासनं परिकल्पयेत् ॥
विभवे तदभावे तु रक्तं सितमथापि वा ।
पद्मं तस्याप्यभावे तु केवलं भावनामयम् ॥
तत्पद्मकर्णिकामध्ये कृत्वा लिङ्गं कनीयसम् ।
स्फाटिकं पीठिकोपेतं पूजयेद्धि ततःक्रमात् ॥
प्रतिष्ठाप्य विधानेन तल्लिङ्गं कृतशोधनम् ।
परिकल्प्यासनं मूर्त्तिं पञ्चवक्त्रप्रकारतः ॥
पञ्चगव्यादिभिः पूर्णैर्यथाविभवविस्तरैः ।
स्नापयेत् कलशैः पूर्णैः सहस्रादिषु सम्भवैः ॥
गन्धद्रव्यैः सकर्पूरैश्चन्दनाद्यैः सकुङ्कुमैः ।
सवेदिकं समालिप्य लिङ्गं भूषणभूषितम् ॥
विल्वपत्रैश्च पद्मैश्च रक्तैः श्वेतैस्तथोत्पलैः ।
नीलोत्पलैस्तथान्यैश्च पुष्पैस्तैस्तैः सुगन्धिभिः ॥
पुण्यैश्च शतपत्रैश्च चित्रैर्दूर्व्वाक्षतादिभिः ।
समभ्यर्च्च्य यथालाभं महापूजाविधानतः ॥
धूपं दीपं तथा चार्घ्यं नैवेद्यञ्च समादिशेत् ।
निवेदयित्वा विभवे कल्याणञ्च समाचरेत् ॥
इष्टानि च विशिष्टानि न्यायेनोपार्ज्जितानि च ।
सर्व्वद्रव्याणि देयानि व्रते तस्मिन् विशेषतः ॥
श्रीपत्रोत्पलपद्मानां संख्या साहस्रिकी मता ।
प्रत्येकमपरा संख्या शतमष्टोत्तरं द्विजाः ॥
तत्रापि च विशेषेण न त्यजेद्बिल्वपत्रकम् ।
हैममेकं परं प्राहुः पद्मं पद्मसहस्रकात् ।
नीलोत्पलादिष्वप्येतत्समानं विल्वपत्रकैः ।
पुष्पान्तरान्यनियमाद्यथालाभं निवेदयेत् ॥
अष्टाङ्गमर्घ्यमुत्कृष्टं धूपालेपौ विशेषतः ।
कृष्णागुरुमघोराख्ये वक्त्रे सद्ये मनःशिलाम् ॥
चन्दनं वामदेवाख्ये हरितालञ्च पौरुषे ।
ईशाने भसितं केचिदालेपनमितीदृशम् ॥

न धूप इति मन्यन्ते धूपामोदविधायकः ।
शिलागुरुमघोराख्ये सुरे लघ्वागुरुः पुनः ।
पौरुषे गुग्गुलुः सद्ये सौम्ये सौगन्धिकः सुरे ।
ईशानेऽपि उशीरादि दद्याद्धूपं विशेषतः ।
शर्करामधुकर्पूरकपिलाघृतसंयुतम् ।
चन्दनागुरुकाष्ठाद्यं सामान्यं सम्प्रचक्षते ।
कर्पूरवर्त्तिराज्याढ्या देया दीपावली ततः ।
अर्घमाचमनं देयं प्रतिवक्त्रमतः परम् ।
प्रथमावरणे पूज्यौ क्रमाद्धेरम्बषण्मुखौ ।
ब्रह्माङ्गानि ततश्चैव प्रथमावरणेऽर्चिते ।
द्वितीयावरणे पूज्या विघ्नेशाश्चक्रवर्त्तिनः ।
तृतीयावरणे पूज्या भवाद्या अष्टमूर्त्तयः ।
महादेवादयस्तत्र तथैकादशमूर्त्तयः ।
चतुर्थावरणे पूज्याः सर्व्व एव गणेश्वराः ।
बहिरेव तु पद्मस्य पञ्चमावरणे क्रमात् ।
दश दिक्पतयः पूज्याः सास्त्राः सानुचरास्तथा ।
ब्रह्मणो मानसाः पुत्राः सर्व्वेऽपि ज्योतिषाङ्गणाः ।
सर्व्वा देव्यश्च देवाश्च सर्व्वाः सर्व्वेऽपि खेचराः ।
पातालवासिनश्चान्ये सर्व्वे मुनिगणा अपि ।
योगिनो रुद्रभक्ताश्च सर्व्वे षष्ठे मातरस्तथा ।
क्षेत्रपालाश्च सगणाः सर्व्वं चैतच्चराचरम् ।
एवमावरणपूजान्ते सम्पूज्य परमेश्वरम् ।
साज्यं सव्यञ्जनं हृद्यं हविर्भक्त्या निवेदयेत् ।
मुखवासादिकं दत्त्वा ताम्बूलं सोपदंशकम् ।
अलङ्कृत्य च भूयोऽपि नानापुष्पविभूषणैः ।
नीराजनान्तं विस्तीर्णं पूजाशेषं समापयेत् ।
चन्द्रांशुसदृशञ्चैव शयनीयं समर्पयेत् ।
आढ्यं नृपोचितं हृद्यं तत्सर्व्वमनुरूपतः ।
कृत्वा च कारयित्वा च हुत्वा च प्रतिपूजनम् ।
स्तोत्रं यथोक्तं जप्त्वा विद्यां पञ्चाक्षरीं जपेत् ।
प्रदक्षिणं प्रणामञ्च कृत्वात्मानं समर्पयेत् ।
ततः पुरस्ताद्देवस्य गुरुविद्ये च पूजयेत् ।
दत्त्वार्घमष्टौ पुष्पाणि देवमुद्वास्य लिङ्गतः ।
अग्नेश्चापि सुधारस्य उद्वास्य च समापयेत् ।
प्रत्यहं च एवमेव कुर्य्यात्सर्व्वं पुरोदितम् ।
ततस्तत्साम्बुजं लिङ्गं सर्व्वोपकरणान्वितम् ।
समर्पयेत स्वगुरवे स्थापयेद्वा शिवालये ।
सम्पूज्य च गुरूनन्यान् व्रतिनश्च विशेषतः ।
भक्तान् द्विजांश्च शक्त्यैव दीनानाथांश्च तोषयेत् ।
स्वयं चानशनं प्रायः फलमूलाशनोऽथवा ।
पयोव्रती वा भिक्षाशी भवदेकाशनस्तथा ।
नक्तं युक्ताशनो नित्यं भूशय्यानिरतः शुचिः ।
भस्मशायी तृणे शायी चीराजिनधरोऽथवा ।
ब्रह्मचर्य्यरतो नित्यं व्रतमेतत् समाचरेत् ।
अर्कवारे तथार्द्रायां पञ्चदश्याञ्च पक्षयोः ।
अष्टम्याञ्च चतुर्द्दश्यां शक्तस्तूपवसेदपि ।
पाषण्डपतितोदक्याः सूतकान्त्यजपूर्व्वकान् ।
वर्ज्जयेत् सर्व्वयत्नेन मनसा कर्म्मणा गिरा ।
क्षमादानदयासत्याहिंसाशीलः सदा भवेत् ।
सन्तुष्टश्च प्रशान्तश्च जपध्यानरतः सदा ।
कुर्य्यात्त्रिषवणस्नानं भस्मस्नानमथापि वा ।
पूजां वैशेषिकीञ्चैव मनसा कर्म्मणा गिरा ।
बहुनात्र किमुक्तेन नाचरेदशिवं व्रती ।
प्रमादात्तु तथाचारे निरूप्य गुरुलाघवम् ।
उचितां निष्कृतिं कुर्य्यात् पूजाहोमजपादिभिः ।
आसमाप्तेर्व्रतस्यैवमाचरेन्न प्रमादतः ।
गोदानञ्च वृषोत्सर्गं कुर्य्यात् पूजाञ्च सम्पदा ।
सामान्यमेतत् कथितं व्रतस्यास्य समासतः ।
प्रतिमासं विशेषञ्च प्रवक्ष्यामि यथाक्रमम् ।
वैशाखे वज्रलिङ्गन्तु ज्यैष्ठे मारकतं शुभम् ।
आषाढे मौक्तिकं विद्याच्छ्रावणे नीलनिर्म्मितम् ।
मासि भाद्रपदे चैव पद्मरागमयं परम् ।
आश्वयुज्याश्च विधिवद्गोमेदकमयं शुभम् ।
कार्त्तिक्यां वै द्रुमं लिङ्गं वैदूर्य्यं मार्गशीर्षके ।
पुष्परागमयं पौषे माघे सूर्य्यमणिं तथा ।
फाल्गुन्यां चन्द्रकान्तोत्थं चैत्रे तद्व्यत्ययोऽथवा ।
सर्व्वमासेषु रत्नानामलाभे हेममेव वा ।
हेमाभावे राजतं वा ताम्रं शैलजमेव वा ।
मृण्मयं वा यथालाभं जातुकं चान्यदेव वा ।
सर्व्वगन्धमयं वाथ लिङ्गं कुर्य्याद्यथारुचि ।
व्रतावसानसमये समाचरितनैत्यकः ।
कृत्वा वैशेषिकीं पूजां हुत्वा चैव यथा पुरा ।
सम्पूज्य च तदाचार्य्यं व्रतिनश्च विशेषतः ।
देशिकेनाभ्यनुज्ञातः प्राङ्मुखो वाप्युदङ्मुखः ।
दर्भासनो दर्भपाणिः प्राणापानौ नियम्य च ।
जपित्वा शक्तितो मूलं ध्यात्वा साम्बं त्रियम्बकम् ।
अनुज्ञाप्य यथापूर्व्वं नमस्कृत्य कृताञ्जलिः ।
समुत्सृजामि भगवन् ! व्रतमेतत्त्वदाज्ञया ।
इत्युक्त्वा लिङ्गमूलन्तु दर्भानुत्तरतस्त्यजेत् ।
ततो दण्डजटाचीरमेखलाद्यपि चोत्सृजेत् ।
पुनराचम्य विधिवत् पञ्चाक्षरमुदीरयेत् ।
यः कृत्वात्यन्तिकीं दीक्षामादेहान्तमनाकुलः ।
व्रतमेतत् प्रकुर्व्वीत स तु वै नैष्ठिकः स्मृतः ।
सोऽत्याश्रमी च विज्ञेयो महापाशुपतस्तथा ।
स एव तपसां श्रेष्ठः स एव च महाव्रती ।
न तेन सदृशः कश्चित् कृतकृत्यो मुमुक्षुषु ।
यतिर्यो नैष्ठिको जातस्तमाहुर्नैष्ठिकोत्तमम् ।
योऽन्वहं द्वादशाहं वा व्रतमेतत् समाचरेत् ।
सोऽपि नैष्ठिकतुल्यः स्यात्तीव्रव्रतसमन्वयात् ।
घृताक्तो यश्चरेदेतद्व्रतं व्रतपरायणः ।
द्वित्रैकदिवसं वापि स च कश्चन नैष्ठिकः ।
कृत्यमित्येव निष्कामो यश्चरेद्व्रतमुत्तमम् ।
शिवार्पितात्मा सततं न तेन सदृशः क्वचित् ।
भस्मच्छन्नो द्विजो विद्वान् महापातकसम्भवैः ।
पापैर्विमुच्यते सद्यो मुच्यते नात्र संशयः ।
रुद्राग्नेर्यत्परं वीर्य्यं तद्भस्म परिकीर्त्तितम् ।
तस्मात्सर्व्वेषु कालेषु वीर्य्यवान् भस्मसंयुतः ।
भस्मनिष्ठस्य दह्यन्ते दोषा भस्माग्निसङ्गमात् ।
भस्मस्नानविशुद्धात्मा भस्मनिष्ठ इति स्मृतः ।
भस्मना दिग्धसर्व्वाङ्गो भस्मदीप्तत्रिपुण्ड्रकः ।
भस्मशायी च पुरुषो भस्मनिष्ठः प्रचक्ष्यते ।
भूतिर्भूतिकरी पुंसां रक्षा रक्षाकरी परम् ।
किमन्यदिह वक्तव्यं भस्ममाहात्म्यकारणम् ।
व्रती च भस्मना स्नातः स्वयं देवो महेश्वरः ।
परमास्त्रञ्च शैवानां भस्मैतत्पारमेश्वरम् ।
धौम्याग्रजस्य तपसि व्यापदो यन्निवारिताः ।
तस्मात्सर्व्वप्रयत्नेन कृत्वा पाशुपतं व्रतम् ।
धनवद्भस्म संगृह्य भस्मस्नानरतो भवेत् ॥"

इति शैवे वायुसंहितायां पूर्व्वभागे एकोनत्रिंशोऽध्यायः ॥ * ॥)

**पाशुपतास्त्रं,** क्ली, (पाशुपतं पशुपतिसम्बन्धि अस्त्रम् ।) पशुपतेः शूलास्त्रम् । तस्य स्वरूपं यथा —

"महास्त्रेऽपि संक्षिप्य वक्ष्ये पाशुपतं परम् ।
महादेवं महाकायं युगान्ताग्निसमप्रभम् ।
पञ्चवक्त्रं महाघोरं दशबाहुं त्रिलोचनम् ।
सौम्यं घोरं सुघोरास्यमट्टहासं भयोत्कटम् ।
जटाभारेन्दुमङ्गार्द्धिस्फुरत्शिवाङ्गणम् ।
वैयाघ्रचर्म्मवसनं समदकारालकुलम् ।
शिवारावं भयाकारं शववाहनवेष्टितम् ।
उल्काज्वलज्ज्वलन्ताक्षं गोनासकृतभूषणम् ।
लम्बोदरतनागेन्द्रं गलचर्म्मार्द्रवाससम् ।
किङ्करं तर्ज्जमानञ्च शूलखट्वाङ्गधारिणम् ।
ग्रसमानं जगदिदं त्रैलोक्यं सचराचरम् ।
पुरतो विघ्नमालक्ष्य खेलिशानं चलाचलम् ॥"

इति देवीपुराणम् ॥

**पाशुपाल्यं,** क्ली, (पशुपालस्य भावः कर्म्म वा । पशुपाल + ष्यञ् ।) वैश्यवृत्तिः । पशून् गोमहिष्यादीन् पालयति पशुपालः इति षष्ठ । पशुपालस्य भावः कर्म्म वा इत्यर्थे ष्यञ्प्रत्ययनिष्पन्नम् । इत्यमरभरतौ ॥ (यथा मार्कण्डेये । २८ । ६ ।
'दानमध्ययनं यज्ञो वैश्यस्यापि त्रिधैव सः ।
वाणिज्यं पाशुपाल्यञ्च कृषिश्चैवास्य जीविका ॥')

**पाश्चात्त्य,** त्रि, (पश्चात् + 'दक्षिणापश्चात्पुरसस्त्यक् ।' ४ । २ । ९८ । इति त्यक् ।) पश्चाद्भवः । (यथा देवीभागवते । १ । १७ । ५५ ।
"पाश्चात्त्ययामिनीयामे ध्यानमेवाभ्यपद्यत ।
स्नात्वा प्रातःक्रियाः कृत्वा पुनरास्ते समाहितः ॥")
पश्चिमदेशजातः । इति मुग्धबोधव्याकरणम् ॥ (यथा, महाभारते । १ । १२१ । ११ ।
'स विनिन्द्य गृहीत्वा च भूपतीन् राजसत्तम ।
प्राच्योदीच्यान् पाश्चात्त्यान् दाक्षिणात्यानकालयत् ॥')

**पाश्चात्त्याकरसम्भव,** क्ली, (पाश्चात्त्ये पश्चिमदिग्भवे आकरे सम्भव उत्पत्तिर्यस्य ।) शाम्भरीलवणम् । तत्पर्य्यायः । रोमकम् २ रामलवणम् ३ । इति रत्नमाला ॥

**पाश्या,** स्त्री, (पाशानां समूहः । पाश + "पाशादिभ्यो यः ।" ४ । २ । ४९ । इति यः ।) पाशसमूहः । इत्यमरः । २ । २ । ४३ ॥

**पाषकः,** पुं, (पषति बध्नातीव चरणौ । पष बन्धे + ण्वुल् ।) पादाभरणविशेषः । पाञ्जली इति भाषा ॥ यथा —
"रत्नपाषकघटकैश्च विराजितपदाङ्गुले ॥"
इति ब्रह्मवैवर्त्ते श्रीकृष्णजन्मखण्डे ४ अध्यायः ॥

न्धकवंशः । (यथा,कुमारे १ । ८ ।
"यः पूरयन् कीचकरन्ध्रभागान्
दरीमुखोत्थेन समीरणेन" ॥)
राक्षसविशेषः । इति शब्दरत्नावली ॥ दैत्यभेदः ।
वृक्षविशेषः । इति विश्वः ॥ नलः । इति राज-
निर्घण्टः ॥ केकयराजपुत्त्रः । स च विराटराजस्य
श्यालः सेनापतिश्च ॥ (यथा महाभारते ४ ।
कीचकवधपर्व्वणि १९ । ५ ।
"सेनापतिर्विराटस्य ददर्श द्रुपदात्मजाम् ।
तां दृष्ट्वा देवगर्भाभां चरन्तीं देवतामिव ।
कीचकः कामयामास कामवाणप्रपीड़ितः" ॥
अयन्तु छद्मवेशधारिणा विराटभवनस्थेन भीम-
सेनेन हतः । अस्य विवरणं महाभारते ४ पर्व्वणि
१३ अध्यायमारभ्य द्रष्टव्यम् । देशविशेषः । तत्र
बहुवचनान्तोऽयम् ॥ यथा,महाभारते १।१५७।२।
"मत्स्यान् त्रिगर्त्तान् पाञ्चालान्कीचकानन्तरेण च ।
रमणीयान्वनोद्देशान् प्रेक्षमाणाः सरांसि च" ॥)

कीचकजित्, पुं, (कीचकं जितवान् । जि + भूते
क्विप् तुक् च ।) भीमसेनः । इति त्रिकाण्डशेषः ॥
(पुराकिल दुरात्मा कीचकः विराटभवनस्थां
सैरिन्ध्रीरूपधारिणीं द्रौपदीमकामयत । द्रौपदी
तु तस्य कामुकस्य दुरभिसन्धिं विज्ञाय तं बहुल
कटूक्त्या निर्भर्त्सयामास । अथ कीचक एवमप-
मानितः क्रुधा तां पदा ताड़ितवान् । अथ सा-
भिमानिनी द्रौपदी निजदुःखं भीमं निवेदया-
मास । भीमस्तु एतदाकर्ण्य संजातरोषः कीचकं
हन्तुं मनो दधे । अथ सबुद्धिर्भीमो द्रौपदीं
उपदिदेश श्वो निशायां यथा स दुरात्मा राज-
श्यालकः मत्स्यराजदुहितृकन्यानर्त्तनशालायां त्व-
द्वेशेन समुपतिष्ठेत तथाऽऽस्य समयो विधी-
यताम् । ततस्तद्वेशेन तत्र सङ्गतोऽहमेनं कामार्त्तं
दुष्कार्य्यस्य फलं अनुभावयामि । एवं स्थिरीकृते
द्रौपदी पूर्व्वोक्तमन्त्रितं स्थानं कीचकं विज्ञापित-
वती । अथ निशायां मूढ़बुद्धिः कामुकवेशधारी
तत्रैव गतः प्रच्छन्नोपविष्टेन बलीयसा भीमेन
पशुमारं निपातितः ॥ एतद्विस्तृतिस्तु महाभा-
रते ४ । २१ अध्याये द्रष्टव्या ॥)

कीचकनिसूदनः, पुं, (कीचकं निसूदयतीति । नि +
सूद + णिच् ल्युः ।) भीमसेनः । इति हेमचन्द्रः ॥
(अस्य विवरणं कीचकजिच्छब्दे द्रष्टव्यम् ॥)

कीचकभित्, पुं, (कीचकं भिन्नवान् । भिद + क्विप् ।)
भीमसेनः । इति भूरिप्रयोगः ॥ ( अस्य विवरणं
कीचकजिच्छब्दे द्रष्टव्यम् ॥)

कीट, क बन्धे । वर्णे । इति कविकल्पद्रुमः ॥ (चुरां-
परं-अकं-सेट् ।) क कीटयति कीटः । वर्णं
कैश्चिन्नमन्यते । इति दुर्गादासः ॥

कीटः, पुं, (कीट् + अच् ।) क्रिमिजातिः । इति शब्द-
रत्नावली ॥ (यथा मनुः १ । ४० ।
"क्रिमिकीटपतङ्गांश्च यूकामक्षिकमत्कुणम्" ॥
"सर्पाणामेव विण्मूत्रशुक्राण्डशवकोथजाः ।
दोषैर्व्यस्तैः समस्तैश्च युक्ताः कीटाश्चतुर्विधाः ॥
दष्टस्य कीटैर्वायव्यैर्दंशस्तोदरुजोल्वणः ।
आग्नेयैरल्पसंस्रावो दाहरागविसर्पवान् ॥
पक्वपीलुफलप्रख्यः खर्ज्जूरसदृशोऽथवा ।
कफाधिकैर्मन्दरुजः पक्वोदुम्बरसन्निभः
स्रावाढ्यः सर्व्वलिङ्गस्तु विवर्ज्जो ...तकः ।
वेगाश्च सर्पवच्छोफो व... ...विस्तरज्ञता ॥
शिरोऽक्षि गौरव मूर्च्छाभ्रमः श्वासोऽतिवेदना ।
सर्व्वेषां कर्णिकाशोफो ज्वरः कण्डूररोचकः" ॥
अस्य चिकित्सा यथा ।
"अर्कस्य दुग्धेन शिरीषवीजं
त्रिर्भावितं पिप्पलीचूर्णमिश्रम् ।
एषो गदो हन्ति विषाणि कीट-
भुजङ्गलूतोन्दुरवृश्चिकानाम्" ॥
इति च वाभटे उत्तरतन्त्रे ३७ अध्याये ॥
अस्यौषधं यथा ॥
"जतुसेव्यपद्मगुग्गुलुभल्लातककुङ्कुमपुष्पसर्ज्जरसाः ।
श्वेता एव धूम उरगाखुकीटवृश्चिकविनुदग्र्यः" ॥
"क्षीरिद्रुमत्वगालेपः शुद्धः कीटविषापहः" ॥
इति चरके चिकित्सास्थाने २५ अध्याये ॥
"सर्पाणां शुक्रविण्मूत्रशवपूत्यण्डसम्भवाः ।
वाय्वग्न्यम्बुप्रकृतयः कीटास्तु विविधाः स्मृताः ॥
सर्व्वदोषप्रकृतिभिर्युक्तास्त्वपरिणामतः ।
कीटास्त्वेऽपि सघोरास्ते सर्व्वे एव चतुर्व्विधाः ॥
कुम्भीनसस्तुण्डिकेरी शृङ्गीशतकुलीरकः ।
उच्चिटिङ्गोऽग्निनामा च चिच्चिटिङ्गो मयूरिका ॥
आवर्त्तकस्तथोरभ्रसारिका मुखवैदलौ ।
शरावकुर्द्दोऽभीराजी परुषश्चित्रशीर्षकः ॥
शतबाहुश्च यश्चापि रक्तराजिः प्रकीर्त्तितः ।
अष्टादशेति वायव्याः कीटाः पवनकोपनाः ॥
तैर्भवन्तीह दष्टानां रोगा वातनिमित्तजाः ॥ * ।
कौण्डिन्यकः कणभको वरटी पत्रवृश्चिकः ॥
विनासिका ब्रह्मणिका विन्दुलो भ्रमरस्तथा ।
वाह्यकी पिच्चिटः कुम्भी वर्च्चःकीटोऽरिमेदकः ॥
पद्मकीटो दुन्दुभिको मकरः शतपादकः ।
पञ्चालकः पाकमत्स्यः कृष्णतुण्डोऽथ गर्द्दभी ॥
क्लीतः क्रिमिसरारी च यश्चाप्युत्क्लेशकः स्मृतः ।
एते ह्यग्निप्रकृतयश्चतुर्व्विंशः प्रकीर्त्तिताः ॥
तैर्भवन्तीह दष्टानां रोगाः पित्तनिमित्तजाः ॥ * ॥
"विश्वम्भरः पञ्चशुक्लः पञ्चकृष्णोऽथ कोकिलः ।
सैरेयकः प्रचलको वलभः किटिभस्तथा ॥
सूचीमुखः कृष्णगोधा यश्च काषायवासिकः ।
कीटगर्द्दभकश्चैव तथाचोटक एव च ॥
त्रयोदशैते सौम्याः स्युः कीटाः श्लेष्मप्रकोपणाः ।
तैर्भवन्तीह दष्टानां रोगाः कफनिमित्तजाः ॥ * ॥
तुङ्गीनासो विचिलकस्तालको वाहकस्तथा ।
कोष्ठागारी क्रिमिकरो यश्च मण्डलपुच्छकः ॥
तुङ्गनाभः सर्षपिकोऽवल्गुली शम्बुकस्तथा ।
अग्निकीटश्च घोराः स्युर्द्वादश प्राणनाशनाः ॥
तैर्भवन्तीह दष्टानां वेगज्ञानानि सर्पवत् ।
तास्ताश्च वेदनास्तीव्रा रोगा वै सान्निपातिकाः" ॥
"क्षाराग्निदग्धवद्दंशो रक्तपीतसितारुणः ।
ज्वराङ्गमर्द्दरोमाञ्चवेदनाभिः समन्वितः ॥
छर्द्यतीसारतृष्णा च दाहो मोहविजृम्भिका ।
वेपथुश्वासहिक्काश्च दाहः शीतञ्च दारुणम् ॥
पिड़कोपचयः शोफो ग्रन्थयो मण्डलानि च ।
दद्रवः कर्णिकाश्चैव विसर्पाः किटिभानि च ॥
तैर्भवन्तीह दष्टानां यथास्वञ्चाप्युपद्रवाः ।
येऽन्ये तेषां विशेषास्तु तूर्णं तेषां समादिशेत् ॥
एकजातीनतस्तूर्द्धं कीटान् वक्ष्यामि भेदतः ।
सामान्यतो दष्टलिङ्गैः साध्यासाध्यक्रमेण च ॥
त्रिकण्टकः कुणी चापि हस्तिकक्षोऽपराजितः ।
चत्वार एते कणभा व्याख्यातास्तीव्रवेदनाः ॥
तैर्दष्टस्य श्वयथुरङ्गमर्द्दो गुरुता गात्राणां दंशः
कृष्णश्च भवति ॥
"प्रतिसूर्य्यः पिङ्गभासो बहुवर्णो महाशिराः ।
तथा निरुपमश्चापि पञ्चगोधेरकाः स्मृताः ॥
तैर्भवन्तीह दष्टानां वेगज्ञानानि सर्पवत् ।
रुजश्च विविधाकारा ग्रन्थयश्च सुदारुणाः ॥
गलगोली श्वेतकृष्णा रक्तराजी रक्तमण्डला
सर्व्वश्वेता सर्षपिकेत्येवं षट् ताभिर्दष्टे सर्षपिका-
वर्ज्जं दाहशोफक्लेदा भवन्ति ॥ सर्षपिकया हृदय
पीड़ातिसारश्च ॥
शतपद्यस्तु परुषा कृष्णा चित्रा कपिलिका
पीतिका रक्ता श्वेता अग्निप्रभा इत्यष्टौ ताभिर्दष्टे
शोफो वेदना दाहश्च हृदये । श्वेताग्निप्रभाभ्यामे-
तदेव दाहो मूर्च्छा चातिमात्रं श्वेतपिड़कोत्पत्तिश्च ॥
मण्डूकाः कृष्णः सारः कुहको हरितो रक्तो
यववर्णाभो भृकुटी कोटिकश्चेत्यष्टौ तैर्दष्टस्य
दंशकण्डूर्भवति पीतफेनागमश्च वक्त्रात् । भृकुटी
कोटिकाभ्यामेतदेव दाहश्छर्द्दिर्मूर्च्छा चाति मा-
त्रम् ॥
विश्वम्भराभिदष्टे दंशः सर्षपाकाराभिः पिड़-
काभिश्चीयते शीतज्वरार्त्तश्च पुरुषो भवति ॥
अहिंतुण्डकाभिर्दष्टे तोददाहकण्डूश्वयथवो
मोहश्च । कण्डूमकाभिर्दष्टे पीताङ्गश्छर्द्द्यतीसारः
ज्वरादिभिरभिहन्यते । शूकवृन्तादिभिर्दष्टे कण्डू-
कोठाः प्रवर्द्धन्ते शूकञ्चात्र लक्ष्यते ॥
पिपीलिकाः स्थूलशीर्षा सम्वाहिका ब्रह्मणि-
काङ्गुलिका कपिलिका चित्रवर्णेति षट् ताभिर्दष्टे
दंशे श्वयथुरग्निस्पर्शवद्दाहशोफौ भवतः ॥
मक्षिकाः कान्तारिका कृष्णा पिङ्गलिका मधू-
लिका काषायी स्थालिकेत्येवं षट् ताभिर्दष्टस्य
दाहशोफौ भवतः स्थालिकाकाषायीभ्यामेतदेव
पिड़काश्च सोपद्रवा भवन्ति ॥
मशकाः सामुद्रः परिमण्डलो हस्तिमशकः
कृष्णः पार्व्वतीय इति पञ्च तैर्दष्टस्य तीव्रकण्डूर्दंश-
शोफश्च पार्व्वतीयस्तु कीटैः प्राणहरैस्तुल्यलक्षणः ॥
नखावकृष्टेऽत्यर्थं पिड़काः सदाहपाका भवन्ति ।
जलौकसां दष्टलक्षणमुक्तं चिकित्सितञ्च ॥
भवन्ति चात्र ॥
गोधेरकः स्थालिका च ये च श्वेताग्निसंप्रभे ।
भृकुटी कोटिकश्चैव न सिध्यन्त्येकजातिषु ॥
शतमूत्रपुरीषैस्तु सविषैरवमर्षणात् ।
स्युः काण्डूदाहकोठाश्च पिड़कातोदवेदनाः ॥
प्रक्लेदवांस्तथास्रावो भृशं समाचयेत्त्वचम् ॥

विनयाख्यावुभौ ज्ञेयौ युद्धकाले जयप्रदौ ॥
नासामध्ये यदावर्त्त एको वा यदि वा त्रयः ।
चक्रवर्त्ती स विज्ञेयो वाजी भूपालपूजितः ॥
कण्ठे यस्य महावर्त्त एकोऽश्वस्य प्रजायते ।
चिन्तामणिः स विज्ञेयश्चिन्तितार्थविवृद्धिदः ॥
स्कन्धे पार्श्वे यदावर्त्तः स भवेत् पद्मलक्षणः ।
करोति विविधवत् पद्मी स्वामिनः सततं सुखम् ॥
शुक्राख्यौ तालुवान्तस्थावावर्त्तौ कीर्त्तिवृद्धिदौ ।
हृदयस्य स्वामियुक्तस्य सदैव सुसुखावहौ ॥
एकावर्त्तो भवेद्यस्य कक्षान्ते वाजिनो यदा ।
स रणे मृत्युमाप्नोति द्वौ च स्वामिविनाशनौ ॥
जानुदेशे यदावर्त्तो वाजिनः संप्रदृश्यते ।
प्रवासं सततं ब्रूते स्वभर्त्तुः क्लेशसंयुतम् ॥
वाजी मेढ्रतलावर्त्तो वर्जनीयो गृहीशुभाम् ।
स करोति हरेर्नाशं परचारसमुद्भवम् ॥
त्रिवलिस्थो यदावर्त्तस्त्रिवर्गस्य प्रणाशकः ।
वाजिनस्ते परिज्ञेयाः स्त्रीपार्श्वस्था भयप्रदाः ॥
पुच्छदेशे यदावर्त्तो वाजिनः संप्रदृश्यते ।
धूमकेतुरिति ख्यातः स त्याज्यो दूरतो गृहैः ॥
गुह्ये पुच्छे वलौ यस्य भवन्त्यावर्त्तकास्त्रयः ।
स कृतान्तस्वरूपेण वर्जनीयस्तुरङ्गमः ॥
अथ ऊर्द्धं यदा वाजी सम्पुटं न स्पृशेत् क्वचित् ।
यमदूतः स विज्ञेयो वर्जनीयः प्रयत्नतः ॥
हीनदन्तोऽधिदन्तश्च कराली कृष्णतालुकः ।
मुशली च तथा शृङ्गी मङ्गते स्वामिघातकाः ॥
एकाण्डजातश्चैकाण्डी हीनाङ्गोऽप्यधिकाङ्गकः ।
परित्याज्यः स वाञ्छद्भिरन्विष्य परमं यशः ॥
घण्टी वदनकी वाली शृङ्गी चैव चतुर्थकः ।
वर्जनीयः प्रयत्नेन सर्व्वे ते पापलक्षणाः ॥
घण्टी च स्वामिनं हन्ति वदनी धनसंचयम् ।
अन्तःपुरं तथा वाली शृङ्गी राष्ट्रविनाशनः ॥
षट्पदाभो भवेद्यश्च कृष्णतालुर्न दुष्यति ।
शुक्लपादसखो यस्तु आवर्त्तैः कुत्सितैरपि ।
न दुष्यति सदावर्त्तः शालिहोत्रमतं यथा ॥
इति श्रीनकुलविरचितेऽश्वचिकित्सिते
आवर्त्ताध्यायश्चतुर्थः ॥

अथ दन्ताः ।

दन्तोद्भेदं प्रवक्ष्यामि वाजिनामायुलक्षणम् ।
येन विज्ञातमात्रेण आयुर्ज्ञानं प्रचक्षते ॥
अश्वस्तु तनुभिर्दन्तैः क्षीरदन्त इति स्मृतः ।
तथा षोड़शभिः कोणो शात्रैर्द्वादशमासिकः ॥
त्रिंशन्मासोद्भवाः सर्व्वे अखण्डाः परिकीर्त्तिताः ।
द्वौ स्यातां द्वौ च न स्यातां सर्व्वोपरि यथाक्रमम् ॥
चतुर्भिर्वत्सरैर्दन्ताः कालिकाश्च भवन्ति च ।
तथान्यः सप्तमे वर्षे चतुर्थः कालिको भवेत् ॥
अष्टमे वत्सरे प्राप्ते प्राप्ताः पुनः सार्व्वकालिकाः ।
नवमे लघवा रेखा पीतत्वं संसर्पन्ति च ॥
तथाप्येकादशे वर्षे तावत् पीतत्वमागताः ।
तिष्ठन्ति दशनास्तेषां वाजिनामष्टसंशयम् ॥
ततः श्वेताः प्रदृश्यन्ते यावद्वर्षत्रयं पुनः ।
ततः काचप्रभाः सम्यक् यावत् संवत्सरात्त्रयः ॥
ततः सप्तदशाद्दूर्द्धं यावद्वर्षाणि विंशतिः ।





मक्षिकाभारदास्तेषां यावद्वर्षत्रयं पुनः ॥
तस्मादुदूखलं प्राप्तास्तावद्वर्षत्रयं पुनः ।
प्रकम्पश्च समागम्य पश्चात् पातः समाचरम् ॥
द्वात्रिंशद्वत्सरैरेव वाजी निर्व्वाणमाप्नुयात् ।
दंष्ट्राचतुष्टयं श्वेतं वर्क्षेण परमायुषि ॥
अश्वानामेव सर्व्वेषां दन्ता द्वादश कीर्त्तिताः ।
कालिका हारिणी शुक्ला काचा वाप्यथ मक्षिका ॥
शङ्खोदूखलकञ्चैव दन्तानाञ्चलनं तथा ।
ततस्तु पतनं विद्यादेष वञ्जनसंग्रहः ॥
चतुर्विंशतयो दंष्ट्राः शालिहोत्रमतं तथा ।
एवं दन्तविशेषेण सर्व्वेषामिह वाजिनाम् ।
विज्ञेया चायुषःसंख्या वाजिपोषणतत्परैः ॥
इति श्रीनकुलकृतेऽश्वचिकित्सिते दन्तोद्भेदो
नाम पञ्चमोऽध्यायः ॥

अथ अवयवप्रमाणम् ।

दीर्घहृस्वविमांसास्या ये भवन्ति तुरङ्गमाः ।
ते शस्ताः पार्थिवेन्द्रस्य यानवाहनकर्म्मणि ॥
स्कन्धमभ्युन्नतं दीर्घं वक्रग्रीवं विशेषतः ।
चमरालङ्कृतं सम्यक् स्तोकवालसमन्वितम् ॥
येषां पृष्ठं सुवंशं स्याद्विपुलं प्रणवर्जितम् ।
किञ्चिन्मध्ये भवेन्निम्नं राजार्हास्ते तुरङ्गमाः ॥
स्निग्धरोमा सुवृत्ता च सुस्थूला विपुला कटी ।
ग्रथिताः सुदृढ़ा रम्या भुजा मांसप्रपूरिताः ॥
पादा निर्मांसला वक्राश्चक्राकारखुरान्विताः ।
अप्रमाणं तथा वक्षः कर्णौ लघुतरौ स्मृतौ ॥
पार्श्वौ तनुतरौ शस्तौ सुरक्तस्निग्धतालुकम् ।
दन्ताश्च शिखराकारा विपुला चन्द्रवर्च्चसः ॥
सप्तविंशप्रमाणेन मुखमश्वस्य शस्यते ।
कर्णौ षड़ङ्गुलौ प्रोक्तौ तालुकं चतुरङ्गुलम् ॥
चत्वारिंशच्च सप्ताढ्याः स्कन्धाः सम्यक् प्रकीर्त्तिताः ।
पृष्ठवंशश्चतुर्व्विंशः सप्तविंशा तथा कटी ॥
अतिहृस्वं तथा निम्नं पुच्छं हस्तद्वयायतम् ।
लिङ्गं हस्तप्रमाणञ्च तथान्तौ चतुरङ्गुलौ ॥
मार्गस्थानं चतुर्व्विंशं हृदयं षोड़शाङ्गुलम् ।
कटिकचान्तरश्चोक्तं चत्वारिंशत् प्रमाणतः ॥
मणिबन्धद्वयं चैव खुराश्च चतुरङ्गुलाः ।
अशीत्यङ्गुल उत्सेधो दैर्घ्येण द्व्यधिकं शतम् ।
एवं क्रमेण गात्रस्य प्रमाणं वाजिनां मतम् ॥
दीर्घाणि चत्वारि तथोन्नतानि
चत्वारि रक्तानि च सूक्ष्मकाणि ।
हृस्वानि चत्वार्य्यथ चायतानि
भूयश्च चत्वार्य्यथ नम्रकाणि ॥
द्वात्रिंशत् क्रमशोऽप्याहुर्लक्षणानि मुनीश्वराः ।
तान्यहं कीर्त्तयिष्यामि वाजिनाञ्च पृथक् पृथक् ॥
आस्यं भुजौ केशककाटिकाञ्च
दीर्घं चतुष्कं तुरगस्य शस्तम् ।
तथोन्नते प्राणपुटे ललाटे
शफाश्च तज्ज्ञास्तरणौ वदन्ति ॥
ओष्ठौ च जिह्वाप्यथ तालुकञ्च
मेढ्रं सुरक्तं शुभदं हयस्य ।



लघूनि वस्त्यास्वरणेषु कोष्ठं
श्रोत्राणि सर्व्वाणि तथैव पुच्छम् ॥
कर्णान्तरं कर्णसमन्वितञ्च
वंशं तथा हृस्वतरं प्रशस्तम् ।
वक्त्रं मुखं कन्धराजानुनी च
पार्श्वञ्च सम्रैः शुभदं प्रदिष्टम् ॥
कक्षान्तरं चोदरमध्यमञ्च
निम्ना कटी तानि सजानुकानि ।
वक्षःशफोरूजघनस्थलञ्च
चतुष्कमेतत् पृथुलं प्रदिष्टम् ॥
इति श्रीनकुलकृतेऽश्वचिकित्सिते सर्व्वावयवप्रमाणो नाम षष्ठोऽध्यायः ॥

अथ वेगः ।

गुणानामिह सर्व्वेषां गुणो वेगमयोऽधिकः ।
अश्वानां शस्यते तज्ज्ञैरश्वज्ञानविचक्षणैः ॥
संवाहनविधानेन प्रकाशं यान्त्यसंशयम् ।
तस्मात् सर्व्वप्रयत्नेन वेगो ज्ञेयश्च वाजिनाम् ॥
अवाहिता विनश्यन्ति विनश्यन्त्यतिवाहिताः ।
अश्वानां वाहनं पथ्यं सानुरागश्च मोक्षणम् ॥
अधमा मध्यमास्ते स्युर्मध्यमाश्च तथोत्तमाः ।
उत्तमाश्चोत्तमा भूयो वाह्यमानास्तुरङ्गमाः ॥
रूढ़मश्वविदां श्रेष्ठं रूढ़े सर्व्वं प्रतिष्ठितम् ।
रूढ़ेन तु विहीनस्य लक्षणं चाप्यलक्षणम् ॥
रूपावर्त्तगतिच्छायासत्ववर्णवयोबलम् ।
जवहीनस्य वाहस्य सर्व्वमेव निरर्थकम् ॥
गतेर्धन्यतरो वर्णो वर्णाद्धन्यतरः स्वरः ।
स्वराद्धन्यतरं सत्वं सर्व्वं सत्वे प्रतिष्ठितम् ॥
लघुत्वं मातृदोषेण पितृदोषेण जाड्यता ।
दौर्ब्बल्यं स्वामिदोषेण स्वदोषो नास्ति वाजिनाम् ॥
जवो हि सप्तेः प्रथमं विभूषणं
त्रपाङ्गनायाः कृशता तपस्विनः ।
द्विजस्य वेदोऽथ मुनेरपि क्षमा
पराक्रमः शस्त्रबलोपजीविनः ॥
व्याकर्षन्निव गां वमन्निव खुरौ पश्चार्द्धसद्मन्निव
स्वोद्धर्म्मन्निव खं पिबन्निव दिशो वायुं समश्नन्निव ।
साङ्गारप्रवरान् स्पृशन्निव महीं छायाममर्षन्निव
चञ्चच्चामरवीज्यमानवदनः श्रीमान् हयो धावति ॥
अलक्षितगतागतैर्मृगदृशां कटाक्षैरिव
चणानुनयशीतलैः प्रलयकेलिकोपैरिव ।
सुरतमध्यगोत्तरैर्मृगदृशामुरोजैरिव
त्वरीयतुरगैरलं धरणिचक्रमाक्रम्यते ॥
येषां दीपशिखोपमानि नयनान्युद्धावितः सन्निव
ग्रीवा क्रौञ्चनिभा विभाति च समा पादाश्च
सूक्ष्मोपमाः ॥
वेगो वायुरिवाथ वानरसमः स्वान्तारवप्रेङ्खितं
शङ्खक्रौञ्चमृगेन्द्रदुन्दुभिघनध्वानेभतुल्यस्वनः ॥
वक्षो यो हरिणाधिपप्रतिनिभो याम्योपमो
बाहुभिः
आवर्त्तैश्च शुभैः प्रधानकुलजाः सान्द्रघवर्ण-
प्रभाः ।
उच्चाङ्गाः प्रियदर्शनाश्च सुभगाः ख्याते:
सुगन्धैश्च ये

धावन्ति घातैश्च न चोद्विजन्ते
भयावहास्ते समरे नृपाणाम् ॥
शोकं शीलं भयं लज्जामालस्यं चैवमादिषु ।
सुकुलं तं विजानीयादन्यं पर्य्यायवारणे ॥
स्थाणुकण्टकवृक्षैश्च सुधाखदिरकण्टकैः ।
स्वामिघाताय चादत्ते तेषां रूपमिदं शृणु ॥
वानरोलूकमार्जारतरक्षुगवलेक्षणाः ।
गतिर्वा वसुरैस्तुल्या स्थूलमेढ्रशिरान्विताः ॥
लम्बोष्ठकर्णनासाश्च क्षतदग्धाङ्गाधिकाङ्किताः ।
विच्छिन्नग्रीवगण्डा ये भ्रुकुटीचित्रमेहनाः ॥
एते दोषास्तथान्येऽपि सुकुलाश्वसमुद्भवाः ।
खलानामिह राजेन्द्र! वक्तुं शक्या न सादृशैः ॥
लक्ष्यं प्रधानमित्येके चान्ये लक्षणमाश्रिताः ।
लक्ष्यलक्षणमेतेषां तेनेदं दुष्करं विदुः ॥
अथापि रतिसंक्षेपादतिथाशिश्च विस्तरात् ।
मुनीनामेकवाक्यत्वाद् भूयसः स्थितिदुष्कराः ॥
सत्त्ववर्णगतिच्छायास्वरस्थानगतिः कुलम् ।
पुण्यं पुण्ड्रकनामानि दोषं वा जवलक्षणम् ॥
एवं लक्षणसंयुक्तं दृश्यते शूररक्षणे ।
लक्षणेन विहीना ये निर्द्दोषाः स्युः प्रधाविताः ॥
हयरोहस्य का चिन्ता लक्षणैः शुभनिन्दितैः ।
तेनात्र न कृतोऽस्माभिर्हयलक्षणविस्तरः ॥
हयवाहनविज्ञानं कौतुकाहितहृदयः ।
अनायासेन गृह्णन्ति परं दृष्ट्वा इमे जनाः ॥
चलासनं कषा रागाः पार्ष्णिघातप्रतोदनम् ।
मदप्रघातसंज्ञानि दोषो यैरुपजायते ॥
कामात् कोपाद्भयाल्लोभाद्दर्पाच्चैव मदाश्रयात् ।
मर्य्यादारोहदोषाच्च दुष्यन्त्यश्वा निसर्गतः ॥

श्रीयुक्तसामन्तनरेन्द्रवन्दितं
रत्नं हयारोहवराभिनन्दितम् ।
धर्मार्थकामादियशःप्रधान-
मित्थं कृतं वाहनशास्त्रविस्तरम् ॥

इति श्रीनकुलकृतेऽश्वचिकित्सिते वाहनाध्यायो नवमः ॥

अथ धातुपरीक्षा ।

अथातः संप्रवक्ष्यामि धातूनां लक्षणं परम् ।
येन विज्ञानमात्रेण ज्ञायन्ते रोगसम्भवाः ॥
ततः शुद्धशरीरोत्थरक्तदोषानवाप्नुयात् ।
रक्तदोषात्तदा वाजी प्राप्नोत्येव महामयान् ।
तस्मात् सर्व्वप्रयत्नेन रक्तं ज्ञेयं विचक्षणैः ।
आषाढ़समये प्राप्ते शिरामोक्षेण तत्क्षणः ॥
तेन संशोध्यते रक्तं वाजिनां दोषसम्भवम् ।
ततः शुद्धशरीरोऽथ पित्ताद्यैश्च वशीकृतः ॥
श्रावणे प्रथमासाद्य वज्रवत् सुदृढ़ो भवेत् ।
यदि रक्ताधिको वाजी शस्यमश्नाति कर्हिचित् ॥
रक्तात् सञ्जायते पित्तं ततो नाशमवाप्नुयात् ।
रक्ताधिकश्चासपुटः स्नेहाद्यैः शस्यमत्ति चेत् ॥
संप्राप्य श्लेष्ममरिचाद्यो नाशमवाप्नुयात् ।
हीनरक्तो यदा शस्यं रूक्षोऽश्नाति तुरङ्गमः ॥
तदा वायुं परं प्राप्य सद्यो नाशमवाप्नुयात् ।
तत्रेदं लक्षणं प्रोक्तं रक्तकोपसमुद्भवम् ॥
धातूनामपि सर्व्वेषां ज्ञेयमिदं विचक्षणैः ।

पित्तरक्तप्रकोपेण यदा संपीड्यते हयः ॥
तदा कण्डूतिमासाद्य कषते सततं वपुः ।
छायां वाञ्छति यत्नेन विशेषेण जलाश्रयम् ॥
मुहुर्वाञ्छति पानीयमाहारञ्च विशेषतः ।
एवं वातोत्थरक्तेन ज्ञात्वाश्वं पीड़ितं ततः ॥
शिरामोक्षं विधायैव दद्यात् सकटुकं गुड़म् ।
ततः शुद्धिमवाप्नोति नीरोगः संप्रपद्यते ॥
पित्तासृग्दूषितो वाजी यदि चाश्रूणि मुञ्चति ।
नेत्रान्ते पाण्डुरतास्य सद्यो मृत्युमवाप्नुयात् ॥
नेत्रयोर्लक्षणं प्रोक्तं पित्तरक्तसमुद्भवम् ।
श्लेष्मरक्तप्रकोपेण यदा सम्पीड्यते हयः ॥
अधोवक्त्रो भवेन्नित्यं तामते च मुहुर्मुहुः ।
आहारं न च गृह्णाति नात्माहं कुरुते क्वचित् ॥
न तिष्ठति कशाघातं न च पार्ष्णिं न चासनम् ।
नासाग्रेण छिपेत्तोयं रविधर्म्मञ्च वाञ्छति ॥
तस्यापि शोधयित्वासृग् दद्यात्कुष्ठायुतं गुड़म् ।
सर्व्वं रक्तं ततः शुद्धं निःशेषं समवाप्नुयात् ॥
वाजिनः श्लेष्मरक्ताभ्यां दूषितस्य सदा भवेत् ।
नेत्रान्ते बिन्दुकाकारकण्डूस्तस्य तथोदरे ॥
तदा मृत्युमवाप्नोति पक्षमासाभ्यन्तरे ध्रुवम् ॥

शुण्ठ्यग्निता गोक्षुरकं घनञ्च
श्यामा निशाच्छिन्नयुता च यष्टिः ।
कफप्रणाशाय विनिर्मितोऽयं
पिण्डः पलिह्यश्च कफापहश्च ॥

नीचैर्दद्यानि शुण्ठ्याद्यं सैन्धवं नस्यमार्गतः ।
वायुरक्तप्रकोपेण पीड़ितस्तु तुरङ्गमः ॥
कुक्षिद्वयं हयस्तीव्रं मुहुः श्वासं प्रमुञ्चति ॥
नैकत्र मन्यते स्थातुं रुष्यते च निरर्गलम् ।
एवं वातोद्भवं ज्ञाप्यं रक्तान्दे हयस्य च ॥
शोधयित्वाश्च सन्दद्यान्महाघृतमनल्पकम् ।
ततः शुद्धिमवाप्नोति परां पुष्टिञ्च गच्छति ॥
उत्साहं कुरुते मार्गे सर्व्वदोषविवर्ज्जितः ।
वातरक्तप्रकोपेण लोचनान्ते हयस्य च ॥
यदा स्यातां सिते रक्ते कायः काण्डूस्तथानने ।
तदा तस्य भवेन्मृत्युर्यदि नाश्नाति चामिषम् ॥
अथसकाष युतन्दभा माहिषेण निशागमे ।
सन्निपातेऽथ रक्तेन यदा सम्पीड्यते हयः ॥
यदा वेपथुमाप्नोति काशते च निरर्गलम् ।
निद्रालस्याग्निमन्दत्वं वक्त्रे मलनिबन्धनम् ॥
कर्णयोः पातनञ्चैव वक्त्रालालाविमोक्षणम् ।
तत्रापि शोधयेद्रक्तं ततो लङ्घनमर्हति ॥
यावद्दोषस्य निर्णाशं लोकोदकशताशनः ।
क्वचिदुष्णं क्वचिच्छीतं क्वचिद्व्यञ्जनसंयुतम् ॥
प्रदेयं युक्तितश्चैवारि वार्य्यं न कुत्रचित् ।
सपथ्या चाम्रता चैव कटुका च वचा तथा ॥
शामयेत्तत्क्षणादेव त्रिधातुकुपितं ज्वरम् ।
शिरीषं श्रीफलस्यैव वेतसस्यैव वृद्धिभाक् ॥
मन्दाग्नित्वं सदोषाणां कुरुते भस्मसादृढ़तनुम् ।
मधुकं मधुनालञ्च माधुर्य्यं कुलिकान्वितम् ॥
शिरीषं चूर्णकं दाचां पाययित्वा त्रिभागतः ।
यस्यैतत् सन्निपाताय वाजिनः संप्रदीयते ॥
तस्य तन्नाशमायाति तमः सूर्य्योदये यथा ।

स्वस्थस्यापि हि नेत्रान्ते स्यातां नीले च वाजिनः ॥
गन्धश्च मद्यशः जीवता तदा मृत्युर्द्विमासिकः ।
नीले पीतेऽथ नेत्रान्ते स्यातां चेद्वाजिनः क्वचित् ।
स निर्व्वाणमवाप्नोति त्रिभिर्मासैरसंशयम् ॥
यस्य नेत्रान्तरे रेखा पाण्डुवर्णा प्रजायते ।
विशेषान् स्वरभेदः स्यात्तस्यायुः पञ्चमासिकम् ॥
जिह्वायां जायते बिन्दुरकस्माद् यस्य वाजिनः ।
कृष्णस्तु जीवते मासं स वाजी नात्र संशयः ॥
पीतो मासद्वयेनैव मृत्युं स प्रयच्छति ।
त्रिभिर्मासैस्तथा रक्तश्चतुर्भिश्च विचित्रितः ॥
पञ्चभिर्नीलवर्णश्च षड्भिर्जलसमाकृतिः ।
सप्तभिः पाटलाकारश्चन्द्रकाभस्तथाष्टभिः ॥
नवभिश्च हरिद्राभो दशभिर्जम्बुकोपमः ।
एकादशभिर्दूर्व्वाभो वत्सरेण हिमद्युतिः ॥
यस्य श्वासो भवेदुष्णः शरीरं पुलकाङ्कितम् ।
जिह्वा हिमकराकारा मासषट्कं स जीवति ॥
ग्रीवाग्रे पिड़िका यस्य जायते च तथाधरे ।
मूत्रं करोति रक्ताढ्यं मासषट्कं स जीवति ॥
वर्णः श्वेतो यदा यस्य नेत्रयोश्च प्रजायते ॥
दशमासान् समासाद्य पित्तार्त्तो न न जीवति ।
यस्य नीलप्रभे स्यातां नेत्रे वातार्द्दितस्य तु ।
रात्रित्रयस्य छप्नेण वः सहिः स न जीवति ॥
श्लेष्मयुक्तस्य वा रक्ते यदि स्यातां विलोचने ।
कालान्धः सुरातुल्यो दश मासान् न जीवति ॥
यस्य नेत्रे हरिद्राभे स्यातां पित्तार्द्दितस्य च ।
तस्यायुः सप्तमासाख्यं मुनिभिः परिकीर्त्तितम् ॥
बहुवर्णे घने नेत्रे स्यातां धातुसमागमे ।
तस्य सप्तभिर्मृत्युः समरानादसंशयम् ॥
यस्यैकं लोचनं नीलं द्वितीयं रक्तसन्निभम् ।
दृश्यते च च विज्ञेयः पित्ताढ्यो मासजीवकः ॥
यस्य पित्तप्रसक्तस्य काये नीरदवर्त्तिनि ।
हयस्य जीवितं तावद्दिनानि दश पञ्च च ॥
एवं रक्तविकाराणां ज्ञात्वा धातुं तुरङ्गमे ।
ततः प्रतिक्रिया कार्य्या उक्ता या कीर्त्तिता परा ॥
भयाद्भीतपानीयशीतविशीर्णस्य च ।
आर्त्तोऽपि ताड़ितोऽत्यर्थं तिर्य्यग्विद्धो यदापि वा ॥
श्रमाद्भराच्च वन्धाद्वा गात्रे वा विषमस्थिते ।
क्षीणशोणितमांसस्य शिरावेधः प्रशस्यते ॥

इति श्रीनकुलकृतेऽश्वचिकित्सिते धातुपरीक्षाध्यायो दशमः ॥

अथ ऋतुचर्य्या ।

द्वासप्ततिसहस्राणि नाड़ीनां हि भवन्ति च ।
वाजिनामिह सर्व्वेषां वपुरक्तं व्यवस्थितम् ॥
तासां निर्म्मोचनार्थाय शारास्यष्टौ वदाम्यहम् ।
वैर्य्याति कुत्सितं रक्तं सर्व्वदेहसमुद्भवम् ॥
कण्ठे वक्षसि तालौ च नासयोश्च मुखे तथा ।
अण्डयोरथ पादेषु पाद्योरुभयोरपि ॥
कालं बलञ्च विज्ञाय वाजिनां भिषगुत्तमः ।
शिरामोक्षं प्रकुर्वीत स्थानेष्वेतेषु पण्डितः ॥
अन्ये सप्तदश प्राहुः शिराद्वाराणि वाजिनः ।
विकारयुक्तं यद्रक्तं सुस्वल्पमपि वर्जयेत् ॥
एवं शरदि यः सम्यक् पुष्टिं नयति वाजिनाम् ।

तत्र यद्वाञ्छितं किञ्चिद्दयानाथ तत्र सिध्यति ॥
ततो हेमन्तमासाद्य निवाते निरुपद्रवम् ।
मासोत्थं यवसन्दानं पानीयञ्च यथेच्छया ॥
घृतं वा यदि वा तैलं पाने दद्याद्विचक्षणः ।
वाहयेच्च शनैर्नित्यं सर्व्वदोषप्रशान्तये ॥
तत्र शिशिरमासाद्य दद्यात्तैलं हि वाजिनाम् ।
पलाष्टकप्रमाणेन यावद्दिनत्रिसप्तकम् ॥
यवोत्थं यवसं दद्यादेकविंशत्यहानि च ।
यवाभावेऽथ चणकान् दद्यादार्द्रतरान् सदा ॥
तदभावे मसूरांश्च मुद्गांश्च तैलसंयुतान् ।
यवसं चापि तद्देयं नीरोगो जायते हयः ॥
औषधानाञ्च सर्व्वेषां कार्याणां नस्यकर्म्मणाम् ।
तैलानाञ्च घृतानाञ्च यवस्य यवसं परम् ॥
पर्व्वतानां यथा मेरुरायुधानाञ्च वज्रकम् ।
तथा सर्व्वोपचाराणां मध्ये श्रेष्ठतमा यवाः ॥
देवतानां यथा विष्णुर्ब्रह्मा वेदविदां वरः ।
नदीनाञ्च यथा गङ्गा तथा श्रेष्ठा यवा हये ॥
यथोदितः सहस्रांशुर्निःशेषं तिमिरं जयेत् ।
तथा शरीरजान् दोषान् यवाः सर्व्वे हरन्ति च ॥
उपचारक्रियाः सर्व्वाः पञ्चसुञ्जनिता हये ।
कृताः सुपथ्यभोज्येन सफलास्ताः कृता नरैः ॥
दस्य दत्ता यथा भोज्यं शिशिरे समुपस्थिते ।
साम्प्रतापि कृता सर्व्वा पञ्चसुञ्जनिता हये ॥
तथा सुपथ्यभोज्येन सफलास्ताः कृता नरैः ।
नीरोगास्तुरगाः सर्व्वे शालिहोत्रमतं यथा ॥
पञ्चसुञ्जनिता याश्च क्रिया व्यक्ता तुरङ्गमे ।
पश्चात्तास्तु विजानीयात् पथ्यभोज्यविवर्ज्जिताः ॥
एवं रक्तविशुद्ध्यर्थं कृत्वा यत्नेन वाजिनाम् ।
दद्यादम्लयवसयुक्तां सतैलाञ्च हरीतकीम् ॥
दिनत्रिसप्तकं यावत् पलपञ्चप्रमाणतः ।
ततः शुद्धिमवाप्नोति निःशेषाद्रुधिरोद्गमात् ॥
ततो गन्धमाहारं संप्राप्य सुमनोहरम् ।
परां पुष्टिमवाप्नोति नीरोगश्च प्रजायते ॥
न प्रायो वाहयेदश्वं प्रावृट्काले कथञ्चन ।
य दद्याद्विरलस्य वाहनं दशमासिकम् ॥
कूपोदकं मन्दं शस्तं पानाय जलदागमे ।
अभ्यङ्गं कटुतैलेन निर्वातस्थानबन्धनम् ॥
एकान्तान्तरितं दद्यात्रजगच्च विचक्षणः ।
पलद्वयप्रमाणेन सुरसापरिशुद्धये ॥
सुखरोगमवाप्नोति चातुर्म्मास्यविवर्जितः ।
दत्ताम्भोभिस्तु विज्ञाप्नोत्यथा बध्यते हयः ।
चतुर्होऽन्यकलान् ग्रासान् प्राप्नोति शतशः परान् ।
सर्पिरेकप्रधानेन बलहीनश्च जायते ।
तस्मात् सर्व्वप्रयत्नेन प्रावृट्काल उपस्थिते ।
अनेन विधिना प्राज्ञो वाजिनः परिपोषयेत् ॥
ततः शरदमासाद्य बहुशस्यसमन्वितम् ।
शस्यं चारोग्यं समपञ्चाष्टपरिमस्थया ॥
दुग्धं वा केवलं रात्रौ क्वथितं समप्रयस्यति ।
तदाप्यदधि यत्किञ्चिन्मधुरं सम्प्रजायते ।
पानाय पारमं तोयं यथेच्छं सुमनोहरम् ।
चैत्रकमुद्गाञ्च एनं शालिञ्च संयुतम् ॥
वाहनं च प्रयत्नेन सुमनसमपि वर्द्धयेत् ॥

परीक्षामाला यथा हेम ब्राह्मण्यस्य प्रतिक्रिया ।
हयजीवस्य तद्वच्च परीक्षा यवभक्षणे ॥
यथा सांयात्रिकः पारं गत्वोर्व्वे स्वस्थतां व्रजेत् ।
तद्वत् यवाशनोत्तीर्णा सुहृष्टा हयोत्तमाः ॥
अल्पेनापि हि छिद्रेण यथा नश्यति नौर्जले ।
स्वल्पेनापि हि भावेन यवशोषास्तथैव च ॥
एवं ज्ञात्वा विशेषेण यवा देयाः प्रयत्नतः ।
प्रायशीता विशेषेण शिशिरे समुपस्थिते ॥
शुष्का वापि यवा देयाः सर्व्वकालं च वाजिनाम् ।
प्राणदास्ते ततो ज्ञेयाः सर्व्वव्याधिविनाशनाः ॥
यश्चाश्नाति यवानाशु शुष्कांश्च स्वेच्छया सदा ।
न तस्य जायते रोगः कदाचिच्च यवाशभाक् ॥
न च शूलं न च श्वासो न च शोषो न च भ्रमः ।
न च रक्तप्रकोपश्च न च वातादिधातवः ॥
योग्योऽशनाय वाहानां प्रधानो यव इष्यते ।
यवाभावेऽथ चणका धान्यमन्यतमं परम् ॥
यवाभावेऽथवा दद्यान्मुकुष्ठांस्तैलसंयुतान् ।
भोजने तुरगेन्द्राणां परां पुष्टिमभीप्सताम् ॥
सकुष्ठभोजनाद्वाजी पुष्टिं गच्छत्यलौकिकीम् ।
उत्साहं परमं धत्ते स च रोगैर्विमुच्यते ॥
चणकाश्च गुरुत्वानां सुखा देया मनीषिभिः ।
सतैलास्तेऽपि कुर्व्वन्ति पुष्टिं सत्त्वविवर्द्धिनीम् ॥
एते पुष्टिगुणाः प्रोक्ताश्चणकाहारजा हये ।
नाग्यस्तस्मादभावेन सर्व्वेषां तान् विनिर्द्दिशेत् ॥
नान्यद्धितं प्रशंसन्ति पथ्यं वाजिनां बुधाः ।
भक्षणाय यवस्तस्य दानोल्लङ्घनमुत्तमम् ॥
यवाभावे प्रदातव्यं घृतं वा यदि वा पयः ।
शस्यं वा मांसमेवाथ पुष्ट्यर्थं वाजिनां सदा ॥
यस्त्वन्यं शस्यमश्नाति सदा लवणमिश्रितम् ।
किं तस्य शस्यदानेन यथाभृतेन भूपते ॥
शस्याभावेऽथ यवसं शुष्कं वा यस्य वाजिनः ।
स्वादिविश्रमरण्ये च स्वेच्छया सविमुक्तिका ॥
ते चापि वाजिनो ज्ञेया यथा शस्यचरास्तथा ।
तथा सर्व्वप्रयत्नेन तुरगान् चारयेद्वने ॥
आरोग्यार्थं सुपुष्ट्यर्थं सुखवाहार्थं विशेषतः ।
वित्तक्षयस्य रक्षार्थं नरेन्द्रेण प्रयत्नतः ॥
वसन्तसमये प्राप्ते वाहयेत् सततं हयम् ।
सनिम्बं लवणं दद्यात्ताभ्यां तैलं विशेषतः ॥
सर्व्वत्र सम्भवं भोज्यं तैलं वा यदि वा घृतम् ।
न दोषकारणं प्रोक्तं सञ्चारं लवमग्रतः ॥
ग्रीष्मान्तसमये योऽश्वः स्थाने तिष्ठति बन्धने ।
तस्योत्साहः प्रणश्येत बालस्य जायते वपुः ॥
ततो मन्दाग्निनाविष्टो रोगाभावे प्रजायते ।
तस्मात् सर्व्वप्रयत्नेन वसन्ते वाहयेद्धयम् ॥
ग्रीष्मकाले च संप्राप्ते दूर्व्वाभोज्यं प्रशस्यते ।
वाजिनामिह सर्व्वेषां सर्व्वतापोपशान्तये ॥
घृतपानं विशेषेण शुक्तायाश्च निरन्तरम् ।
तदभावे च गात्रेषु यावं वा घृतसंयुतम् ॥
दूर्व्वाभावे प्रदातव्यं तुरगाय घृतान्वितम् ।
शालिकाण्डसमध्याय सर्व्वरोगोपशान्तये ॥
एवं मत्स्यमयं पथ्यमुपचारं करोमि यः ।
वयस्य तु यतो नित्यं तस्य वहन्ति वाजिनः ॥

नीरोगाः पुष्टिसंयुक्ताः प्रकृष्टोत्साहसंयुताः ।
तर्पिता भूमिपेश्वा भूमिभागं क्रियाक्षमाः ॥

इति श्रीनकुलकृतेऽश्वचिकित्सिते ऋतुपथ्याध्याय एकादशः ॥

अथ नस्य ।

कासश्वासक्षमो नस्यो वातपित्तकफोद्भवः ।
नस्यं सनाशयेत्तस्मात्तु नस्यं योजयेद्धये ॥
पिप्पली सैन्धवं सारं नागरञ्च गुडान्वितम् ।
हस्तिकासारमध्याय गर्ज्जनी श्लेष्मनाशनम् ॥
चूलिकालवणं नस्ये सदा रोगविनाशनम् ।
सिता चन्दनतोयानि वालुकाख्यानि वाजिनाम् ।
नस्यकर्म्माणि शुक्लानि नाडीवातप्रशान्तये ।
मद्दुकैरादिकं साम्रं बलाचारविमिश्रितम् ॥
नस्ये दत्तं वातशान्त्यै हयरोगविनाशनम् ।
शर्करा माक्षिकं सैरं पटोलं पलसंयुतम् ॥
नस्ये प्रदद्यात् सप्तीनां जायते रोगशान्तये ।
वचा चोग्रायिकं कुष्ठं शुण्ठी च कासमर्दिका ॥
युक्तं शीतोदके स्तोके तेषां नस्येऽवपयेत् ।
गुडूची कौसुदी ताली मिश्रिता कूपवारिणा ॥
नस्ये दत्ता वराश्वानां शिशिरे सुखदा सदा ।
अपामार्गं महानस्यं सर्व्वरोगविनाशनम् ॥
कवलं कटुतैलं वा गोमूत्रे पाचितञ्च यत् ।
मैथुनादिकृशश्वानां शीतोबलकरं विदुः ॥
कफरोगे तथा नस्यं गोमूत्रलवणान्वितम् ।
महद्गुणकरं प्रोक्तं सर्व्वदोषनिवारणम् ॥
अपामार्गस्य मूलेन नस्ये मूत्रञ्च छागलम् ।
मुखरोगविनाशाय नस्यं मनस्वरसोद्भवम् ॥
*लशुनं पिप्पलीमूलं शठ्ठकी नागकेशरम् ।*
दत्तं नस्येन रोगघ्नं कटुतैलेन वाजिनाम् ॥
नस्यं पर्युषितैस्तोये प्रातर्न्न तु कवले ।
अश्वानाञ्च नराणाञ्च चक्षुष्यं बलप्रदम् ॥
पिप्पलीमिश्रतोयेन शर्कराससलिलेन च ।
नस्यं यच्छन्ति सप्तीनां सर्पिषा यच्छते बलम् ॥
नस्यं स्निग्धं तथा रूक्षं तिक्तञ्च मधुरं तथा ।
चतुर्द्धा वाजिशास्त्रज्ञैर्यथावत् परिकीर्तितम् ॥
देयं वाताधिके स्निग्धं रूक्षं तिक्तं कफाधिके ।
मधुरं चैव पित्ताढ्ये तुरङ्गे समयोचितम् ॥
द्विपलार्द्धप्रमाणं वा श्रेष्ठं नस्यमुच्यते ।
पादोनं मध्यमं तत्र षड्विंशत्या तथाधमम् ॥
नस्याभ्यासे वाजिनो रक्तं सम्यक् पुष्टं प्रजायते ।
नस्यदानात् घृतं तस्य विनाशमुपगच्छति ॥
दाडिमं पुष्करं शीकं श्वेतदूर्व्वाङ्कुरास्तथा ।
शीतोऽम्बुकेन संयुक्तं रक्तं दुष्टं न जायते ॥
धातकी गोक्षुरं रोध्रं कुसुमं सिन्दुवारकम् ।
शीतोदकेन संयुक्तं नस्यं रक्तविनाशनम् ॥
धातकी शल्लकी चैव गोमूत्रं लवणं तथा ।
नस्ये दत्तं कफं हन्ति तमः सूर्य्योदये यथा ॥
शुण्ठी घृतञ्च दुग्धञ्च रससारं तथैव च ।
वातरोगविनाशाय नस्यमेतत् प्रयोजयेत् ॥
माक्षिकं शर्करायुक्तं चन्दनं केशराणि च ।
नस्योऽयं वारिणा सार्द्धं पित्तनाशकरः परः ॥
गुडूची शुण्ठी मुस्ता च तगरं [illegible] ।

सन्निपाते सपित्तेऽयं नस्यः स्याज्जीवरक्षकः ॥
अभया पुत्रिणी धात्री एला लाक्षा शतावरी ।
सन्निपातेऽनिलाधिक्ये नस्योऽयं क्षेमकारकः ॥
मरिचं पिप्पलीमूलं वचा भार्ङ्गिकाभया ।
सन्निपाते कफाधिक्ये नस्यं सर्पिः सुखप्रदम् ॥”
इति श्रीनकुलकृतेऽश्वचिकित्सिते नस्याधिकाराध्यायो द्वादशः ॥

अथ पिण्डः ।

“कटुका च जयन्ती च भ्रामरी सुरसा घनाः ।
पञ्चामृतमयः पिण्डो वाजिनामामयमिरक्षत ॥
एला शतघ्नी सुरसा काकजङ्घा शतावरी ।
माक्षिकं ससितं पिण्डः पित्तयुक्ते हि वाजिनि ॥
माक्षिकं सैन्धवं मुस्ता गोमूत्रञ्च हरीतकी ।
समभागेन पिण्डोऽयमुक्तो वह्निप्रदीपकः ॥
कंकोलं केतकी द्राक्षा शर्करा मधुयष्टिका ।
दत्तो घृतयुतः पिण्डः पुष्टिं नयति वाजिनः ॥
मत्स्यमांसेन संयुक्तं माषचूर्णं घनश्रुतम् ।
बलहीनस्य वाहस्य पिण्डोऽयं बलवर्द्धनः ॥
पला मद्यं दधि क्षौद्रं भक्षयंस्तुरगो भवेत् ।
अनिरुद्धोऽपि रूक्षोऽपि यथा षट्सप्तवार्षिकः ॥
मेथिका धातकी काली सारणी बीजपूरकः ।
पिण्डो दत्तो वराश्वानां तेजोवृद्धिकरः स्मृतः ॥
कटुका मद्यसंमिश्रा धात्री लोध्रगुडान्विता ।
दत्ता पिण्डविधानेन वाजिनां सुखवृद्धिदा ॥
त्रिफला कटुका मुस्ता विडङ्गानि च चित्रकम् ।
सदालस्यसमेतानां वाजिनां पिण्ड आर्त्तिहृत् ॥
वचा निर्दलिताः स्निग्धाः सघृताः क्षारभाविताः ।
पिण्डैर्दत्ताः प्रकुर्व्वन्ति वाजिनां व्याधिनाशनम् ॥
सैन्धवं नागरं श्यामा गुडूची सितसर्षपाः ।
अम्लवेतससम्भानां पिण्डोऽयं शूलनाशनः ॥
पिप्पली पिप्पलीमूलं कटुका सहदेविका ।
दूर्व्वापल्लवसंमिश्रः पिण्डोऽयं शोथनाशकः ॥
केशरं श्रीफलं तालं माक्षिकं गिरिकर्णिका ।
पिण्डोऽयं श्रपने शस्तो वाजिनां सुगतिप्रदः ॥
वचा लोध्रं सकर्पूरं गुहा श्यामा गुडं मधु ।
समांशकेन पिण्डोऽयं करोति लघुतां हये ॥
मद्यं मरिचसंयुक्तं लशुनं नागकेशरम् ।
द्विगुणं मेषमांसञ्च पिण्डो दत्तो जयेच्छ्रमम् ॥
जम्बीरं फलिनीपत्रं त्वचा किञ्जल्कमेव च ।
जातशोणितवाहानां पिण्डोऽयं रक्तनाशनः ॥
तमालं पुष्करं लोध्रमपामार्गं सतिन्दुकम् ।
पयसा पिण्डमेतद्धि वातकोपप्रणाशनम् ॥
आरनालं प्रविष्टा च पथ्यां नेपालिकाफलम् ।
पिण्डे दत्ते हये दध्ना निहन्त्याशु विजृम्भितम् ॥
मुहुःपूगं वचामिश्रं तथा सर्व्वरसान्वितम् ।
पिण्डे दत्ते निहन्त्याशु कृमिसंघं व्रणोद्भवम् ॥
स्नुहीक्षीरं सकर्पूरं कूपोदकविभावितम् ।
पिण्डोऽयं हन्ति मध्यस्थान् रोगान् सर्व्वान् कृमिव्रणान् ॥
सिता दुग्धं सकर्पूरमेलया पत्रसंयुतम् ।
कृमिदाहार्त्तियुक्तानां पिण्डोऽयं वाजिनां स्मृतः ॥
शीघ्रासन्नप्रतप्तानामारनालं परिस्रुतम् ।
सकृद्दिच्छन्ति पिण्डेन वाजिनां सुखकारकम् ॥
वृष्टिवातार्द्दितानाञ्च वाजिनां पुष्टिकृन्मतः ।
पिण्डः कृतः सतैलेन लशुनेन यवेन च ॥
महाघृतं सकर्पूरं शर्करा दुग्धमेव च ।
कफनाशकरः प्रोक्तः पिण्डोऽयं सुखदः स्मृतः ॥
रोचना च वरी धात्री तथा स्याद्बीजपूरकः ।
गुल्मं प्रशमयन्त्याशु वाजिनां हृदयोद्भवम् ॥
सहदेवी वचा कुष्ठं वरुणा चेन्द्रवारुणी ।
अतिश्वासं हरन्त्येते वाजिनां मधुना सह ॥
उदुम्बरफलं मांसं शौकरं माहिषं दधि ।
हयस्य चातिरुद्धस्य करोति परमं सुखम् ॥
विभीतकं प्रियङ्गुश्च सर्ज्जिका लवणं तथा ।
कासशोषोपशमनः पिण्डः सर्पिः सुखप्रदः ॥
तक्रं कर्पूरचूर्णञ्च शिवं सौवर्च्चलान्वितम् ।
पिण्डोऽयं वस्तिसंरोधे वाजिनः संप्रकीर्त्तितः ॥
सौवर्च्चलं हरिद्रा च पिप्पली चेन्द्रवारुणी ।
मूत्रकृच्छ्रे परीक्षन्ति पिण्डोऽयं तुरगस्य हि ॥
पिण्डीरसक्तवः क्षौद्रं भल्लातकफलं वृषम् ।
रक्तमूत्रे तु पिण्डोऽयं वाजिनां रक्तनाशनः ॥
अभया यष्टिका श्यामा देवदारु सगन्धकम् ।
पुरीषे रक्तसंमिश्रे सदा शंसति वाजिनः ॥
पटोलं धातकी मुस्ता यष्टिका गिरिकर्णिका ।
रक्ताधिके कृतः पिण्डः करोति रुधिरक्षयम् ॥
हरिद्राद्वयसंयुक्तं गन्धकं कटुतैलकम् ।
पिण्डकं स्रुतियुक्तानां सदाश्वानां प्रशस्यते ॥
अतसीपत्रकं निम्बं न्यग्रोधकलिकान्वितम् ।
अतीसारे सुशंसन्ति पिण्डोऽयं वाजिनः शुभः ॥
व्रणैः कृमिभिरत्यर्थं सदा वाजी प्रपीड्यते ।
तदा पिण्डः प्रदातव्यः स्थूलैरण्डदलैरलम् ॥
कर्पूरशर्करालोध्रं माक्षिकं त्रिफलान्वितम् ।
तुरङ्गिण्याः प्रशंसन्ति पिण्डोऽयं वाजिनः शुभः ॥
पत्रकं सिन्धुवारञ्च भ्रामरं चक्रकिंशुकम् ।
मांसवृद्धौ प्रशंसन्ति पिण्डोऽयं वाजिनः शुभः ॥
सैन्धवं चूलिकाक्षारं विडङ्गानि मधूनि च ।
शस्त्रपीडाभिभूतस्य पिण्डोऽश्वस्य प्रशस्यते ॥”
इति श्रीनकुलकृतेऽश्वचिकित्सिते पिण्डाध्यायस्त्रयोदशः ॥

अथ घृतविधानम् ।

“शिलाजतु विशाला च पद्मकं नागकेशरम् ।
लाक्षा पद्मकाष्ठञ्च निम्बद्वयसमन्वितम् ॥
घृतं माक्षिकसंयुक्तं सप्तविंशतिकं विदुः ।
अष्टांशं तु समादाय सुरामांसघृतस्य च ॥
पलमात्राणि सर्व्वाणि पूर्व्वद्रव्याणि निःक्षिपेत् ।
तेषां दानेन तत्सर्पिर्जायते सर्व्ववाजिनाम् ॥
बलपुष्टिकरं नित्यं सर्व्ववातविनाशनम् ।
सर्व्वरोगप्रशमनं कायाग्नेश्च प्रदीपनम् ॥
ओजस्करं यथानाशं शोथशोषप्रणाशनम् ।
धातकी केशरं कुष्ठं कुसुम्भं कुङ्कुमं नलम् ॥
दाडिमं सितलोध्रञ्च पलमात्राणि निःक्षिपेत् ।
घृतञ्च पाचयेत् पानादभिघातान्वितो हयः ॥
जायते सर्व्वसुखाङ्गो महाप्राणेन संशयः ।
आरनालं वचा कुष्ठं पिङ्गला सिक्थकं घृतम् ॥
एतैः पक्वं घृतं सम्यक् पित्तव्याधिविनाशनम् ।
हरिद्राद्वयसंयुक्तं गन्धकं तु मनःशिला ॥
क्वाथेननवनीतेन त्रिगुणेन घृतेन च ।
अभ्यङ्गेनाथ पानेन सप्तरात्रेण वाजिनः ॥
कण्डूतिर्निःक्षयं याति तथोदरभवा रुजः ।
माक्षिकं निम्बपत्राणि नवं गुग्गुलु एव च ॥
भृङ्गराजो विशाला च पाठा चैव पुनर्नवा ।
विल्वमारुष्कं लोध्रं सैन्धवं तगरं तथा ॥”
एतैः पक्वा घृतं वाजी संप्राप्यार्त्तैर्विमुच्यते ॥
इति श्रीनकुलकृतेऽश्वचिकित्सिते घृताध्यायश्चतुर्द्दशः ॥

अथ क्वाथः ।

“पूर्व्वाणि समभागानि क्वाथयेत् कूपवारिणा ।
ततोऽष्टांशं समादाय तोयस्य क्वथितस्य च ॥
एतत् सिद्धार्थकं नाम उत्कृष्टं सर्व्ववाजिनाम् ।
कायाग्निं वर्द्धयत्याशु नीरोगत्वं प्रयच्छति ॥
मुस्ता मधुकपत्राणि केशरं लवणं रुहा ।
शताङ्गा शाल्मली धात्री त्रपुषं फलिनी तथा ॥
क्वाथयित्वा जलं कौपं दत्तैस्तुल्यैर्विचक्षणः ।
त्रिभागमेवमादाय ततो दद्याद्धयस्य च ॥
प्रकरोति सदा नाशं पित्तस्यागन्तुकस्य च ।
एकविंशद्दिनं यावत्कालिहोत्रमतं यथा ॥
शुण्ठी हरीतकी पाठा ब्राह्मी मुस्ता शिफालिका ।
हरिद्राद्वयसंयुक्ता हरितालं मनःशिला ॥
सिद्धस्त्रिभागशेषोऽयं क्वाथो हन्यात्त्रिरात्रिकम् ।
सन्निपातमशेषेण पलिकः पलमात्रकः ॥
मधुकं केशरं पत्रं भल्लातकविभीतकम् ।
शणपुष्पं रुहा सारं समभागेन मिश्रितम् ॥
कासार्त्तस्य समुद्दिष्टः क्वाथोऽयं त्रिफलात्मकः ।
उत्साहवर्द्धकः सद्यस्तथा कायाग्निदीपकः ॥
कुमारी शाल्मली पाठा मञ्जिष्ठा चेन्द्रवारुणी ।
काकोली संमभागेन क्वाथयेत् समभागतः ॥
पलद्वयप्रमाणेन ततः पीतेन वाजिना ।
मोहयेच्छूलजं दोषं मूत्रदोषं च तत्क्षणात् ॥
यवानी माक्षिकं कासं सौवर्च्चलयुताभया ।
क्वाथयेदष्टमांशेन तत्पानाज्जायते हयः ॥
प्रदीप्ताग्निस्तु तेजस्वी सर्व्वरोगाद्विमुच्यते ।
स शीघ्रमार्गगामी च स्निग्धो रोगविवर्ज्जितः ॥
सेफालिका रुहानीवे वेणुका सिन्धुवारिका ।
एतैः क्वाथः कृतः सम्यक् कृमिनाशकरः परः ॥
मातुलुङ्गस्य बीजानि चन्दनं सितसर्षपाः ।
उशीरं पुष्करं ब्राह्मी लक्ष्मणा च पुनर्नवा ॥
क्वाथोऽयं शुण्ठिचूर्णेन धावितक्लेशनाशनः ।
प्रकरोति तुरङ्गाणां सर्व्वदैव सुखं तथा ॥”
इति श्रीनकुलकृतेऽश्वचिकित्सिते क्वाथाध्यायः पञ्चदशः ॥

अथ विषम् ।

“वारुणी माक्षिकी गौरी श्रीतालीबीजपूरकम् ।
कृमिक्लेदविनाशाय क्वाथो नित्यं रुजाहरः ॥
अश्वगन्धा घृतं क्षौद्रं विषदग्धस्य वाजिनः ।
विषनाशं करोत्येव सर्व्वगात्रेषु तत्क्षणात् ॥
सामान्येन प्रदिष्टोऽयमगदो विषनाशनः ।

पृथक् पृथग्विभागेन कथयं साम्प्रतं परम् ॥
त्रिविधं कीर्त्तितञ्चैव कृत्रिमञ्च ततः परम् ।
त्रिविधं कीर्त्तितं प्राज्ञैर्विषज्ञानविचक्षणैः ॥
स्थावरं कन्दजं प्रोक्तं जङ्गमं सर्पसम्भवम् ।
कृत्रिमं योगजं प्रोक्तं त्रिविधं विषमुच्यते ॥
यन्त्र सिद्धं समश्नन्ति कदाचित्तुरगोत्तमाः ।
तन्त्र कार्य्यं विधानज्ञैरगदस्य प्रयोजनम् ॥
केशरं पद्मनालञ्च सौपर्णी मदयन्तिकाम् ।
नक्रमिश्रं हये दत्तं सर्व्वथा विषनाशनम् ॥
सौपर्णी सिन्धुवारञ्च नागपत्री जटा तथा ।
त्रिफलां प्राप्य सम्मिश्र दुग्धे स्वादागदो हयः ॥
अश्वगन्धा वचा एला घृतमिश्रा प्रयोजिता ।
विषनाशं नयत्याशु जङ्गमं हयगात्रतः ॥
भल्लं चन्दनरक्ताख्यं माषचर्णपरिप्लुतम् ।
जङ्गमस्य विषस्याशु प्रकरोति च संक्षयम् ॥
नक्रं फेनकसंयुक्तं विषं सद्यो विनाशकम् ।
हयस्य जङ्गमं नाशं विषमयति तत्क्षणात् ॥
सौपर्णी विषकङ्कोली पिष्ट्वा मद्येन भाविता ।
जङ्गमं नाशनं तस्य विषं नयति तत्क्षणात् ॥
एला कङ्कोलिकामूलं सौपर्णीघृतमिश्रितम् ।
विषनाशं करोत्याशु नस्यदानेन वाजिनाम् ॥
कौसुम्भं कर्पूरं लाक्षा माषिका नाकुली तथा ।
कृत्रिमस्य विषस्याशु प्रकरोति च संक्षयम् ॥
चम्पकं मालतीमूलमङ्कोलकरसं तथा ।
अश्वानां नाशयत्याशु विषं जङ्गमसम्भवम् ॥’
इति श्रीनकुलकृतेऽश्वचिकित्सिते विषयोगाध्यायः षोडशः ॥

अथ अश्वशालाविधिः ।
नृपवेश्मवामभागे शुभदिने तु कारयेद्धयागारम् ।
पुष्येऽथवा प्रयत्नाद्वैश्रवणं प्रतिष्ठाप्य ॥
सुशुभे भूमिविभागे पूर्व्वोत्तरजलप्लवविधानात् ।
तस्मिन् शालां दीर्घां दशहस्तसमुच्छ्रितां दृढां कुर्य्यात् ॥
खादनकोष्ठकमस्मिन् हस्तद्वितयं समुच्छ्रितं कुर्य्यात् ।
संस्थाप्य हयभवनं सम्प्राप्ते वाजिशालायाम् ॥
अतः ऊर्द्ध्वन्तु वक्ष्यामि प्रबध्नीयाद्वाजिनो यथा योग्यम् ।
कृष्णे(?)कलशैरनुकूले स्थानपालेषु ।
कृतमङ्गलस्वस्त्ययना बध्नीयात्ते चोत्तराभिमुखाः ।
नात्यायता न शिथिला स्थाने वा दक्षिणाभिमुखम् ॥
वैद्यानां तुरगाणां समीपं यत्र कारयेत् पूर्व्वम् ।
कार्य्याधिकृतं यत्नेन मालिकाख्यां निवारयेत् ॥
गन्धैर्माल्यैर्धूपैः स्थानानि विभूषयेदलङ्कारैः ।
सविशेषं लघुपीतौ कुर्व्वीत पूरयेद्विद्वान् ॥
अश्विच्छिद्रं नासिकयोर्यथा पश्यन्ति वाजिनः ।
स्थानं चैव पृथक् प्राप्य प्रबद्धं रात्रिषु न वै ॥
कीटी कुष्ठी ज्वरी यक्ष्मी परस्परं दूषयति वारे ।
तिथिवारे कर्षाश्च खुराश्च प्रघ्नन्ति दोषान् ॥
अथ स्थाने प्रतिपत्तिरिदया वरिष्ठया मङ्गल्याश्च ।
सुपर्व्विमान् दीपनैर्विभूषयेदलङ्कारैः ॥”
इति श्रीनकुलकृतेऽश्वचिकित्सितेऽश्वशालाविधिर्नामाष्टमोऽध्यायः ॥ नवमाध्यायस्तु नाधिगम्यते ॥

अथ अश्वनामलक्षणानि ।
“क्रमशो यानि चिह्नानि यक्ष्माण्येव वाजिनाम् ।
तानि सम्यक् प्रवक्ष्यामि यक्ष्मनामानि यानि तु ॥
लोहिताक्षो विरूपाक्षो हरिर्वलितस्तथैव च ।
पक्षाघ्नश्चैव विख्यातः शङ्खाघ्नी च परः स्मृतः ॥
सुसन्धितश्च कीशरो वेपालश्च गर्द्दभः ।
ऊर्द्ध्व च शालकश्चैव महतिधी वरत्यहः ॥
हृदयातिश्च मन्मथ तथा स्कन्धयत्नोऽपरः ।
एते प्रोक्ता यक्ष्मा सर्व्वे दारुणा मुनिसत्तमैः ॥
एभिर्हता स्फुटं वाहा नैव जीवन्ति सर्व्वथा ।
चिह्नं तेषां प्रवक्ष्यामि यथा शास्त्रे व्यवस्थितम् ॥
कम्पते पूर्व्वकायस्तु निश्चलो यस्य पश्चिमः ।
पश्चाज्जङ्घौ सकम्पश्च रिहन् हरिपीडितः ॥
भवन्ति निष्ठ्यो रक्ता अकस्माद्यस्य चक्षुषः ।
हरितास्यग्रहीतोऽन्यो वामदेवो च जायते ॥
प्रविशन् तुरगाश्च शुष्यद्गुणक्रियः ।
मीलनाशीलना चास्या स्वभावान्नियमेव च ॥
विरूपाक्षगृहीते तु कम्पः स्वेदश्च जायते ।
उत्थितः सहसा यस्तु मूर्च्छां यनति भूतले ॥
स्तब्धाङ्गो मुच्यते कष्टेनथा वाले खुरैरपि ।
वलिग्रहगृहीतोऽसौ स्तम्भकर्णशिरोधरः ॥
अकस्माद्यस्य लोमानि शीर्य्यन्ते यत्र लङ्घति ।
गृनर्भिन्नपादस्य तस्य काष्ठिग्रहः पदत् ॥
सहसा कुपितो वाजी स्वानि गात्राणि खादति ।
प्रोचत सततञ्चैव शङ्खाघ्निग्रहपीडितः ॥
स्तिमिताङ्गो वेपमानश्च जानुभ्यां यस्तु तिष्ठति ।
कीशरग्रहसंदिष्टः स विज्ञातः कष्टजीवितम् ॥
हेषते सततं यस्तु पश्चादालानमीक्षते ।
सुसन्धितग्रहाविष्टः स विज्ञेयो मनीषिभिः ॥
स्तम्भेन गुरुणा चैव वेपमानेन पश्चिमः ।
गात्रेण विद्याद्वाहं तु वेपालग्रहसेवितम् ॥
ग्रीवां चैव तथा जिह्वां परिवर्त्तं मुहुर्मुहुः ।
जृम्भते पूर्व्वकायेन शीतोच्छ्वासी विशेषतः ॥
गोष्ठिकोलाहलः एवं कष्टया याचनापि वा ।
स वै दीर्घस्वरग्रस्त इष्टैव परिवर्ज्जयेत् ॥
श्याम जिह्वामुखं यस्य नष्टदृष्टिस्तथैव वा ।
ऊर्द्ध्वग्रहकृतं दोषं तस्य दीनस्य निर्द्दिशेत् ॥
ताम्रजिह्वं च नेत्रे च वृषणौ मेढ्रमेव च ।
श्यावं रूपञ्च यस्य स्याद् गात्रगौरवमेव च ॥
तस्य स्वेदपरीतस्य बुद्धिमान् वरलग्रहे ।
कृतं दोषं महाघोरं स्तब्धाङ्गस्य विनिर्द्दिशेत् ॥
हेषते सततं यस्तु हृष्टरोमा तुरङ्गमः ।
स्तब्धास्यो जृम्भतेऽथ तस्यापि सलिलग्रहः ॥
सुविस्फारितसर्व्वाङ्गः सलिले निश्चलस्थितः ।
हेषते विस्वरं वाजी मकरग्रहपीडितः ॥
संहृत्यावस्थितस्तोये जानुभ्यां योऽवगच्छति ।
मुखपाकश्च यस्यान्ते स विद्यादुदकग्रहम् ॥
उद्वर्त्तिताक्षः स्निग्धश्च सग्रहीतहनुश्च यः ।
कम्पमानश्च यो वाजी स रविग्रहपीडितः ॥
स्तब्धग्रीवो न जानाति कण्ठाधानं मुहुर्मुहुः ।
कम्पग्रहगृहीतोऽश्वो वामपार्श्वेन निश्चलः ॥
भूतावितुद्री रजाख्यं तथा स्वर्णाति यो मुहुः ।
ग्रहस्थितगृहीतोऽसौ नैव जीवति तादृशः ॥
कम्पते पूर्व्वकायेन रक्तपानाग्रमेव च ।
शिरो प्रसार्य्य गात्राणि शीर्णाङ्गः सोमपीडितः ॥
रक्ताक्षः शूलकण्ठश्च कम्पमानश्च चाम्बुकः ।
पिशाचाङ्गज्वरोऽन्यः यतः स्कन्धग्रहेण सः ॥
उदकं सततमीयं चा प्रायो यक्षाणि दारुणः ।
तुरङ्गं मन्त्रहीनन्तु न कुर्य्यां वारणग्रहः ॥
यक्षभूमिचिताचैत्यशून्यदेवकुलालये ।
लोहिताक्षाद्यो दोषाद् यक्ष्मा यस्त्रन्ति वाजिनः ॥
एवंविधैश्चिह्नैस्तु ग्रहदोषं विनिर्द्दिशेत् ।
वातपित्तकफानान्तु लिङ्गैर्व्याधिर्नाज्ञायते ॥
एकाकारेण रोगस्य म्रियते वा हयो यदा ।
सुरद्वारा तदा ज्ञेया उपसर्गाः सुदारुणाः ॥
ग्रहदोषेषु सर्व्वेषु उपसर्गेषु चैव च ।
यथोक्तञ्च महाशान्तिं शान्त्यर्थञ्च प्रयोजयेत् ॥
अपरान्तविधानाय चापि सम्भाव्य मादकम् ।
जुहुयाद्धव्यसंयुक्तं शुचिः स्नात्वा सुपूजितः ।
शान्तिकं कारयन् कर्म्म बलिञ्चापि प्रयोजयेत् ।
ग्रहदोषेषु सर्व्वेषु शान्तिकर्म्मापि कारयेत् ॥
दर्भाहृतग्रन्थिजलग्रहस्थान् यतीनपि ।
तोषयेद्भोजनैर्नानैर्वस्त्रगोकाञ्चनादिभिः ॥
रात्रौ शालासमीपे तु बलिं दद्यात् चतुर्दिशम् ।
मत्स्यमांसैश्च पक्वान्नैः कृशरैः पायसादिभिः ॥
त्रिरात्रं पञ्चरात्रं वा सप्तरात्रमथापि वा ।
नीराजनविधिं कृत्वा नयेदश्वान् पृथक् पृथक् ॥”
इति श्रीमहासामन्तजयदत्तकृतेऽश्वशास्त्रे ग्रहगृहीतचिकित्सिते सप्तमहाग्रहसमोऽध्यायः ॥)

**घोटिका**, स्त्री, (घोटते परिवर्त्तते कटाग्निगुणैरिति । घुट + ण्वुल् । ततष्टापि अत इत्वम् ।) हयभेदः । तत्पर्य्यायः । ककटी २ तुरङ्गी ३ चतुरङ्गा ४ । अस्या गुणाः । कटुत्वम् । उष्णत्वम् । मधुरत्वम् । वातश्लेष्मकण्डूकुष्ठाश्मरी-नाशित्वञ्च । इति राजनिर्घण्टः ॥

**घोणा**, स्त्री, (घोणते गृह्णाति वस्तुगन्धम् । घुण + अच् टाप् च । घोणतेऽनया इति करणे घञ् वा ।) नासा । (यथा महाभारते । १ । १५६ । ३३ ।
‘दीर्घघोणं महोरस्कं विकटोद्वृत्तपिण्डिकम् ॥’
“घोणायां द्वे ॥” इति सुश्रुते शारीरस्थाने पञ्चमाध्याये ॥) अश्वनासिका । तत्पर्य्यायः । प्रोथः २ । इत्यमरः । २ । ८ । ४८ ॥ (यथा अश्ववैद्यके । २ । ७ ।
नासाच्छिद्रान्तरमध्ये तु घोणाख्यं समुदाहृतम् ।
घोणायाश्चान्तरौ गण्डौ चौरिके च ततः परम् ॥)

**घोणी**, [न्] पुं, (प्रशस्ता घोणा अस्त्यस्य इति । ब्रीह्यादिभ्यश्च । ५ । २ । ११६ । इति इनिः ।) शूकरः । इत्यमरः । २ । ५ । २ ॥

**घोण्टा**, स्त्री, (घुण्यते गृह्यते भक्षयायेति । घुण + बाहुलकात् टः ।) वृक्षविशेषः । गुवाकः

इति भाषा ॥ तत्पर्य्यायः । वदरः २ गोपघोण्टा ३ शृगालकोलिः ४ कपिकोलिः ५ । इति क्वचित् रत्नमाला ॥ एत्तिकोलिः ६ वदरीच्छदा ७ कर्कन्धुः । इति रत्नकोषः ॥ पूगवृक्षः । इति मेदिनी । टे । १४ ॥ ( यथा, उत्तरस्थाने चिंशेऽध्याये वाभटेनोक्तम् ।

"घोण्टाफलत्वग्लवणं सलाक्षं
बूकस्य पत्रं वनितापयश्च ।
स्नुगर्कदुग्धान्वित एष कल्को
वर्त्तीकृतो हन्त्यचिरेण नाडीम् ॥")

घोणसः, पुं, ( गोनसः + पृषोदरादित्वात् साधुः । ) गोनसः । तिलित्सर्पः । इति हेमचन्द्रः । ४ । ३६२ ॥ ( क्वचित् महान्त्यमध्योऽपि दृश्यते ॥ )

घोरं, क्ली, ( हन्यते वध्यतेऽनेनेति । हन् + "हन्ते रच् घुर् च ।" उणां । ५ । ६६ । इति अच् धातोर्घुरादेशश्च ।) विषम् । इति राजनिर्घण्टः ॥

घोरः, पुं, ( घोरयति भयानकरसनिमित्तीभवतीति । घुर + अच् । यद्वा, हन्ति विनाशयति रुद्ररूपेण इति । हन वधे + "हन्तेरच् घुर् च ।" उणां । ५ । ६४ । इति अच् धातोर्घुरादेशश्च । ) शिवः । भयानके त्रि । इति हेमचन्द्रः ॥ ( यथा, मनुः । १२ । ५४ । [ क्षयात् ।

"बहून् वर्षगणान् घोरान्नरकान् प्राप्य तत्संसारान् प्रतिपद्यन्ते महापातकिनस्त्विमान् ॥")

घोरदर्शनः, पुं स्त्री, (घोरं भयानकं दर्शनं यस्य ।) उलूकः । इति राजनिर्घण्टः ॥ भयानकरूपे त्रि ॥ ( यथा, रामायणे । १ । १ । ५५ ।

"मार्गमाणो वने सीतां राक्षसं सन्ददर्श ह ।
कबन्धं नाम रूपेण विकृतं घोरदर्शनम् ॥" )

घोरपुष्पं, क्ली, कांस्यम् । इति राजनिर्घण्टः ॥ घोरपुष्पमपि पाठः ॥

घोररासनः, पुं, ( घोरं भयानकं रासनं शब्दो यस्य । ) शृगालः । इति शब्दरत्नावली ॥

घोररासी, [न्] पुं, (घोरं यथा तथा रसति शब्दं करोतीति । रस शब्दे + णिनिः । ) शृगालः । इति हेमचन्द्रः । ४ । ३५६ ॥

घोरा, स्त्री, ( घोरति भयानकरसनिमित्तीभवतीति । घुर + अच् + टाप् च । ) रात्रिः । इति त्रिकाण्डशेषः ॥ देवदाली लता । इति राजनिर्घण्टः ॥ (गङ्गा । यथा, काशीखण्डे । २६ । ५५ ।

"घण्टारवप्रिया घोराऽघौघविध्वंसकारिणी ॥"

रविसंक्रान्तिविशेषः । इति ज्योतिषम् ॥ यथा, तिथितत्त्वे रविसंक्रान्तिप्रकरणे ।

"मन्दा मन्दाकिनी ध्वांक्षी घोरा चैव महोदरी ।
राक्षसीमिश्रिता प्रोक्ता संक्रान्तिः सप्तधा नृप ! ॥
मन्दा ध्रुवेषु विज्ञेया मृदौ मन्दाकिनी तथा ।
क्षिप्रे ध्वांक्षी विजानीयादुग्रे घोरा प्रकीर्त्तिता ॥")

भयानका ॥ ( यथा, कालीध्याने ।

"करालवदनां घोरां मुक्तकेशीं चतुर्भुजाम् ॥")

घोलं, क्ली, (घुल्यते आलोड्यते यत् । घुट + अच् । पृषोदरादित्वात् साधुः ।) ससरं निर्जलं मथितं दधि । ( यथा, सुश्रुते सूत्रस्थाने ४५ अध्याये ।

"यत्तु सस्नेहमजलं मथितं घोलमुच्यते ॥" )

तत्पर्य्यायः । दण्डाहतम् २ कालसेयम् ३ अरिष्टम् ४ गोरसः ५ घलम् ६ मलिनम् ७ पैवलम् ८ भग्नसन्धिकम् ९ । तस्य भेदाः ।

"तक्रं ह्युदश्विन्मथितं पादाम्ब्वर्द्धाम्बुनिर्जलम् ।
ससारं चड्ढवेत्तक्रं चाङ्गरं तत् प्रकीर्त्तितम् ॥"

इति शब्दचन्द्रिका ॥

अस्य विशेषाः तक्रशब्दे द्रष्टव्याः ॥

घोली, स्त्री, पत्रशाकविशेषः । तत्पर्य्यायः । घोलिका २ घोलिः ३ कलम्बुः ४ क्षुद्रकाललुका ५ । क्षेत्रजाताया अस्या गुणाः । लवणत्वम् । रुचिकारित्वम् । अम्लत्वम् । वातकफनाशित्वञ्च ॥ आरामघोलिकागुणाः । अम्लत्वम् । रूक्षत्वम् । पथ्यत्वम् । वायुनाशित्वम् । पित्तश्लेष्मकारित्वञ्च । रुच्यायाः श्रीगेन्द्ररनाशित्वम् । इति राजनिर्घण्टः ॥

घोषं, क्ली, (घोषति शब्दायते इति । घुष विशब्दने + अच् ।) कांस्यम् । इति राजनिर्घण्टः ॥

घोषः, पुं, ( घोषन्ति शब्दायन्ते गावो यस्मिन् । घुषिर् विशब्दने + "हलश्च ।" ३ । ३ । १२१ । इति घञ् ।) आभीरपल्ली । (यथा, रघुः । १ । ४५ ।

"हैयङ्गवीनमादाय घोषवृद्धानुपस्थितान् ।
नामधेयानि पृच्छन्तौ वन्यानां मार्गशाखिनाम् ॥"

घोषति शब्दायते इति । घुष + कर्त्तरि अच् । ) गोपालः । ( घुष + भावे घञ् । ) ध्वनिः । ( यथा, मनुः । ७ । २२५ ।

"तत्र भुक्त्वा पुनः किञ्चित् तूर्य्यघोषैः प्रहर्षितः ।
संविशेत्तु यथाकालमुत्तिष्ठेच्च गतक्लमः ॥")

घोषकलता । कांस्यम् । मेघशब्दः । इति मेदिनी । षे । ११ ॥ मशकः । इति त्रिकाण्डशेषः ॥ ( वर्णोच्चारणवाह्यप्रयत्नविशेषः । यदुक्तं शिक्षायाम् । २० ।

"संवृतं मात्रिकं ज्ञेयं विवृतं तु द्विमात्रिकम् ।
घोषा वा संवृताः सर्व्वे अघोषा विवृताः स्मृताः ॥")

कायस्थादीनां पद्धतिविशेषः । (यथा, कुलदीपिकायाम् ।

"वसुवंशे च मुख्यौ द्वौ नाम्ना लक्षणपूषणौ ।
घोषेषु च समाख्यातश्चतुर्भुजमहाकृती ॥")

घोषकः, पुं, (घोष एव । घोष + संज्ञायां कन् ।) घोषालता । तत्पर्य्यायः । धामार्गवः २ । इत्यमरः । २ । ४ । ११७ ॥ घोषकाकृतिः ३ आदानी ४ देवदानी ५ तुरङ्गकः ६ घोषः ७ घोषालता ८ । इति शब्दरत्नावली ॥ कोषकालः ९ । इति जटाधरः ॥ महाजाली हस्तिघोषातकी ॥ * ॥ पीतघोषायाः पर्य्यायः । धामार्गवः १ पीतघोषा २ राजघोषातकी ३ कर्कोटकी ४ महाजाली ५ चूँड़ः ६ कोषफला ७ कोषातकी ८ । इति च जटाधरः ॥ * ॥ श्वेतघोषायाः पर्य्यायः । घोषातकी १ मृदङ्गी २ जालिनी ३ क्षतवेधकः ४ श्वेतपुष्पा ५ आकृतिच्छत्रा ६ ज्योत्स्ना ७ इति रत्नमाला ॥

घोषकाकृतिः पुं, ( घोषकस्य घोषलतायाः आकृतिरिवाकृतिर्यस्य । ) घोषकः । इति रत्नमाला ॥

घोषणा, स्त्री, ( घुषिर् विशब्दने + "ण्यासश्रन्थो युच् ।" ३ । ३ । १०७ । इति युच् । ) उच्चैःशब्दः । लोकविज्ञापनायोच्चैःशब्दितम् । (यथा, कथासरित्सागरे । २४ । ५० ।

"गच्छ भ्रमय सत्त्वरेऽत्र पुरे पटहघोषणाम् ॥")

तत्पर्य्यायः । उच्चैर्घुष्टम् २ । इत्यमरः । १ । ६ । १२ ॥ निघुष्टम् ३ घुष्टघोषणम् ४ । इति शब्दरत्नावली ॥

घोषयित्नुः, पुं, ( घोषयतीति । घुष + णिच् + बाहुलकात् इत्नुच् । ) ब्राह्मणः । कोकिलः । वन्दी । इति शब्दरत्नावली ॥

घोषवती, स्त्री, ( घोषो विद्यतेऽस्याः । घोष + मतुप् मस्य वः । स्त्रियां ङीप् । ) वीणा । इति हेमचन्द्रः ॥ ( यथा, कथासरित्सागरे । ११ । ३ ।

"स बभूव शनै राजा सुखैकान्तततत्परः ।
सदा सिषेवे मृगयां वीणां घोषवतीञ्च ताम् ।
दत्तां वासुकिना पूर्व्वं गतं दिनमवादयत् ॥"

तथाच तत्रैव । १२ । ३२ ।

"अङ्के घोषवतीं तस्य कण्ठे गीतश्रुतिच्छटा ॥")

शब्दविशिष्टे त्रि ॥ ( यथा, महाभारते । १ । २५ । ११ ।

"त्वं वज्रमतुलं घोरं घोषवांस्त्वं बलाहकः ॥")

घोषा, स्त्री, ( घोष्यन्ते मधुकरी यया । घुष + णिच् + घञ् । ) मधुरिकौषधिः । शौरी इति भाषा । इति मेदिनी ॥ ( यथा, गारुडे १९ अध्याये ।

"घोषाफलं सैन्धवश्च तक्रमाशैः पतेत्तथा ॥" )

कर्कटशृङ्गी । इति राजनिर्घण्टः ॥ ( गङ्गा । यथा, काशीखण्डे । २९ । ५५ ।

"घ्राणतुष्टिकरी घोषा घनानन्दा घनप्रिया ॥"

गायत्रीरूपा भगवती । यथा, देवीभागवते । १२ । ६ । ४४ ।

"घृणिमन्त्रमयी घोषा घनसम्पातदायिनी ॥" )

घोषातकी, स्त्री, श्वेतघोषा । इति रत्नमाला ॥ (पर्य्यायोऽस्या यथा, वैद्यकरत्नमालायाम् ।

"घोषातकी मृदङ्गी स्याज्जालिनी क्षतवेधनः ।
श्वेतपुष्पा कृतिच्छत्रा ज्योत्स्ना कोषातकी

क्वचित् ॥")

घ्रा, गन्धोपादाने । इति कविकल्पद्रुमः ॥ ( भ्वां-परं-सकं-अनिट् । ) जिघ्रति पुष्पं लोकः । इति दुर्गादासः ॥

घ्राणं, क्ली, ( जिघ्रत्यनेनेति । घ्रा + करणे ल्युट् । यद्वा, घ्रा + क्तः "नुदविदोन्दत्राघ्रेति ।" ८ । २ । ५६ । इति निष्ठातस्य नो वा ।) नासिका । इत्यमरः । २ । ६ । ८९ ॥ (यथा रघुः । १९ । ११ ।

"घ्राणकान्तमधुगन्धकर्षिणीः
पानभूमिरचनाः प्रियासखः ॥" )

न्यायमते घ्राणेन्द्रियग्राह्यगन्धत्वादि । ( घ्रा + भावे ल्युट् । ) आघ्राणम् । यथा, देवीभागवते । १ । १४ । २४ ।

"आलिलिङ्ग सुतं प्रायं मूर्द्ध्नि तस्य चकार ह ॥")

घ्राते त्रि । इति मेदिनी । णे । ११ ॥

चित्रा, स्त्री, (चित्रयति चित्रकर्म्म करोति सर्व्वगुणैः शोभते इति वा। चित्र + अच् + टाप्।) श्रीकृष्णसखीविशेषः। यथा, उज्ज्वलनीलमणौ।
"परमप्रेष्ठसख्यस्तु ललिता सविशाखिका।
सचित्रा चम्पकलता तुङ्गविद्येन्दुलेखिका।
रङ्गदेवी सुदेवी चेत्यष्टौ सर्व्वगणाग्रिमाः॥"
अस्याः कुञ्जः श्रीकुण्डस्य पूर्व्वस्यां आनन्दसुखदो नाम। वयः अष्टमासाधिकत्रयोदशवत्सरम्। वर्णो गौरः। अस्या वस्त्रं जातीपुष्पतुल्यम्। कर्म्म चित्रम्। इति गोस्वामिग्रन्थः॥ * ॥ मूषिकपर्णी। गोडुम्बा। सुभद्रा। दन्तिका। (पर्य्याया यथा, वैद्यकरत्नमालायाम्।
"चित्रा दन्ती निकुम्भः स्यादुपचित्रा तु कूलकः।
द्राक्षावणी विशल्या च तथोडुम्बरपर्ण्यपि॥")
माया। सर्पभेदः। नदीविशेषः। इति मेदिनी॥ अप्सरोविशेषः। इति हेमचन्द्रः॥ अश्विन्यादिसप्तविंशतिनक्षत्रान्तर्गतचतुर्द्दशनक्षत्रम्। तत्तु मुक्तावदुज्ज्वलं एकतारकामयम्। अस्य अधिष्ठात्री देवता विश्वकर्म्मा। यथा,—
"एकमौक्तिकवदुज्ज्वलप्रभे
त्वष्टरीन्दुवदने क्षमध्यगे।"
इति कालिदासः॥
तत्र जातस्य फलं यथा, कोष्ठीप्रदीपे।
"प्रतापसन्तापितशत्रुपक्षो
दक्षो नये चापि विचित्रवाचाः।
प्रकृतिकाले यदि यस्य चित्रा
बुद्धिर्विचित्रा खलु तस्य शास्त्रे॥"
त्रिशिराः। (यथा, चरके सूत्रस्थाने। १३ अः।
"तिलः पियालाभिषुकौ विभीतका-
श्चित्राभयैरण्डमधूकसर्षपाः।
कुसुम्भविल्वारुकमूलकातसी
निकोठकाक्षोडकरञ्जशिग्रुकाः॥
स्नेहाशयाः स्थावरसंज्ञितास्तथा
स्युर्जङ्गमा मत्स्यमृगाः सपक्षिणः॥")
गण्डदूर्व्वा। सुवर्चली। मञ्जिष्ठा। इति राजनिर्घण्टः॥ (यथा, सुश्रुते चिकित्सितस्थाने २ अध्याये।
"चित्रासमन्वितश्चैव रक्तादाहविनाशनम्॥")
छन्दोविशेषः। इति छन्दोमञ्जरी॥ अस्य विवरणं छन्दःशब्दे द्रष्टव्यम्॥ (गायत्रीस्वरूपा महाशक्तिः। यथा, देवीभागवते।१२।६।५२।
"चक्रवाकस्तनी चेष्टा चित्रा चारुविलासिनी॥")
चित्राक्षी, स्त्री, (चित्रे अक्षिणी नेत्रे यस्याः। समासे षच्। स्त्रियां ङीष्।) सारिकापक्षी। इति त्रिकाण्डशेषः॥
चित्राक्षुपः, पुं, (चित्रा मूषिकपर्णीव क्षुपः ह्रस्वशाखत्वात्।) द्रोणपुष्पी। इति राजनिर्घण्टः॥
चित्राङ्गं, क्ली, (चित्रं अङ्गं यस्मात्।) हिङ्गुलम्। हरितालम्। इति राजनिर्घण्टः॥
चित्राङ्गः, पुं, (चित्रमङ्गं यस्य।) चित्रकः। रक्तचित्रकः। सर्पः। इति राजनिर्घण्टः॥ (यथास्य गुणाः।

"चित्राङ्गो वातशमनो रूक्षश्च बलकृत्तथा।
श्लेष्मलः कफिनो वापि दुर्ज्जरो मेदवर्द्धकः॥"
इति हारीते प्रथमे स्थाने एकादशेऽध्याये॥
धृतराष्ट्रपुत्रागामन्यतमः। यथा, महाभारते।
१।११७।६।
"अयोबाहुर्महाबाहुश्चित्राङ्गश्चित्रकुण्डलः॥")
चित्राङ्गदः, पुं, चन्द्रवंशीयराजविशेषः। स तु शान्तनुराजपुत्रः। विचित्रवीर्य्यभ्राता। (अयन्तु शान्तनुराजस्य स्वर्गगमनानन्तरं राज्यं लब्ध्वा ऐश्वर्य्यवीर्य्यमदेन भूपान् सर्व्वान् तृणवन्मन्यत। अथ कदाचित् गन्धर्व्वराजश्चित्राङ्गदः सुदर्पेण अभ्ययात्। ततः कुरुक्षेत्रमध्ये प्रवृत्ते महति युद्धे समधिकमायाबलेनानेन गन्धर्व्वराजेन निहतोऽयं कौरवप्रवीरः। इत्येषा कथा महाभारते।१।१०१। अध्याये द्रष्टव्या॥) गन्धर्व्वविशेषः। इति महाभारतम्॥ (यथा, देवीभागवते।१।२०।२२।
"चित्राङ्गदस्तु गन्धर्व्वो दृष्ट्वा तं मार्गगं नृपम्।
उत्ततारान्तिकं भूमेर्विमानवरमास्थितः॥")
दशार्णदेशाधिपतिविशेषः। स तु ब्रह्मवादि... 
[illegible] चित्राङ्गदः ... चित्रताम्बर्गनक्षत्रविशेषः। स अधोनीकविदेशः। तस्याधोगमनकारणं यथा,—
"अधोगतस्य कैतुकं सखि ! ब्रूहि जानकि !।
वरालेति मतं प्राप्य विप्रः स्वामिति मान्यया॥
तपश्चकार पश्चाद्वै नान्यत् किञ्चिद्गृहीतवान्।
फलमूलादिकं किञ्चित् सायमत्ति दश मिलेत्॥
विहाय विप्रस्य गुरोरपि पूजाञ्च पार्व्वति !।
जगेन्द्रियं हि वरालामन्यविप्रश्च नैचयन्॥
शालेति प्राञ्जलाः सर्व्वे सततुश्चित्राङ्गदं सुधा।
वचो हि मधुरं किञ्चित् प्रियाङ्गास्य सुन्दरि !॥
रे चित्राङ्गद ! अशल्यं वत्स ! विप्रत्वमिच्छसि।
कदाप्युपानत् सत्वस्यो नैवेति न हि बुध्यसे॥
वत्स ! शीघ्रमधो गच्छ चिरं कुरु तपो मुदा॥"
चित्राङ्गदः शापं श्रुत्वा ब्राह्मणान् तुष्टाव ततो ब्राह्मणा लज्जिताः सन्तस्तमूचुः।
"हे चित्राङ्गद ! हे तात वत्स ! त्वं नीलवः किल।
दुश्चिन्तां कुरु मा तात मद्रं ते कथयाम भोः॥
जनलपोवलेनैव सर्व्वं प्राप्नोत्यसंशयम्।
नार्हत्वीर्यं विना तात ! ब्राह्मणो भवितुं किल॥
इतीश्वराज्ञा वेदेऽस्ति प्रतिजानीहि तत्त्वतः।
वरं प्राप्नोति देवत्वं ब्राह्मणत्वं कदापि न॥
यथामरत्वमीशेन विना क्वापि न शासने।
नोत्तवक्षमधो गच्छ सुखेन वरलां जप॥
कल्पैद्वंशयहस्राणि नागलोकेश्वरो भव।
ततस्त्रिलोकनाथस्त्वमिन्द्रतुल्यो भविष्यसि॥
राज्यं मुक्तान्ततो नैव पुनरावर्त्तनं तव।
सदा वयं तव शिवं चिन्तयामो न भीं कुरु॥
तात गच्छ सुखं सुष्टु नागलोकेऽपि विलसात्।
तत आनन्दमनसा गतश्चित्राङ्गदस्तलम्॥"
इत्याचारनिर्णयतन्त्रम्॥
(स्त्रियां टाप्। मणिपुरेश्वरस्य चित्रवाहनस्य कन्या। यथा, महाभारते।१।२१६।१५।

"नस्य चित्राङ्गदा नाम दुहिता चारुदर्शना॥")
चित्राङ्गदसूः, स्त्री, (चित्राङ्गदं सूते प्रसूते इति। सू ङ प्रसवे + क्विप्।) सत्यवती। सा व्यासमाता। इति त्रिकाण्डशेषः॥
चित्राङ्गी, स्त्री, (चित्रमङ्गं यस्याः। स्त्रियां ङीष्।) मञ्जिष्ठा। कर्णजलौका। इति राजनिर्घण्टः॥
चित्राटीरः, पुं, (चित्रां नक्षत्रविशेषं अटतीति। अट गतौ + बाहुलकात् ईरच्।) चन्द्रः। (चित्रं तिलकं अटति गच्छति प्राप्नोति वलिच्छागामविन्दुभिरित्यर्थः। अट + ईरच्।) घण्टाकर्णः। वलिच्छागामविन्दुभिरङ्कितभालः। इति मेदिनी। रे, २६३॥
चित्रापूपः, पुं, (चित्रो विचित्र आपूपः पिष्टकः।) पिष्टकभेदः। चितार पिटा इति भाषा॥ तत्पर्य्यायः। पूपाष्टकः २। इति त्रिकाण्डशेषः॥
चित्रायसं, क्ली, (चित्रमायसं लौहम्।) तीक्ष्णलौहम्। इति राजनिर्घण्टः॥
चित्रिकः, पुं, (चित्रा नक्षत्रविशेषः तया पौर्णमासीसम्बन्धः। चित्रा + ठन्।) चैत्रमासः। इति शब्दरत्नावली॥
चित्रिणी, स्त्री, (चित्रं विचित्रतास्त्यस्याः। चित्र + इनिः + ङीप्।) पद्मिन्यादिचतुर्व्विधस्त्रीमध्ये स्त्रीविशेषः। सा मीनगन्धा। तस्या लक्षणं यथा। रतिमञ्जर्य्याम्। ६।
"भवति रतिरसज्ञा नातिदीर्घा न खर्व्वा
तिलकुसुमसुनासा स्निग्धदेहोत्पलाक्षी।
कठिनघनकुचाढ्या सुन्दरी वा सुशीला
सकलगुणविचित्रा चित्रिणी चित्रवक्त्रा॥"
(इयं हि मृगजातीयपुरुषं प्राप्य सन्तुष्टा भवति। यदुक्तं तत्रैव। ८।
"शशके पद्मिनी तुष्टा चित्रिणी रमते मृगम्।
वृषभे शङ्खिनी तुष्टा हस्तिनी रमते हयम्॥"
अस्यां रतिकरणप्रकारमाह तत्रैव। २६।
"शीत्कारं चुम्बनं पीडा गले हस्ते च चुम्बनम्।
घर्म्मे चर्म्मे स्तने हस्तं चित्रिण्यारतिमादिशेत्॥")
चित्रेशः, पुं, (चित्रा नक्षत्रविशेषस्तस्या ईशः पतिः।) चन्द्रः। इति शब्दचन्द्रिका॥
चित्रोक्तिः, स्त्री, (चित्रा आश्चर्य्यकरी उक्तिर्व्वाणी।) आकाशवाणी। इति त्रिकाण्डशेषः॥ आश्चर्य्यकथनम्॥
चित्रौदनं, क्ली, (चित्रमोदनम्।) विचित्रान्नम्। इति ब्रह्मवैवर्त्तम्॥
चिद्रूपः, त्रि, हृदयालुः। इति भूरिप्रयोगः। (चित् ज्ञानमेव रूपं यस्य।) ज्ञानमयः। यथा। चिद्रूपे परमात्मनीति योगशास्त्रम्॥
चिन्ता, स्त्री, (चिन्तनमिति। चिति चिन्तायाम् + "चिन्तिपूजिकथिकुम्बिचर्च्चश्च।" ३।३।१०५। इति अङ्।) चिन्तना। चिन्तनम्। तत्पर्य्यायः। स्मृतिः २ आध्यानम् ३। इत्यमरः।१।७।२६। आध्या ४ ध्यानम् ५ चिन्तितिः ६। इति शब्दरत्नावली॥ चिन्तिया ७। इति रभसः॥ (यथाह कश्चित्।

"चिता चिन्ता द्वयोर्मध्ये चिन्ता नाम गरीयसी।
चिता दहति निर्जीवं चिन्ता हि जीवितन्तथा॥")
इष्टानसम्भोगयोः प्रकारभावना। इति रस
मञ्जरी॥ (सा च व्यभिचारिभावविशेषः। यथा
साहित्यदर्पणे। ३। १७०। [तत्॥")
'ध्यानं चिन्ता हितानाप्तेः शून्यताश्वासताप
चिन्तामणिः पुं (चिन्तायां सर्व्वकामप्रदो मणि
रिव। शाकपार्थिवादिवत् समासः। यद्वा,
चिन्तया ध्यानधारणादिना मण्यते आहूयते
इति। मण+इण्।) ब्रह्मा। इति शब्दरत्ना-
वली॥ (चिन्ता एव मणिरिव यस्य। चिन्ता-
शीलत्वादेवास्य तथात्वम्।) बुद्धविशेषः। इति
त्रिकाण्डशेषः॥ मणिविशेषः। यथा भट्टिः।
'सामर्थ्यसम्पादितवाञ्छितार्थ-
श्चिन्तामणिः स्यान्न कथं हनूमान्॥"
स्पर्शमणिः। तथा च।
'यथा चिन्तामणिं स्पृष्ट्वा लौहं काञ्चनतां भजेत॥"
इति मात्स्योत्तरख७५।
(अश्वविशेषः। यथा, नकुलकृताश्वचिकित
सिते। ४। १८।
'कण्ठे यस्य महावर्त्त एकोऽश्वस्य प्रजायते।
चिन्तामणिः स विज्ञेयश्चिन्तितार्थविवृद्धिदः॥")
चिन्तावेश्म [न्] क्ली (चिन्ताया मन्त्रणादेर्वेश्म
गृहम्।) मन्त्रणागृहम्। तत्पर्य्यायः। शार्व्व
टम् २। इति हारावली। १६८॥
चिन्तिडी स्त्री (तिन्तिडी। पृषोदरादित्वात्
तस्य चत्वम्।) तिन्तिडी। इति द्विरूपकोषः॥
इति कश्चित्॥
चिन्तित त्रि, (चिति+कर्म्मणि क्तः।) कृत
चिन्तनम्। यथा,—
'यच्चिन्तितं तदिह दूरतरं प्रयाति
यच्चेतसा न गणितं तदिहाभ्युपैति।"
इत्युद्भटः॥
कर्त्तरि क्ते चिन्तायुक्तः। भावे क्ते चिन्ता॥
चिन्तिति स्त्री (चिन्त भावे क्तिच् इट् च।)
चिन्ता। इति शब्दरत्नावली॥
चिन्त्या स्त्री चिन्ता। इति त्रिकाण्डशेषः॥
चिन्नः पु शस्यविशेषः। इति शब्दचन्द्रिका।
चिना इति भाषा॥ (चीनशब्दे विशेषोऽस्य
ज्ञातव्यः॥)
चिपिटः पु (चयतीति। चि+बाहुलकात्
पिटच् स च कित्।) भक्ष्यद्रव्यविशेषः। चिंडा।
इति भाषा॥ तत्पर्य्यायः। पृथुकः २। इति
हेमचन्द्रः। ३। ६५॥ चिपिटकः ३। इत्यमरः॥
चिपुटः ४। इति भरतः॥ धान्यचमसः ५।
इति त्रिकाण्डशेषः॥ चिपीटकः ६। इति
शब्दरत्नावली॥ अस्य गुणाः। गुरुत्वम्।
स्निग्धत्वम्। इन्द्रगत्वम्। कफवृद्धकत्वञ्च। चीर
युक्तस्य तस्य गुणाः। बलकारित्वम्। वातनाशि-
त्वम्। मलभेदकत्वञ्च। इति राजवल्लभः॥
बृंहणत्वम्। तृष्णाप्रदत्वञ्च। तस्य कल्पना यथा,
भावप्रकाशे पूर्व्वखण्डे द्वितीये भागे।
"शालयः सतुषा आर्द्रा भृष्टा अस्फुटितास्ततः।
कुट्टिताश्चिपिटाः प्रोक्तास्ते स्मृताः पृथुका अपि॥"
"शालेया यावनालाद्याश्चिपिटाः पुष्टिवर्द्धनाः॥"
इति राजनिर्घण्टः॥
तस्य भक्षणविधिनिषेधौ यथा,—
"हिंस्त्रिमन्नं पृथुकं शुद्धं देशविशेषके।
नात्यन्तशस्तं विप्राणां भक्षणे च निवेदने॥
अभक्ष्यञ्च यतीनाञ्च विधवाब्रह्मचारिणाम्॥"
इति ब्रह्मवैवर्त्ते ब्रह्मखण्डम्॥
(त्रि नता नासिका विद्यतेऽस्य। "इनच्पिटच्-
चिकचि च।" ५। २। ३३। इति पिटच्
प्रत्ययश्चिरादेशश्च। नतनासिके त्रि। यथा
विश्वकर्म्मा काशी। १३। २।
"दिगवस्त्रं चिपिटश्चैव खञ्जञ्च सुरणस्तथा॥"
इत्यस्य फलमाह तत्रैव। ५म श्लोके।
'तुङ्गद्दीनश्च चिपिटं खञ्जश्चानर्द्ददर्शनम्॥"
चिपिटाकारसुखादौ च। यथा, काशीखण्डे।
३७। १४।
"वक्त्रं हस्वञ्च चिपिटं सुखसौभाग्यभञ्जकम्॥"
"चिपिटं चिपिटकाकारम्।" इति तट्टीका॥)
चिपिटकः, पु (चिपिट+स्वार्थे कन्।) चिपिटः।
इत्यमरः। २। ९। ४७॥ (स्त्रियां टाप्। नत
नासिका॥)
चिपिटा स्त्री, गुण्डाविनीतवम्। इति राज
निर्घण्टः॥ (चिपिटा चिपिटाकारा इति।
चिपिट+टाप्। चिपिटस्पर्शिः। यथा, काशी
खण्डे। ३७। १६। 'चिपिटाभिर्भवेद्दासी॥")
चिपुटः पु (चिपिट+पृषोदरादित्वात् साधु।)
चिपिटकः। इति भरतधृतरुद्रकोषः॥
चिप्पः, पु (चिक्कति पीडयति अङ्गुलिमिति। चिक
+अच्। निपातनात् कस्थाने पागमे साधुः।)
नखरोगविशेषः। आङ्गुलहाड़ा इति भाषा॥
तल्लक्षणं यथा,—
"नखमांसमधिष्ठाय वातः पित्तञ्च देहिनाम्।
करोति दाहपाकौ च तं व्याधिं चिप्पमादिशेत्॥"
अथ कुनखस्य लक्षणमाह।
'अभिघातात् प्रदुष्टो यो नखो रूक्षोऽसितः खरः।
भवेत्तं कुनखं विद्यात् कुलीनं वा विधानतः॥"
अथ तयोश्चिकित्सा।
'चिप्पं रुधिरमोक्षेण शोधनेनाप्युपाचरेत्।
गतोष्माणमथैनन्तु सेचयेदुष्णवारिणा।
शस्त्रेणापि यथायोग्यसुच्छिद्य स्रावयेत्ततः॥
प्रणोक्तेन विधानेन रोपयेत्तं विचक्षणः।
स्वरसेन हरिद्राया पाचे शस्त्रायसेऽभयाम्॥
घृष्ट्वा तस्यैव कल्केन लिम्पेच्चिप्पं पुनः पुनः।
कासमर्दस्य सम्भिः पत्रैः कोमलैः परिवेष्टितः॥
अङ्गुलावेष्टकः पुत्रि ध्रुवमाशु प्रशाम्यति।
श्वेतविधिकल्केन कुनखं समुपाचरेत्॥
नखकोटिप्रविष्टश्च टङ्कणेन प्रशाम्यति।
कुनखश्चेत्तदा शैलं सलिलं प्रवतोऽपि च॥"
इति भावप्रकाशे मध्यखण्डे ४र्थे भागे॥
(ग्रन्थान्तरमस्य यथा,—
"कुर्य्यात् पित्तानिलं पाकं नखमांसे सदाग्ज्वरम्।
चिप्पमक्षतरोगञ्च विद्यादुपनखञ्च तम्॥"
इति वाभटेनोत्तरस्थाने ३१ अध्याये उक्तम्॥
चिकित्सास्य यथा,—
"चिप्पं शुद्धा जितोष्माणं साधयेच्छस्त्रकर्म्मणा॥"
इत्युत्तरस्थाने द्वात्रिंशेऽध्याये वाभटेन चोक्तम्॥)
चिमि, पु, (चिनोति सञ्चिनोति मनुष्यजातिवद्
वाक्यानीति। चि+बाहुलकात् मिक।) शुक
पक्षी। इति शब्दमाला॥
चिमिकः, पुं, (चिमि+स्वार्थे कन्।) शुकपक्षी।
इति शब्दरत्नावली॥
चिर अ, (चि+बाहुलकात् रक।) दीर्घ
कालः। तत्पर्य्यायः। चिराय २ चिररात्राय ३
चिरस्य ४। इत्यमरः॥ चिरेण ५ चिरात् ६
चिरे ७। इति भरतः॥ चिरतः ८। इति
शब्दरत्नावली॥ (यथा मनुः। ४। ६०।
'नैकः प्रपद्येताध्वानं न चिरं पर्व्वते वसेत्॥)
चिरकारी, [न्] त्रि (चिरं व्याप्य करोतीति।
कृ+णिनि।) चिरक्रियः। (यथा, महाभारते।
१२। २६४। ३।
"चिरकारी हि मेधावी नापराध्यति कर्म्मसु॥")
गौतमस्य पुत्रभेदः। अस्य निरुक्त्यादिकं यदुक्तं
महाभारते। १२। २६५। ४५।
"चिरकारी महाप्राज्ञो गौतमस्याभवत् सुतः।
चिरेण सर्व्वकार्य्याणि विमृश्यार्थान् प्रपद्यते॥
चिरं सञ्चिन्तयन्नर्थांश्चिरं जाग्रत् चिरं स्वपन्।
चिरं कार्य्याभिपत्तिश्च चिरकारी तथोच्यते॥")
चिरकालः पुं, (चिरः कालः इति कर्म्मधारयः।)
दीर्घकालः। तत्पर्य्यायः। दीर्घरात्रम् २।
इति त्रिकाण्डशेषः॥
चिरक्रिय, त्रि, (चिरं व्याप्य क्रिया यस्य।)
चिरकालेन क्रियाकारकः। तत्पर्य्यायः। दीर्घ
सूत्रः। इत्यमरः। ३। १। १७॥
चिरजीवकः, पु, (चिरं जीवतीति। जीव+ण्वुल्।)
जीवकवृक्षः। इति जटाधरः॥
चिरजीवी, [न्] पुं (चिरं जीवतीति। जीव+
णिनिः।) विष्णुः। काकः। इति मेदिनी॥
जीवकवृक्षः। शाल्मलिवृक्षः। इति राज
निर्घण्टः॥ मार्कण्डेयः। अश्वत्थामा। बलिः।
व्यासः। हनूमान्। विभीषणः। कृपः। परशु
रामः। इति तिथ्यादितत्त्वम्॥ बहुकालजीविनि
त्रि। इति जटाधरः॥ (यथा, रामायणे। २।
१। ३६।
"अथ राज्ञो बभूवैवं वृद्धस्य चिरजीविनः॥")
चिरञ्जीवी, [न्] पु, (चिरं जीवतीति। जीव
+णिनिः।) विष्णुः। काकः। इति हेम
चन्द्रः। ४। ३८८॥ जीवकवृक्षः। शाल्मलि
वृक्षः। इति राजनिर्घण्टः॥ चिरजीविनि त्रि॥
चिरण्टी, स्त्री (चिरात् चिरेण वा अटति
पितृगृहादिति। अट+अच्। 'वयसि प्रथमे।'
४। १। २०। इति ङीप्। तत पृषोदरात्
साधु।) स्ववासिनी। ऊढा अनूढा वा पितृ-

गेहस्थिता कन्या। द्वितीयवयाः स्त्री। सा च युवती। इति भरतधृततरुद्रः हेमचन्द्रश्च ॥

चिरतिक्तः, पुं, ( चिरं चिरात् वा चिरावधीत्यर्थः तिक्तः।) वृक्षविशेषः। चिरता इति भाषा ॥ तत्पर्य्यायः। चिरातिक्तः २ तिक्तकः ३ अनार्य्यतिक्तकः ४ किराततिक्तः ५ भूनिम्बः ६ किरातकः ७ सुतिक्तकः ८। इति शब्दरत्नावली ॥ (भूनिम्बशब्दे विवरणमस्य ज्ञातव्यम् ॥)

चिरत्नः, त्रि, ( चिर+"चिरपरुत्परारिभ्यस्त्नो वक्तव्यः।" ४।३।२३। इत्यस्य वार्त्तिकोक्त्या त्नप्रत्ययः।) पुरातनः। चिरकालोत्पन्नः। इति जटाधरः ॥

चिरन्तनः, त्रि, ( चिरं भव इति। "सायंचिरमिति।"४।३।२३। इति ट्युल् तुट् च। निपातनात् साधुः।) पुरातनः। इत्यमरः।३।१।७७॥ (यथा, पञ्चतन्त्रे।१।८०। "अयमस्माकं चिरन्तनो मन्त्रिपुत्रो दमनकोऽव्याहतप्रवेशः॥" पुं, मुनिविशेषः। यथा, सिद्धान्तकौमुद्याम्।४।३।१०५। इत्यस्य वार्त्तिके। "ब्राह्मणेषु पुराणेन चिरन्तनेन मुनिना॥")

चिरपाकी, [न्] पुं, ( चिरेण पाकोऽस्त्यस्य। पाक+इनिः।) कपित्थः। इति राजनिर्घण्टः ॥

चिरपुष्पः, पुं, ( चिराणि पुष्पाणि यस्य।) वकुलवृक्षः। इति राजनिर्घण्टः ॥

चिरम्, व्य, ( चि+रमक्।) चिरार्थम्। दीर्घकालार्थम्। तत्पर्य्यायः। चिराय २ चिररात्राय ३ चिरस्य ४ चिरात् ५ चिरेण ६। इति हेमचन्द्रः।३।१६८॥ (यथा, रघौ।३।६२।
"तथापि शश्वद्व्यवहारनिष्ठुरे
विपक्षभावे चिरमस्य तस्थुषः॥")

चिरमेही, [न्] पुं, स्त्री, (चिरेण मेहतीति। मिह+णिनिः।) गर्द्दभः। इति हेमचन्द्रः।४।३२२॥

चिररण्यः, पुं, ( चिरं भणति क्रोशतीति। चिरं+भण+अच्।) चिल्लः। इति त्रिकाण्डशेषः ॥

चिररात्रं, क्ली, (चिरा रात्रिरिति योगविभागात् अच् समासे।) दीर्घकालः। इति हलायुधः॥ ( यथा, महाभारते।१।१६८।३।
"चिररात्रोषिता: स्मेह ब्राह्मणस्य निवेशने॥")

चिररात्राय, व्य, (चिररात्रं अयते इति। अय+"कर्म्मण्यण्।" ३।२।१। इत्यण्।) दीर्घकालः। इत्यमरः।३।४।१४॥ ( यथा, मनुः।३।२६६।
"हविर्यच्चिररात्राय यच्चानन्त्याय कल्पते।
पितृभ्यो विधिवद्दत्तं तत् प्रवक्ष्याम्यशेषतः॥")

चिरविल्वः, पुं, ( चिरं विलति आच्छादयति पत्रकण्टकादिभिरिति। विल आच्छादने+वः।) करञ्जवृक्षः। इत्यमरः।२।४।४७॥ ( यथा,—
"चिरविल्वोऽग्निको दन्ती चित्रको हयमारकः।
कपोतवङ्ककङ्कानां पुरीषाणि च दारुणम्॥"
इति सुश्रुते सूत्रस्थाने षट्त्रिंशेऽध्याये॥)

चिरसूता, स्त्री, ( चिरं सूता या सा।) चिरप्रसूता गावी। केलेन् गाइ इति भाषा। तत्पर्य्यायः। वष्कयणी २। इत्यमरः।२।९।७१॥

चिरस्थायी, [न्] त्रि, (चिरं तिष्ठतीति। स्था+णिनिः।) बहुकालस्थाता॥

चिरस्य, व्य, ( चिरमस्यते इति। अस्+यत्। शकन्ध्वादित्वात् साधुः।) दीर्घकालः। इत्यमरः।३।४।१॥ (यथा, हरिवंशे।१२६।२३।
"चिरस्य खलु कालेन संस्तुतोऽसि महात्मना॥")

चिराटिका, स्त्री, (चिरं अटतीति। अट+ण्वुल् कापि अत इत्वञ्च।) श्वेतपुनर्नवा। इति रत्नमाला॥ माताड़ी इति भाषा॥ यथा, वैद्यके।
"गोमूत्रयुक्तस्य पुरातनस्य
यद्वायसञ्ज्ञानि चिराटिकायाः॥"

चिरात्, व्य, ( चिरं अततीति। अत+क्विप्) दीर्घकालः। इति हेमचन्द्रः।६।१६८॥ (यथा, पञ्चतन्त्रे।४।७८। "भो भगिनीसुत! किमतिचिराद्दृष्टोऽसि॥")

चिरात्, पुं, (चिरं चिरेण वा अत्ति। अद्+क्विप्।) गरुड़ः। इति त्रिकाण्डशेषः॥

चिरातिक्तः, पुं, (चिरं आतिक्तः।) चिरतिक्तः। इति शब्दरत्नावली॥

चिराय, व्य, ( चिरं अयते। अय+अण्।) दीर्घकालः। इति हेमचन्द्रः।६।१६८॥ (यथा, महाभारते।१३।६४।१०।
"पुरा धर्म्मो वर्त्तते नेह यावत्
तावद्गच्छामः सुरलोकं चिराय॥")

चिरायुः, [स्] पुं, ( चिरमायुर्यस्य।) देवता। इति त्रिकाण्डशेषः॥ चिरजीविनि त्रि। यथा,
"भवति यदि मनुष्यो गुर्व्वधीनश्चिरायुः॥"
इत्यागमः॥
( यथा च पञ्चतन्त्रे।५।३४।
"यदि विस्तारविस्तीर्णं तद्भवेन्न चिरायुषम्॥")

चिरि, र न हिंसे। इति कविकल्पद्रुमः॥ (स्वां-परं-सकं-सेट्।) रेफोपधः। र वैदिकः। न, चिरिणोति। इति दुर्गादासः॥

चिरिः, पुं, ( चिनोति मनुष्यवद्वाक्यादिकम्। चि+रिक्।) शुकपक्षी। इति त्रिकाण्डशेषः॥

चिरिण्टी, स्त्री, ( चिरण्टी+पृषोदरात् साधुः।) ऊढ़ा अनूढ़ा वा पितृगृहस्थिता कन्या। तत्पर्य्यायः। स्ववासिनी। इत्यमरः।२।६।९॥ चिरण्टी ३ सुवासिनी ४। इति भरतः॥ द्वितीयवयाः स्त्री। युवती। इति मेदिनी॥

चिरिविल्वः, पुं, ( चिरविल्वः। पृषोदरादित्वात् साधुः।) चिरविल्वः। करञ्जवृक्षः। इत्यमरटीकायां भरतः॥

चिरु, स्त्री, ( चिञ् चयने+क्विप् चि चयनं ग्रहणमित्यर्थः रातीति। रा+"न्यग्वादयश्चेति कुः। बाहुसन्धिवलमाश्रित्यैव ग्रहणक्रियासम्भवात् तथात्वम्।) बाहुसन्धिः। इति शब्दचन्द्रिका॥

चिरे, व्य, चिरम्। इत्यमरटीकायां रायमुकुटः॥

चिरेण, व्य, चिरम्। इति हेमचन्द्रः॥ ( यथा, रघुः।५।६४।
"भावाववोधकलुषा दयितेव रात्रौ
निद्रा चिरेण नयनाभिमुखी बभूव॥")

चिर्भटी, स्त्री, ( चिरेण भटतीति। भट+अच्। गौरादित्वात् ङीष्। पृषोदरादित्वात् साधुः।) कर्कटी। इति हेमचन्द्रः।४।२५५॥ ( यथा, पञ्चतन्त्रे।१।१६७।"अहो! अविवेकोऽसद्भूपतेर्यः पुरीषोत्सर्गमाचरंश्चिर्भटीभक्षणं करोति॥")

चिर्भिटा, स्त्री, कर्कटीभेदः। चिभिड़ा इति वेलसेद इति च देशान्तरीयभाषा॥ तत्पर्य्यायः। सुचित्रा २ चित्रफला ३ चैत्र चिर्भिटा ४ पाण्डुफला ५ पथ्या ६ रोचनफला ७ चिर्भिटिका ८ कर्कचिर्भिटा ९। इति राजनिर्घण्टः॥ चिर्भिटम् १० घेण्टुदुग्धम् ११ गोरक्षकर्कटी १२। अस्या गुणाः। मधुरत्वम्। रूक्षत्वम्। गुरुत्वम्। पित्तकफापहत्वम्। अनुष्णत्वम्। ग्राहित्वम्। विष्टम्भित्वञ्च॥ पक्वाया अस्या गुणाः। उष्णत्वम्। पित्तलत्वञ्च। इति भावप्रकाशः॥ गौल्यत्वम्। दीपनत्वञ्च॥ वालाया अस्या गुणाः। तिक्तत्वम्। किञ्चिदम्लत्वञ्च। शुष्कायाश्चास्या गुणाः। श्लेष्मवातारुचिजाड्यनाशित्वम्। रोचनत्वम्। दीपनत्वञ्च। इति राजनिर्घण्टः॥ (क्वचित् पुंलिङ्गेऽपि दृश्यते॥)

चिल, श वासे। इति कविकल्पद्रुमः॥ (तुदां-परं-सकं-सेट्।) वासः परिधानम्। श, चिलति वस्त्रं लोकः परिदधातीत्यर्थः। चेलिता। इति दुर्गादासः॥

चिलमीलिका, स्त्री, ( चिरं मीलतीति। मील सङ्कोचे+ण्वुल्। ततष्टापि अत इत्वम्। रस्य लत्वे साधुः।) कण्ठीभेदः। खद्योतः। विद्युत्। इति मेदिनी। के, २२८॥

चिलिचिमः, पुं, (चिरिं हिंसां चिनोतीति। चिरि+चि+मक्। रस्य लत्वम्।) मत्स्यविशेषः। वालियागड़क इति ख्यातः। इचाक इत्येके। इति भरतः॥ तत्पर्य्यायः। नलमीनः २। इत्यमरः।१।१०।१८॥ तलमीनः ३ चिलीचिमिः ४ चिलीचिमः ५ चिलिचीमः ६ चेलिचीमः ७ चिलीमः ८ चिलिमीनकः ९ चिलिचीमिः ११ कवलः ११ विलोटकः १२। इति भरतधृतकोषान्तरम्॥ चेङ्गो इति ख्यातो मत्स्यः। तस्य गुणाः। लघुत्वम्। रूक्षत्वम्। अनभिष्यन्दित्वम्। वायुकारित्वम्। कफनाशित्वञ्च। इति राजवल्लभः॥

चिल्ल, शैथिल्ये। भावकृतौ। इति कविकल्पद्रुमः॥ (भ्वां-परं-अकं-सेट्।) इकारी लद्द्यान्तः। चिल्लति चेचिल्लते। इति दुर्गादासः॥

चिल्लः, पुं, ( चिल्लति शावभावेन उड्डीयते इति। चिल्ल+अच्।) पक्षिविशेषः। चिल् इति भाषा॥ तत्पर्य्यायः। आतायी २। इत्यमरः।२।५।२१॥ शकुनिः ३ आतापी ४। इति हेमचन्द्रः॥ समाक्रिः ५ कुष्टनीड़कः चिररण्यः ७। इति त्रिकाण्डशेषः॥ ( यथा, विष्णुधर्म्मोत्तरे।

'ग्र॰ कङ्कः कपोतश्च उलूकः श्येन एव च। चिल्लश्च चर्म्मचिल्लश्च भासः पाण्डर एव च।' क्लिन्ने चक्षुषी यस्य। 'क्लिन्नस्य चिल्लपिल्लस्त्वास्य चक्षुषी।"५।२।३३। इत्यस्य वार्त्ति इति चिलादेशो लप्रत्ययश्च।) क्लिन्नचक्षुः। क्लिन्ननेत्रयुक्ते त्रि। इति मेदिनी। ले, १६।

चिल्लिका स्त्री (चिल्ल इव कायतीति। कै+क।) झिल्लिका। इति शब्दरत्नावली॥

चिल्लभक्ष्या स्त्री (चिल्लस्य भक्ष्या भक्षणीया।) चञ्चुविलासिनी। इति शब्दचन्द्रिका॥

चिल्लाभ पुं (प्रमहा हारकत्वात् चिल्ल इव आभा तीति। आ+भा+क।) ग्रन्थिचौर। इति त्रिकाण्डशेषः। हातसइँचड इति भोटिकाटा इति च भाषा॥

चिल्ली स्त्री (चिल्लति हाव करोति चिल्लत्यनेन वा। चिल्ल+इन्। ततो वा ङीप्।) लोध्र। पत्रशाकभेद। तत्पर्य्याय। चिल्लिका२ कुली३ चाम्ललोहिता४ मृदुपत्री५ चारदला६ चारपत्रा७ वास्तुकी८ महद्दला९ गौडवास्तुक१०। (यथा सुश्रुते सूत्रस्थाने ४६ अध्याये।

'सतीनो वास्तुकश्चुच्चू चिल्ली मूलकपोतिका। मण्डूकपर्णी जीवन्ती शाकवर्गे प्रशस्यते॥')

अस्य गुणाः। वास्तुकतुल्यत्वम्। चारत्वम्। श्लेष्मपित्तप्रमेहमूत्रकृच्छ्रनाशित्वम्। पथ्यत्वम्। रुचिकारित्वञ्च। इति राजनिर्घण्टः॥ (तद्वच्चिल्ली तु विज्ञेया वातपित्तविकारिणाम्।' इति हारीते प्रथमे स्थाने दशमेऽध्याये॥) झिल्लिका। इति शब्दरत्नावली॥

चिवि पुं (चीयते व्याददाय यत्तत इति। चीव ग्रहणे+'सर्व्वधातुभ्य इन्। उणा॰ ४।११७। इति इन्। पृषोदरादित्वात् ह्रस्व।) चिवुकम्। इति जटाधरः॥

चिविट पुं (चिपिट निपातनात् पस्य वः।) चिपिटः। इत्यमरटीका॥

चिविल्लिका स्त्री क्षुद्रक्षुपविशेषः। तत्पर्य्यायः। रक्तक्रा२ क्षुद्रघोली३ मधुमालपत्रिका४। अस्या गुणाः। कटुत्वम्। कषायत्वम्। जीर्णज्वर अतिहितत्वम्। रसायनत्वञ्च। इति राजनिर्घण्टः॥

चिवु पुं (चीयते व्याददाय यत्तत्साम्। चीव + मृगय्वादयश्च। उणा॰।१।३८। इति कुप्रत्ययेन साधु।) चिवुकम्। इति भरतः॥

चिवुक क्ली (चिवु+स्वार्थे कन्। अभिधानात् क्लीवत्वम्।) अधराधोभागः। इत्यमरः।२।६।९०। थुँति इति दाडि इति च भाषा॥ (यथा, कुट्टनीमते।मिकायाम्।१।४१। 'उत्तम्भ चिवुकं वक्ष्यत्याश्च पवन पुने॥')

चिवुकं पुं (चिवुरिव कायतीति। कै+क।) मुचुकुन्दवृक्षः। इति राजनिर्घण्टः॥

चिह्न लक्ष्मे। (अदन्तचुरा पर सक सेट।) औत्वयुपान्तिरिति रङ्घा इत्यमरटीकायां भरतः॥

चिह्न क्ली (चिह्न्यते अनेनेति। चिह्न लक्षणे+करणे घञ।) चिह्न्यते येन तत्। चिना इति दाग इति च भाषा। तत्पर्य्यायः। कलङ्कः२ अङ्कः३ लाञ्छनम्४ लक्ष्म५ लक्षणम्६ लिङ्गम्७। इत्यमरः।२।१।१७। लक्ष्म ८। इति भरतः। अभिज्ञानम्९। इति जटाधरः॥ (यथा भागवते।४।१५।९। 'मैत्रस्य दक्षिणे हस्ते दृष्ट्वा चिह्नं गदाभृतः। पादयोररविन्दञ्च तं वै मेने हरेः कलाम्॥') पताका। इति मेदिनी। ने ४॥

चिह्नकारी [न्] त्रि, (चिह्नं करोतीति। कृ+णिनि।) घोरदर्शनः। विघाती। इति विश्वः॥

चिह्नधारिणी स्त्री (चिह्नं धरति धारयतीति वा। धृ+णिनि स्त्रियां ङीप्।) श्यामालता। इति शब्दचन्द्रिका॥

चिह्नित, त्रि, चिह्न+कर्म्मणि क्त। चिह्नयुक्तः। अङ्कितः। लक्षितः। (यथा मनुः।१०।५५। 'दिवा चरेयुः कार्य्यार्थं चिह्निता राजशासनैः।")

चीक कि मर्षणे। इति कविकल्पद्रुमः॥ (चुरा० पक्षे भ्वा० पर सक सेट।) कि, चीकयति चीकति। मर्षणं सहनं। तथा च। चक्रावलीतरङ्गा मृदीचीकयन्ति च मद्वपुरिति हलायुधः। वायव कुप्रत्ययार्थः। भट्टमल्लस्तु मर्षणं इति मन्त्रं यमयं पठिता क्षमार्थमाह। इति दुर्गादासः॥

चीडा, स्त्री, गन्धद्रव्यविशेषः। चीडागन्ध इति ख्याता। तत्पर्य्यायः। दारुगन्धा२ गन्धवधूः३ गन्धमादनी४ तरणी५ तारा६ भूतमारी७ मङ्गल्या८ कपटिनी९ यक्षभीतिजित१०। अस्या गुणाः। कटुत्वम्। कासकफनाशित्वम्। दीपनत्वम्। श्वयथुशोषवातपित्तदोषभ्रमापहत्वञ्च। इति राजनिर्घण्टः॥

चीन, क्ली (चिनोति कौशादिकमिति। चि+बाहुलकात् नक् दीर्घश्च।) पताका। इति त्रिकाण्डशेषः॥ सीसकम्। इति रत्नमाला॥

चीन पुं (चीयते सञ्चीयते शबलत्वादिदोषो यत्र। चि+बाहुलकात् नक् दीर्घश्च।) मृगविशेषः। चीना इति भाषा॥ यथा—

'काश्मीरन्तु समारभ्य कामरूपात्तु पश्चिमे। भोटान्तदेशो देवेशि। मानसेशाच्च दक्षिणे। मानसेशाद्दक्षपूर्व्वे चीनदेशः प्रकीर्त्तितः॥' इति शक्तिसङ्गमतन्त्रम्॥

(तद्देशवासिषु तद्‌नृपेषु च बहुवचनान्तः। यथा महाभारते।२।२६।९। [स भगवत् ॥] स किरातैश्च चीनैश्च वृतः प्राग्ज्योतिषोऽ) अंशुकविशेषः। (यथा शकुन्तलायां १ माङ्के। 'चीनांशुकमिव केतोः प्रतिवातं नीयमानस्य॥') व्रीहिभेदः। तन्तुः। मृगविशेषः। इति मेदिनी। ने ४॥

चीनक पुं (चीन एव। चीन+स्वार्थे कन्।) धान्यविशेषः। चीना इति भाषा। तत्पर्य्यायः। काककङ्गु २। इति हेमचन्द्रः॥ (यथा विष्णुपुराणे।१।६।२१।

"प्रियङ्गवो ह्युदाराश्च कोरदूषाः सचीनकाः॥)

अस्य गुणाः। शोषकत्वम्। वायुवर्द्धकत्वम्। पित्तश्लेष्मनाशित्वम्। रूक्षत्वञ्च। इति राजवल्लभः॥ कङ्गनी। चीनकर्पूर। इति राजनिर्घण्टः॥ (चीनदेशवासिषु बहुवचनान्तः। यथा, महाभारते।८।८।१९। "मुखानङ्गांश्च वाहीकान् निषधान् युद्धचीनकान्।")

चीनकर्पूर पुं (चीननामकः कर्पूरः।) कर्पूरविशेषः। चीनकर्पूर इति देशान्तरीयभाषा॥ तत्पर्य्यायः। चीनकः२ कृत्रिमः३ धवलः४ पटुः५ मेघसारः६ तुषारः७ दीपकर्पूरजः८ च। अस्य गुणाः। कटुत्वम्। तिक्तत्वम्। उष्णत्वम्। ईषच्छीतलत्वम्। कफकण्ठदोषक्रिमिनाशित्वम्। मेध्यत्वम्। पावनत्वञ्च। इति राजनिर्घण्टः॥

चीनज, क्ली, (चीने चीनदेशे जायते इति। जन+ड।) लौहम्। तत्तु तीक्ष्णलौहम्। इति राजनिर्घण्टः॥

चीनपिष्ट क्ली, (चीनस्य सीसकस्य पिष्ट इव पेषणं वस्तु चूर्णमिवार्थः।) सिन्दूरम्। इति हेमचन्द्रः॥ सीसकम्। इति राजनिर्घण्टः॥ (यथा कथासरित्सागरे।२३।८५। 'चीनपिष्टमयी लोकधारयीकमयी च भूः॥')

चीनवङ्ग क्ली (चीनभवं वङ्गम्।) सीसकम्। इति राजनिर्घण्टः॥

चीनाक पुं, (चीन चीनाकारमकतीति। अक+अण्।) कर्पूरविशेषः। तद्गुणा। यथा भावप्रकाशे। 'चीनाकर्षश्च कर्पूरः कफक्षयकरः स्मृतः। कुष्ठकण्डूवमिहरस्तथा तिक्तरसश्च सः॥'

चीनाकर्कटी स्त्री, (चीनमिव स्वादु कर्कटी। तत् पृषोदरात् साधु।) कर्कटीप्रभेदः। सा तु चित्रकूटदेशे प्रसिद्धा। तत्पर्य्यायः। राजकर्कटी२ सुदीर्घा३ राजफला४ बाला५ कुशकर्कटी६। अस्या गुणाः। रुच्यत्वम्। शिशिरत्वम्। पित्तदाहशोषनाशित्वम्। मधुरत्वम्। तृप्तिदत्वम्। गुरुत्वञ्च। इति राजनिर्घण्टः॥

चीभ क ङ कत्थे। इति कविकल्पद्रुमः॥ (भ्वा० आत्म० सक सेट।) कत्थ प्रशंसा। ङ अचिचीभत्। ङ चीभते गुणिनं गुणी चोक्षावकाराम्निर्यासिकः। इति दुर्गादासः॥

चीय क ञ सङ्घादानयोः। (भ्वा० उभ० सक सेट।) चतुष्स्वरी। क अचिचीयन्। ञ चीयति चीयते। इति दुर्गादासः॥

चीर क्ली (चिनोति व्याप्नोति इत्य कटिदेशान्कि वा। चि+'शुसिचिमीनां दीर्घश्च।" उणा॰।२।२५। इति क्रन् दीर्घश्च।) इत्य त्वक। (यथा रामायणे।५।३१।२२। 'प्राप्य तु मद्वाद्धि सौमित्रिभार्यावनुमतं। पूर्व्वजस्यानुयात्राय द्रुमचीरैरलङ्कृतः॥") जीर्णवस्त्रखण्डम्। इति सुभूतिः। इति सिद्धान्तिकौमुदीटीकायां भरतः॥ (यथा भागवते।२।२।५।

"चीराणि किं पथि न सन्ति दिशन्ति भिक्षां
नैवाङ्घ्रिपाः परभृतः सरितोऽप्यशुष्यन् ॥" )
गोस्तनः । वस्त्रभेदः । (यथा, मनुः ।११।१०१।
"चीरवासा द्विजोऽरण्ये चरेद्ब्रह्महणो व्रतम् ॥")
रेखाभेदः । लेखनभेदः । इति मेदिनी ॥ चूडा ।
(यथा, महाभारते । ३ । ११ । ४६ ।
"शुक्लवज्जर्जरीभूता बहुवल्कल पादपाः ।
चीराणीव युदस्तानि रेजुस्तत्र महावने ॥" )
सीसकम् । इति हेमचन्द्रः ॥

चीरकः, पुं, ( चीर+संज्ञायां कन् ।) विक्रिया-लेखः । विकारलेखनम् । इति विश्वः ॥ (स्वार्थे-कनि चीरशब्दार्थोऽप्यत्र ॥)

चीरपत्रिका, स्त्री, ( चीरमिव पत्रमस्य । ततः कन् टापि अत इत्वञ्च ।) चञ्चुशाकः । इति राजनिर्घण्टः ॥

चीरपर्णः, पुं, ( चीरमिव पर्णमस्य ।) शालवृक्षः । इति राजनिर्घण्टः ॥ ( विवृतिरस्य शालशब्दे विज्ञेया ॥)

चीरिः, स्त्री, ( चि+बाहुलकात् क्रिः दीर्घश्च । ) नेत्रांशुकम् । इति शब्दरत्नावली ॥

चीरिका, स्त्री, (चीरीति कृत्वा कायति शब्दायते इति । कै+कः ।) झिल्ली । इति हेमचन्द्रः ॥

चीरितच्छदा, स्त्री, (चीरितः चीरमिव जातश्छदः पत्रं यस्याः ।) पालङ्कशाकम् । इति भावप्रकाशः ॥

चीरी, स्त्री, ( चीरि+"कृदिकारादिति ।" वा ङीष् ।) कच्छाटिका । झिल्ली । इति हेमचन्द्रः ॥

चीरुकं, क्ली, ( चीं इति कृत्वा रौति । रु+क्विप् । चीरुर्झिल्लीपतङ्गः स इव इति इवार्थे कन् ।) फलविशेषः । चैँउर इतिभाषा ॥ अस्य गुणाः । रुचिदाहकफपित्तकारित्वम् । अम्लत्वञ्च । इति राजवल्लभः ॥

चीर्णं, त्रि, (चर+क्त । पृषोदरात् साधुः ।) शीलितम् । इति त्रिकाण्डशेषः ॥

चीर्णपर्णः, पुं, ( चीर्णं विदीर्णं पर्णमस्य ।) निम्बवृक्षः । खर्जूरवृक्षः । इति मेदिनी ॥

चीलिका, स्त्री, ( चीरिका+रस्य लत्वे साधुः । ) चीरिका । झिल्ली । इति शब्दरत्नावली ॥

चील्लका, स्त्री, ( चीलिका+पृषोदरात् साधुः । चीरिति शब्देन लघ्यते इति । लघ+घञ् । ततः पृषोदरादित्वात् साधुः इति वा ।) झिल्ली । इति शब्दरत्नावली ॥

चीव, ऋ ञ ग्रहणे । संवृतौ । इति कविकल्पद्रुमः ॥ (भ्वां-उभं-सकं-सेट् ।) ऋ, अचिचीवत् । ञ, चीवति । चीवते वल्कलं भिक्षुः । गृह्णाति परिदधाति वेत्यर्थः । इति दुर्गादासः ॥

चीव, क दीप्तौ । इति कविकल्पद्रुमः ॥ ( चुरां-परं-अकं-सेट् ।) क, चीवयति । इति दुर्गादासः ॥

चीवरं, क्ली, ( चीयते तन्तुसन्तानैरिति । चि+"चिलरच्छलरधीवरेति ।" उणां । ३ । १ । इति ष्वरच् । निपातनात् धातोर्दीर्घत्वे साधुः ।) भिक्षुवस्त्रम् । इत्युणादिकोषः ॥ ( यथा, महाभारते । १ । ९१ । १२ ।
"अनग्निरनिकेतश्चाप्यगोत्रचरणो मुनिः ।
कौपीनाच्छादनं यावत्तावदिच्छेच्च चीवरम् ॥")

चीवरी, [ न् ] पुं, (चीवरं अस्यस्येति । इनिः ।) बुद्धभिक्षुकः । इति त्रिकाण्डशेषः ॥

चुक, क व्यथौ । इति कविकल्पद्रुमः ॥ ( चुरां-परं-सकं-सेट् । ) कोपधः पञ्चमस्वरमध्यः । व्यथिः पीडनम् । क, चुकयति शत्रुं शूरः । इति दुर्गादासः ॥

चुक्कारः, पुं, ( चुक्क+भावे अप् । चुक्कं पीडनं आराति सम्यक् ददातीति । सिंहनादश्रवणेन भीरूणां भयजनकत्वात्तथात्वम् । आ+रा+कः ।) सिंहनादः । इति त्रिकाण्डशेषः ॥

चुक्रं, क्ली, (चकते तृप्यत्यनेन इति । चक+"चकिरम्योरुच्चोपधायाः ।" उणां । २ । १४ । इति रक उपधाया उच्च ।) अम्लद्रव्यविशेषः । महादा इति ख्यातम् । तत्पर्यायः । तिन्तिडीकम् २ वृक्षाम्लम् ३ । इत्यमरः । २ । ९ । ३५ ॥ चुक्रकम् ४ । इति शब्दरत्नावली ॥ महाम्लम् ५ । इति जटाधरः ॥ (अम्लवृक्षकम् ६ । इति भावप्रकाशः । १ । १ ॥) पत्रशाकविशेषः । चुक इति भाषा ॥ तत्पर्यायः । चुक्रवास्तूकम् २ लिकुचम् ३ अम्लवास्तुकम् ४ दलाम्लम् ५ अम्लशाकाख्यम् ६ अम्लादि ७ हिलमोचिका ८ । अस्य गुणाः । अम्लपाकत्वम् । लघुत्वम् । उष्णत्वम् । वातगुल्मनाशित्वम् । रुच्यशीघ्रतृप्तिकारित्वम् । पथ्यत्वम् । तत्पर्यायगुणाः ।
"चुक्रिका स्यात्तु पत्राम्ला रोचनी शतवेधिनी ।
चुक्रा त्वम्लतरा स्वाद्वी वातघ्नी कफपित्तकृत् ॥
रुच्या लघुतरा पाके वृन्ताके नातिरोचनी ॥"
इति भावप्रकाशः ॥ * ॥
("चुक्रमत्यम्लमुष्णञ्च दीपनं पाचनं परम् ।
शूलगुल्मविबन्धामवातश्लेष्महरं परम् ॥
वमिहृष्णास्यवैरस्यहृत्पीडावह्निमान्द्यहृत् ॥"
इति शब्दार्थचिन्तामणिधृतवैद्यकम् ॥ )
काञ्जिकप्रभेदः । तत्पर्यायः । सहस्रवेधम् २ रसाम्लम् ३ चुक्रवेधकम् ४ शाकाम्लभेदनम् ५ चन्द्रम् ६ अम्लसारम् ७ चुक्रिका ८ । अस्य गुणाः । तिक्तत्वम् । अम्लत्वम् । स्वादुत्वम् । कफपित्तनाशिकारोगदुर्गन्धशिरोरोगनाशित्वञ्च । इति राजनिर्घण्टः ॥ * ॥ सन्धानविशेषः । यथा,
"यन्मस्त्वादिशुचौ भाण्डे सगुडक्षौद्रकाञ्जिकम् ।
धान्यराशौ त्रिरात्रस्थं शुक्तं चुक्रं तदुच्यते ॥
द्विगुणं गुडमध्वारनालमस्तु क्रमादिह ॥"
इति परिभाषा ॥
(अस्य लक्षणं यथा,—
"विनष्टे संहितो यस्तु तच्चुक्रमभिधीयते ॥"
इति शार्ङ्गधरे मध्यखण्डे दशमेऽध्याये ॥)

चुक्रः, पुं, (चकते तृप्यतेऽनेनेति । चक+रक् उपधाया उच्च ।) अम्लः । अम्लवेतसः । इति विश्वः ॥

चुक्रकं, क्ली, ( चुक्र+संज्ञायां कन् । ) शाकविशेषः । चुकापालङ्क इति भाषा ॥ अस्य गुणाः । दुर्जरत्वम् । भेदकत्वम् । वायुनाशित्वम् । पित्तकारित्वम् । गुरुत्वञ्च । इति राजवल्लभः ॥ ( चुक्रार्थे स्वार्थे कन् ॥ )

चुक्रफलं, क्ली, (चुक्रमेव फलं यस्य । चुक्रं फलति वा । फल+अच् । ) वृक्षाम्लम् । इति राजनिघण्टः ॥ (वृक्षाम्लशब्देऽस्य विशेषो ज्ञातव्यः ॥)

चुक्रा, स्त्री, ( चुक्रः अम्लत्वं विद्यतेऽस्य इत्यच् टाप् च ।) चाङ्गेरी । इति मेदिनी । रे, ३५ ॥ आमरुल इति भाषा ॥ (अस्या गुणा यथा,—
"चुक्रा त्वम्लतरा स्वाद्वी वातघ्नी कफपित्तकृत् ।
रुच्या लघुतरा पाके वृन्ताके नातिरोचनी ॥"
इति भावप्रकाशस्य पूर्व्वखण्डे प्रथमे भागे ॥)
तिन्तिडी । इति शब्दरत्नावली ॥ (यथास्याः पर्य्यायाः भावप्रकाशस्य पूर्व्वखण्डे प्रथमे भागे ।
"अम्लिका चुक्रिकाम्ली च चुक्रा दन्तशठापि च ।
अम्ला च विचिका चिञ्चा तिन्तिडीका च
तिन्तिडी ॥")

चुक्राम्लं, क्ली, ( चुक्रमिव अम्लम् । चुक्रवदम्लोऽत्र इति वा । ) वृक्षाम्लम् । इति राजनिर्घण्टः ॥ (वृक्षाम्लशब्दे विवृतिरस्य ज्ञेया ॥)

चुक्राम्ला, स्त्री, ( चुक्रमिव अम्लः अम्लत्वं विद्यतेऽस्याः । अच् टाप् च । ) अम्ललोणिका । चिञ्चा । काञ्जिकभेदः । इति राजनिर्घण्टः ॥

चुक्रिका, स्त्री, ( चुक्रो विद्यतेऽस्मिन् इति । ठन् टाप् च ।) अम्ललोणिका । इत्यमरः । २ । ४ । १४० ॥ (अस्याः पर्य्याया यथा, भावप्रकाशे ।
"चाङ्गेरी चुक्रिका दन्तशठाम्बष्ठाम्ललोणिका ।
अश्मन्तकस्तु शफरी कुशली चाम्लपत्रकः ॥")
क्षुद्रचाङ्गेरी । इति रत्नमाला ॥ चुकापालङ्क इति भाषा ॥ (यथास्याः पर्य्यायाः ।
"चुक्रिका स्यात्तु पत्राम्ला रोचनी शतवेधिनी ॥"
इति भावप्रकाशस्य पूर्व्वखण्डे प्रथमे भागे ॥
तिन्तिडी । तत्पर्य्याया यथा, तत्रैव ।
"अम्लिका चुक्रिकाम्ली च चुक्रा दन्तशठापि च ॥
अम्ला च विचिका चिञ्चा तिन्तिडीका च
तिन्तिडी ॥")

चुचुकं, क्ली, ( चुचु इत्यव्यक्तशब्देन कायति पानकाले इति । कै+कः । ) कुचाग्रम् । तत्पर्य्यायः । चूचुकम् २ चुचूकम् ३ । इति शब्दरत्नावली ॥ कुचाननम् ४ । पुंलिङ्गोऽपि । इति रत्नकोषः ॥ स्तनवृन्तम् ५ । इत्यमरटीकायां भरतः ॥ (देशविशेषे तद्देशवासिषु च पुं । यथा, महाभारते । १२ । २०७ । ४२ ।
"दक्षिणापथजन्मानः सर्व्वे नरवरान्ध्रकाः ।
गुहाः पुलिन्दाः शवराश्चुचुका मद्रकैः सह ॥")

चुचूः, पुं, सुनिषण्णशाकम् । इति त्रिकाण्डशेषः ॥

चुचूकं, क्ली, ( चुचुक+पृषोदरादित्वात् दीर्घः । ) चुचुकम् । इति शब्दरत्नावली ॥

चुच्य, ई अभिषवे । इति कविकल्पद्रुमः ॥ (भ्वां-परं-अकं-सकाश्च-सेट् । ) तालव्यवर्गाद्योपधः । पञ्च-

चुलुम्पा, स्त्री, (चुलुम्पति चञ्चला भवतीति। चुलुम्प+अच्। स्त्रियां टाप्।) छागी। इति त्रिकाण्डशेषः॥

चुलुम्पी, [न्] पुं, (चुलुम्पो लौल्यं चञ्चलता इत्यर्थः। सोऽस्यास्तीति। इनिः।) शिशुमाराकृतिमत्स्यः। उत्पलमत्स्यः। इति कश्चित्। इति शब्दरत्नावली॥

चुल्ल, भावकृतौ। इति कविकल्पद्रुमः॥ (भ्वां-परं-अकं-सेट्।) प्रथमस्वरी लद्वयान्तः। एकोऽयं। चुल्लन्ति भावनयनाद्यैः सह प्रियेयेति हलायुधः। इति दुर्गादासः॥

चुल्लः, पुं, क्लिन्नचक्षुः। (क्लिन्ने चक्षुषी अस्य। "चुल् च।" ५।२।३३। इत्यस्य वार्त्तिकोक्त्या क्लिन्नस्य चुलादेशो लप्रत्ययश्च।) तद्युक्ते, त्रि। इति हेमचन्द्रः।३।१२५॥

चुल्लकी, स्त्री, (चुल्लति हावभावेन क्रीड़तीति। चुल्ल+ण्वुल्। गौरादित्वात् ङीष्।) शिशुमारः। कुण्डीभेदः। कुलविशेषः। इति मेदिनी शब्दरत्नावली च॥

चुल्लिः, स्त्री, (चुल्लते प्रज्वाल्यते अग्निरत्र। चुल्ल+"सर्व्वधातुभ्य इन्।" उणां।४।११७। इति इन्। यद्वा, चुद्यते प्रेर्य्यते अग्निर्यत्र। चुद्+बाहुलकात् लिक्।) पाकार्थमग्निस्थानम्। चुला इति भाखा इति च भाषा॥ तत्पर्य्यायः। अश्मन्तम् २ उद्धानम् ३ अधिश्रयणी ४ अन्तिका ५। इत्यमरः।२।९।२९॥ 'अश्मन्तम् ६ उधानम् ७ उद्धारम् ८ चुल्ली ९ आन्द्रिका १०। इति तट्टीका॥ उद्धानिः ११। इति शब्दरत्नावली॥

चुल्ली, स्त्री, (चुल्लि+"कृदिकारादक्तिनः।" ४।१।४५। इत्यस्य वार्त्तिकोक्त्या वा ङीष्।) चिता। उद्धानम्। इति मेदिनी। ले, १०॥ (यथा, मनुः।३।६८।
"पञ्चसूना गृहस्थस्य चुल्ली पेषण्युपस्करः। कण्डनी चोदकुम्भश्च बध्यते यास्तु वाहयन्॥")

चुस्तं, क्ली पुं, तुस्तम्। तत्तु मांसपिण्डकविशेषः॥ स्थालीभृष्टमांसम्। पनसादिफलस्यासारभागः। इति लिङ्गादिसंग्रहटीकायां भरतः॥ भोला इति ख्यातः॥

चूचुकं, क्ली पुं, (चूष्यते पीयते इति। चूष पाने+बाहुलकात् उकः। षस्य चत्वञ्च।) चुचुकम्। इत्यमरटीकायां भरतः॥ (यथा, रामायणे।६।२३।१३।
"स्तनौ च विरलौ पीनौ समौ मे मग्नचूचुकौ॥")

चूड़कः, पुं, (चुड़ति अघ्णीभवतीति। चुड़+ण्वुल् ततो निपातनात् दीर्घत्वं साधुः।) कूपः। इति त्रिकाण्डशेषः॥

चूड़ा, स्त्री, (चोलयति मस्तकादुपरि उन्नता भवतीति। चुल क् उन्नतौ+भिदादित्वादङ् ततो दीर्घसतोलस्य ड़ले साधुः।) मयूरशिखा। शिरोमध्यस्थशिखामात्रम्। तत्पर्य्यायः। शिखा २। इत्यमरः।२।५।३२॥ केशपाशी ३। जूटिका ४ जुटिका ५। यथा, शब्दरत्नावल्याम्।
"शिखा चूड़ा केशपाशी जूटिका जुटिकेत्यपि। शिरोमध्यबद्धचूड़े भवेदेतत्तु पञ्चकम्॥"
वड़भी। बाहुभूषणम्। इति मेदिनी। ड़े, १३॥ अग्रम्। इति हेमचन्द्रः॥ (यथा, क्षितीशवंशे।
"अस्ताचलचूड़ालम्बिनि भगवति चन्द्रमसि॥")
कूपः। इति त्रिकाण्डशेषः॥ दशसंस्कारान्तर्गतसंस्कारविशेषः। यथा। चूड़ा कार्य्या यथाकुलमिति मलमासतत्त्वम्॥ (यथाच,—
"अयुग्माब्दे तथा मासि चूड़ा सौम्यशनीतरे। अर्केन्दुकालशुद्धौ च जन्ममासेन्दुभाद्दते॥ रिक्तादर्शाऽष्टमीषष्ठीप्रतिपद्वर्ज्जिते सिते॥"
इति संस्कारतत्त्वधृतज्योतिषवचनम्॥
अस्य विशेषविवरणं चूड़ाकरणशब्दे द्रष्टव्यम्॥)

चूड़ाकरणं, क्ली, (चूड़ायाः करणं कर्म्म।) दशसंस्कारान्तर्गतसंस्कारविशेषः। तस्य क्रमो यथा। कुलाचारवशात् प्रथमे तृतीये वा वर्षे चूड़ाकरणं कर्त्तव्यम्। तत्र प्रथमं प्रातःकृतस्नानः कृतवृद्धिश्राद्धः पिता सत्यनामानमग्निं संस्थाप्य विरूपाक्षजपान्तां कुशण्डिकां समाप्याग्नेर्द्दक्षिणत एकविंशतिदर्भपिञ्जलीः सप्तसप्तभिरेकीकृत्य कुशान्तरेण वेष्टयित्वा उष्णोदकसहितं कांस्यपात्रं ताम्रनिर्म्मितक्षुरं तदभावे दर्पणं वा लौहक्षुरपाणिञ्च नापितं स्थापयेत् अग्नेरुत्तरतो वृषगोमयं तिलतण्डुलमाषमिश्रधान्यं अग्नेः पूर्व्वतो मिश्रितव्रीहियवतिलमाषपूरितपात्रत्रयं स्थापयेत्। माता शुचिना वस्त्रेण कुमारमाच्छाद्य क्रोड़े निधाय अग्नेः पश्चिमतो भर्त्तुर्व्वामपार्श्वे उत्तराग्रेषु कुशेषु प्राङ्मुखी उपविशति। ततः पिता प्रकृतकर्म्मारम्भे प्रादेशप्रमाणां घृताक्तां समिधं तूष्णीमग्नौ हुत्वा व्यस्तसमस्तमहाव्याहृतिहोमं कुर्य्यात्। प्रजापतिरृषिर्गायत्री छन्दोऽग्निर्द्देवता महाव्याहृतिहोमे विनियोगः। ओँ भूः स्वाहा। प्रजापतिरृषिरुष्णिक् छन्दो वायुर्द्देवता महाव्याहृतिहोमे विनियोगः। ओँ भुवः स्वाहा। प्रजापतिरृषिरनुष्टुप् छन्दः सूर्य्यो देवता महाव्याहृतिहोमे विनियोगः। ओँ स्वः स्वाहा। प्रजापतिरृषिर्बृहती छन्दः प्रजापतिर्द्देवता व्यस्तसमस्तमहाव्याहृतिहोमे विनियोगः। ओँ भूर्भुवः स्वः स्वाहा। ततः पिता उत्थाय प्राङ्मुखः कुमारस्य मातुः पश्चादवस्थितः क्षुरपाणिं नापितं पश्यन् तमेव सवितृरूपं ध्यायन् जपति। प्रजापतिरृषिः सविता देवता चूड़ाकरणे विनियोगः। ओम् आयमगात् सविता क्षुरेण। तत उष्णोदकसहितं कांस्यपात्रं पश्यन् वायुं मनसा ध्यायन् जपति। प्रजापतिरृषिर्वायुर्द्देवता चूड़ाकरणे विनियोगः। ओँ उष्णेन वाय उदकेनैधि। ततः कांस्यपात्रस्थितोष्णोदकेन दक्षिणहस्तगृहीतेन दक्षिणकपुष्णिकामनेन मन्त्रेण क्लेदयति। कपुष्णिकाशब्देन दक्षिणोत्तरतः शिखास्थानादधः शिरसः कर्णाभिमुखोच्चदेश उच्यते। ततः प्रजापतिरृषिरापो देवता चूड़ाकरणे विनियोगः। ओम् आप उन्दन्तु जीवसे। ततस्ताम्रक्षुरं तदभावे दर्पणं वा पश्यन् जपति। प्रजापतिरृषिर्व्विष्णुर्द्देवता चूड़ाकरणे विनियोगः। ओँ विष्णोर्दंष्ट्रोऽसि। ततः कुशवद्धसप्तदर्भपिञ्जलीर्गृहीत्वा क्लिन्नदक्षिणकपुष्णिकादेशे अनेन मन्त्रेण अग्रमूला निदध्यात्। प्रजापतिरृषिरोषधिर्द्देवता चूड़ाकरणे विनियोगः। ओम् ओषधे त्रायस्वैनम्। ततो वामहस्तगृहीतकुशपिञ्जलीसहितकपुष्णिकादेशे स्वदक्षिणहस्तगृहीतताम्रक्षुरं दर्पणं वा अनेन मन्त्रेण निदध्यात्। प्रजापतिरृषिः स्वधितिर्द्देवता चूड़ाकरणे विनियोगः। ओँ स्वधिते मैनं हिंसीः। ततः केशच्छेदो यथा न भवति तथा ताम्रक्षुरं दर्पणं वा तत्रैव कपुष्णिकादेशे अनेन मन्त्रेण प्रेरयेत्। प्रजापतिरृषिः पूषा देवता चूड़ाकरणे विनियोगः। ओँ येन पूषा बृहस्पतेर्वायोरिन्द्रस्य चावपत्तेन ते वपामि ब्रह्मणा जीवातवे जीवनाय दीर्घायुष्ट्वाय बलाय वर्चसे। तूष्णीं वारद्वयम्। ततो लौहक्षुरेण दक्षिणकपुष्णिकादेशस्य केशं छित्त्वा दर्भपिञ्जलीसहितकेशस्य बालमित्रविष्टतपात्रस्थवृषगोमयोपरि निधानं कुर्य्यात्। ततः कपुच्छलदेशस्य कांस्यपात्रस्थितोष्णोदकेन दक्षिणहस्तगृहीतेन पूर्व्ववदेव आप उन्दन्तु जीवसे इत्यनेन मन्त्रेण क्लेदनं ओँ विष्णोर्दंष्ट्रोऽसि इत्यनेन ताम्रक्षुरस्य दर्पणस्य वा प्रेरणं ओम् ओषधे त्रायस्वैनं इत्यनेन कपुच्छलदेशे ऊर्द्ध्वमूलदर्भपिञ्जलीनिधानं ओँ स्वधिते मैनं हिंसीरित्यनेन ताम्रक्षुरस्य दर्पणस्य वा कपुच्छलदेशे निधानं ओँ येन पूषा बृहस्पतेरित्यनेन पूर्व्वाभिमुखं ताम्रक्षुरप्रेरणं लौहक्षुरेण कपुच्छलदेशस्य केशं छित्त्वा दर्भपिञ्जलीसहितकेशस्य बालमित्रविष्टतपात्रस्थवृषगोमयोपरि निधानं कुर्य्यात्। कपुच्छलशब्देन पश्चिमतः शिखास्थानादधःशिरसो नापितक्रोड़ाभिमुखोच्चदेशोऽभिधीयते। तथैव वामकपुष्णिकाप्लावनादिच्छेदनपूर्व्वकं वृषगोमयोपरिदेशे निधानान्तं पूर्व्ववत् सर्व्वं कुर्य्यात्। ततः कुमारस्य शिरः पाणिभ्यामुपगृह्य जपति। प्रजापतिरृषिरुष्णिक् छन्दो जमदग्निकश्यपागस्त्यादयो देवताश्चूड़ाकरणे विनियोगः। ओँ त्र्यायुषं जमदग्नेः कश्यपस्य त्र्यायुषं अगस्त्यस्य त्र्यायुषं यद्देवानां त्र्यायुषं तत्तेऽस्तु त्र्यायुषम्। ततोऽग्नेरुत्तरदेशं नीत्वा पुष्पाद्यलङ्कृतो नापितः कुमारं मुण्डयति। सर्व्वमेव केशं वृषगोमयोपरि निधायारण्ये वंशविटपे स्थापयेत् ततः पूर्व्ववत् व्यस्तसमस्तमहाव्याहृतिहोमं कृत्वा तूष्णीं प्रादेशप्रमाणघृताक्तसमित्प्रक्षेपान्तप्रकृतं कर्म्म समाप्य उदीच्यं शाट्यायनहोमादिवामदेव्यगानान्तं कर्म्म निर्व्वृत्य कर्म्मकारयितृब्राह्म-

| छन्दसां इतिनामानि । | | छन्दसां लक्षणानि । | छन्दसामुदाहरणानि । |
|---|---|---|---|
| पज्झटिका | | प्रतिपदयमकितषोडशमात्रा नवमगुरुत्वविभूषितगात्रा । पज्झटिकावृत्तस्य विवेक क्वापि न मध्यगुरुर्गण एक ॥ | |
| प्रथमे चरणे | १६ | ॥।ऽऽऽऽऽऽ | तरलयतसादिरदकामबलपरमपज्झटिकाकटिबन्ध । |
| द्वितीये | १६ | ।।।ऽ।।ऽ।।ऽऽ | मौलिचपलशिखिचन्द्रकवृन्द चालयशिरसि नमति मुकुन्द ॥ |
| तृतीये | १६ | ऽ।।।।।ऽ।।ऽऽ | इय प्रतिपदयमकितषोडशमात्रा लघुगुरुव्यत्ययेनापि बहुधा |
| चतुर्थे | १६ | ऽ।।।।।ऽ।।ऽऽ | यस्या नवमी मात्रा च कदाचित् लघ्वी भवति ॥ |
| दोधकिका | | मात्रा चयोदशक यदि पूर्वं लघुकविरामि । पश्चादेकादशकन्तु दोधकिका द्विगुणेन ॥ | |
| प्रथमे चरणे | १३ | ऽऽऽ।।।।।। | माई दोधकिपठव शुचि झामिनी कारा गोयाल । |
| द्वितीये | १३ | ऽ।ऽऽ।ऽऽ। | हन्दावनवनकुञ्ज चलिलो कमलरसाल ॥ |
| तृतीये | ११ | ऽऽ।।।।ऽ। | अस्यार्थः । हे मातः । गोधडिकापाठ श्रुत्वा कश्चो गोपालो हरिता कमपि रसाल चलित कुञ्ज हन्दावनवन कुञ्जे हन्दावनस्य निविडनिकुञ्जे । राई इति क्वचित् पाठः |
| चतुर्थे | ११ | ।।ऽ।।।।ऽ। | तत्पक्षेन राधिकाया दोधडिकापाठ श्रुत्वा ॥ |
| अस्या अन्त्या मात्रा लघ्वी अप भ्रंशभाषया प्रचारः ॥ | | | गुरुलघुव्यत्ययेन बहुधा भवति ॥ |
| इति मात्रावृत्तानि समाप्तानि ॥*॥ | | | |

अत्र समवृत्तानि (२४७) सप्तचत्वारिंशदधिक द्विशतं, अर्द्धसमवृत्तानि (१५) पञ्चदश, विषमवृत्तानि (७) सप्त, मात्रावृत्तानि च (१५) पञ्चदश समुदायेन (२८४) चतुरशीत्यधिकद्विशतसंख्यकानि छन्दांसि लिखितानीति ॥ * ॥

छन्दकपालन पु (छन्दकेन छद्मना पालयति लोकानिति । पल+णिच+ल्यु ।) छद्म तापस । इति जटाधरः ॥

छन्दोग पुं (छन्दो वेदविशेष सामेत्यर्थं गाय तीति । गै+ गोपोष्टक । ३।२।८। इति टक ।) सामगः । सामवेदी । इति जटाधर ॥ (यथा, मनु । ३ । १४५ ।

यत्नेन भोजयेच्छ्राद्धे बह्वृच वेदपारगम् ।
शाखान्तगमथाध्वर्यु छन्दोगन्तु समाप्तिकम् ॥ )

छन्दोगपरिशिष्ट क्ली (छन्दोगस्य सामगस्य कात्यायनस्य मुनिनेत्यर्थ । प्रणीत यत परिशिष्टम् । यद्वा छन्दोगाय कृत परिशिष्टम् ।) कात्यायनमुनिकृत सामवेदिकर्म्मबोधकगोभिलसूत्रस्य परिशिष्टग्रन्थम् । इति स्मृति ॥

छन्दोविचिति स्त्री, (छन्दसां विचितिर्यत्र ।) श्रुतिच्छन्दसां प्रज्ञापक शास्त्रम् । इत्यमरटीकायां भरत ॥ (यथा वृहत्संहितायाम् । १ ८ ६८ ।

'निपुणमपि बुद्धा छन्दोविचितिं भवति काव्यमेवायत ।
शुचितरसरत्नमय ममाह वराहमिहिरोऽस्त ॥ )

छन्न त्रि (छद्+क्त ।) रह । निर्जनस्थानम् । इति मेदिनी । न ५ ॥

छन्न त्रि (छद्+क्त ।) छादित । इति मेदिनी । न ५ ॥ (यथा । यथा महाभारते । ४ । २० । ८४ ।

'न यथा त्वं स्यो वीर न यथा मम दारक ।
अहमन्त घोरैश्छन्नाजयाद्य मेनिकाश्च मे ॥ )
रह । इत्यमर । २ । ८ । २२ ॥

छप इ क यर्षे । इति कविकल्पद्रुम ॥ (चुरां परं सक सेट ।) इ क छम्पयति । कर्षो गति । इति दुर्गादास ॥

छम, उ भक्षे । इति कविकल्पद्रुमः । (भ्वां पर सक सेट । उदित्वात् क्त्वावेट ।) छमति । उ, छमित्वा छान्त्वा । इति दुर्गादास ॥

छमण्ड पुं (छमति भक्षयति अकस्मात् पितर मातरं गच्छतीत्यर्थः । छम+बाहुलकादण्डन् ।) अनाथ पिष्टक । इत्युणादिकोष ॥ छेमडा इति भाषा ॥ बन्धुहीन । इति सक्षिप्तसारे उणादिवृत्ति ॥

छर्द्द क वमने । इति कविकल्पद्रुमः । (चुरां परं सक सेट ।) वमनं वान्ति । क छर्दयति अन्न लोकः । इति दुर्गादास ॥ (तथाच, महाभारत । ५ । ८६ । ४२ ।

'स्वपन्ति च प्रवन्ति च छर्द्दयन्ति च मानवा ॥ )

छर्द क्ली (छर्द्द+भावे घञ् ।) वमनम् । इति हेमचन्द्र । ३ । १३३ ॥

छर्द्दन क्ली (छर्द्द+भावे ल्युट ।) वमनम् । इति हेमचन्द्र ॥ (यथा सुश्रुते । ४ । १० ।

तथास्तु मन्नानाचुविकोकोशातकीफलै ।
छर्द्दन मधुरान्निश्वासयका तण्डुलाम्बुना ॥ )

छर्दन पुं, (छर्दयति नरपक्षान्त्विक पालिता पुनरुद्गिरतीति । छर्द+ल्यु ।) अलम्बुषरावस । (छर्दयति कटुगन्धेन उद्गिरयतीति । छर्द+ल्युट ।) निम्बवृक्ष । इति हेमचन्द्र ॥ मदनवृक्ष । इति भावप्रकाश ॥

छर्दापनिका स्त्री (छर्द्द वमन आपयति प्रापयतीत्यर्थ । आप+णिच+ल्यु । तत स्वार्थे क । टापि अत इत्वश्च ) ककटी । इति राजनिर्घण्टः ॥

छर्द्दि स्त्री, (छर्द्दयत्यनेनेति । छर्द्द वमने+इन् ।) वमिरोग । वाँति इति भाषा । तत्पर्याय । प्रच्छर्दिका २ छर्द्दन ३ वमथु ४ वमनम ५ वमि ६ । इति हेमचन्द्र । ३ । १३३ ॥ छर्दिका ७ छर्दीका ८ वान्ति ९ उद्गार १० । इति राजनिर्घण्ट ॥ उत्कासिका ११ हृल्लास १२ । इति शब्दरत्नावली ॥ तस्या निदानादि यथा —

'दुष्टैर्दोषै पृथक्सर्वैर्बीभत्सालोकनादिभि ।
छर्द्दय पञ्च विज्ञेयास्तासां लक्षणमुच्यते ॥
अतिद्रवैरतिस्निग्धैरहृद्यैर्लवणैरति ।
अकाले चातिमात्रैश्च तथा सात्म्यैश्च भोजनै ॥
श्रमाद्भयात्तथोद्वेगादजीर्णात् क्रिमिदोषत ।
नार्याश्चापन्नसत्त्वायास्तथातिद्रुतमश्नत ॥
बीभत्सैर्हेतुभिश्चान्यैर्द्रुतमुत्क्लेशितो बलात् ।
छादयन्नाननं वेगैरर्दयन्नङ्गभञ्जनै ॥
निरुच्यते छर्द्दिरिति दोषो वक्त्र प्रधावित ॥"

तस्या पूर्वरूप यथा —

'हृल्लासोद्गाररोधौ च प्रसेको लवणस्तनु ।
द्वेषो भक्तपाने च वमीनां पूर्वलक्षणम् ॥

वातजायास्तस्या रूप यथा —

हृत्पार्श्वपीडामुखशोषमूर्द्ध-
नाभ्यर्त्तिकासस्वरभेदतोदै ।
उद्गारशब्दप्रबलं सफेन
विच्छिन्नकृष्णं तनुकं कषायम् ॥
कृच्छ्रेण चाल्प महता च वेगै
र्वार्त्तोऽनिलाच्छर्द्दयतीह दु खम् ॥

तथा पित्तजाया रूप यथा —

'मूर्च्छा पिपासा मुखशोषमूर्द्ध-
ताल्वक्षिसन्तापतमोभ्रमार्त्त ।

पीतं भृशोष्णं हरितं सतिक्तं
धूम्रञ्च पित्तेन वमेत् सदाहम् ॥”
ञ: श्लेष्मजाया रूपं यथा,—
“तन्द्रास्यमाधुर्य्यकफप्रसेक-
सन्तोषनिद्रारुचिगौरवार्त्तः ।
स्निग्धं घनं स्वादु कफानुविद्धं
सलोमहर्षोऽल्परुजं वमेत्तु ॥”
सान्निदोषजाया रूपं यथा,—
“शूलाविपाकारुचिदाहतृष्णा-
श्वासप्रमोहप्रबलाप्रसक्तम् ।
छर्द्दिस्त्रिदोषाल्लवणाम्लनील-
सान्द्रोष्णरक्तं वमतां नृणां स्यात् ॥”
द्धसाध्याया लक्षणं यथा,—
“विट्स्वेदमूत्राम्बुवहानि वायुः
स्रोतांसि संरुध्य यदोर्द्ध्वमेति ।
उत्सन्नदोषस्य समाचितं तं
दोषं समुद्धूय नरस्य कोष्ठात् ॥
विण्मूत्रयोस्तत्समगन्धवर्णं
तृट्श्वासहिक्कार्त्तियुतं प्रसक्तम् ।
प्रच्छर्द्दयेद्दुष्टमिहातिवेगा-
त्तयार्द्दितश्चाशु विनाशमेति ॥”
आगन्तुजाया लक्षणं यथा,—
“वीभत्सजा दौर्हृदजामजा तु
असात्म्यजा या क्रिमिजा च या हि ।
सा पञ्चमी तां च विभावयेच्च
दोषोच्छ्रयेणैव यथोक्तमादौ ॥”
क्रिमिजाया लक्षणं यथा,—
“शूलहृल्लासबहुला क्रिमिजा च विशेषतः ।
क्रिमिहृद्रोगतुल्येन लक्षणेन च लक्षिता ॥
क्षीणस्य या च्छर्द्दिरतिप्रसक्ता
सोपद्रवा शोणितपूययुक्ता ।
सचन्द्रिकां तां प्रवदेदसाध्यां
साध्यां चिकित्सेन्निरुपद्रवाञ्च ॥”
तस्या उपद्रवा यथा,—
“कासः श्वासो ज्वरो हिक्का तृष्णा वैचित्त्य-
मेव च ।
हृद्रोगस्तमकश्चैव ज्ञेयाश्छर्द्देरुपद्रवाः ॥”
इति माधवकरः ॥
तदौषधं यथा, गारुडे १८७ अध्याये ।
“अश्वगन्धाभया चैव उदकेन समं पिबेत् ।
हरीतकीकुष्ठचूर्णं लात्वा आस्यञ्च पूरयेत् ॥
शीतं पीत्वाथ पानीयं सर्व्वच्छर्द्दिनिवारणम् ।
गुडूचीपद्मकारिष्टधन्याकं रक्तचन्दनम् ॥
पित्तश्लेष्मज्वरच्छर्द्दिदाहतृष्णाघ्नमच्छितत् ॥”
अपिच ।
“विल्वमूलञ्च समधु गुडूचीक्वथितं जलम् ।
शीतं हरेच्च त्रिविधां छर्द्दिं वै नात्र संशयः ॥
पीता दूर्व्वा च्छर्द्दिं नश्येत् पिष्टा तण्डुलवारिणा ॥”
इति च गारुडे १६४ अध्यायः ॥*॥
अथ छर्द्दिचिकित्सा ।
“आमाशयोत्क्लेशभवा हि सर्व्वा-
श्छर्द्दो मता लङ्घनमेव तस्मात् ।
विधीयते मारुतजां विना तु
संशोधनं वा कफपित्तहारि ॥”
अत्र च्छर्द्दीशब्दः ।
“हन्यात् क्षीरोदकं पीतं छर्द्दिं पवनसम्भवाम् ।
मुद्गामलकयूषो वा ससर्पिष्कः ससैन्धवः ॥
क्षीरोदकं नाशितस्य क्षीरस्योदकम् ।
गुडूचीत्रिफलानिम्बपटोलैः क्वथितं जलम् ।
पिबेत् मधुयुतं तेन छर्द्दिर्नश्यति पित्तजा ॥
हरीतकीनां चूर्णन्तु लिह्यान्माक्षिकसंयुतम् ।
अधोमार्गीकृते दोषे छर्द्दिः शीघ्रं निवर्त्तते ॥
विड़ङ्गत्रिफलाविश्वाचूर्णं मधुयुतं पिबेत् ।
विड़ङ्गप्लवशुण्ठीनां चूर्णं वा कफजां वमिम् ॥
प्लवं कैवर्त्तीमुस्तं गुड़त्तणी इति लोके ।
पिष्ट्वा धात्रीफलं लाजान् शर्कराञ्च पलोन्मितान् ।
दत्त्वा मधुपलञ्चापि कुड़वं सलिलस्य च ॥
वाससा गालितं पीतं हन्ति छर्द्दिं त्रिदोषजाम् ।
गुड़ूच्या रचितं हन्ति हिमं मधुसमन्वितम् ॥
दुर्न्निवारामपि छर्द्दिं त्रिदोषजनितां बलात् ॥
एलालवङ्गगजकेशरकोलमज्जा-
लाजाप्रियङ्गुघनचन्दनपिप्पलीनाम् ।
चूर्णानि माक्षिकसितासहितानि लीढ्वा
छर्द्दिं निहन्ति कफमारुतपित्तजाताम् ॥
इति एलादिचूर्णम् ॥
अश्वत्थवल्कलं शुष्कं दग्धं निर्व्वापितं जले ।
तज्जलं पानमात्रेण छर्द्दिं जयति दुर्ज्जयाम् ॥
यथा त्रिकटुधान्याकजीरकाणां रजो लिहन् ।
मधुना नाशयेच्छर्द्दिमरुचिञ्च त्रिदोषजाम् ॥
विल्वत्वचो गुड़ूच्या वा क्वाथः क्षौद्रेण संयुतः ।
छर्द्दिं त्रिदोषजां हन्ति पर्पटः पित्तजां तथा ॥
आम्रास्थिविल्वनिर्यूहः पीतः समधुशर्करः ।
निहन्याच्छर्द्द्यतीसारं वैश्वानर इवाहुतिम् ॥
निर्यूहः क्वाथः ।
जम्ब्वाम्रपल्लवकृतं लाजरजःसंयुतं शीतम् ।
शमयति मधुना युक्तं वमिमतिसारं ज्वरार्त्ति-
सुग्राम् ॥
वीभत्सजां हृद्यतमैरिष्टैर्दौर्हृदजां फलैः ।
लङ्घनैरामजां छर्द्दिं जयेत् सात्म्यै रसात्मजाम् ॥
क्रमिहृद्रोगवच्चात्र क्रमिं क्रमिसमुद्भवाम् ।
तत्र तत्र यथा दोषं क्रियां कुर्य्याच्चिकित्सकः ॥
इति छर्द्यधिकारः ।” इति भावप्रकाशः ॥

**छर्द्दिः**, [स्] स्त्री, ( छर्द्दयति छर्द्द्यते इति वा । छर्द्द वमने + “अर्च्चिशुचिहुसृपिच्छादिछर्द्दिभ्य इसिः ।” उणां । २ । १०८ । इति इसिः । ) वमिः । इत्युणादिकोषः ॥ ( यथा, चरके चिकित्सास्थाने २६ अध्याये ।
“तदग्निवेशस्य वचो निशम्य
प्रीतो भिषक्श्रेष्ठ इदं जगाद ।
छर्द्दीं हि यानीह पुरोदितानि
विस्तारतस्तानि निबोध सम्यक् ॥”)

**छर्द्दिका**, स्त्री, (छर्द्दि + स्वार्थे कन् । स्त्रियां टाप् । यद्वा, छर्द्दिवतीति । छर्द्दि + ण्वुल् । टापि अत इत्वञ्च ।) छर्द्दिः । विष्णुक्रान्ता । इति राजनिर्घण्टः ॥

**छर्द्दिकारिपुः**, पुं, (छर्द्दिकाया रिपुः नाशक इत्यर्थः ।) क्षुद्रैला । इति शब्दचन्द्रिका ॥

**छर्द्दिघ्नः**, पुं, (छर्द्दिं हन्तीति । हन् + टक् ।) निम्बवृक्षः । इति रत्नमाला ॥ (निम्बशब्देऽस्य विवरणं ज्ञेयम् ॥)

**छलं**, क्ली, (छो + वृषादित्वात् कलच् । यद्वा, छल + अच् । ) स्खलितम् । शाठ्यम् । इति मेदिनी । ले, १७ ॥ ( यथा, मनुः । ८ । ४६ ।
“धर्म्मेण व्यवहारेण च्छलेनाचरितेन च ।
प्रयुक्तं साधयेदर्थं पञ्चमेन बलेन च ॥”
व्याजः । यथा, मार्कण्डेये । २५ । १० ।
“सा वै मदालसा पुत्त्रं बालसुल्लापभाषिणम् ।
उल्लापनच्छलेनाह रुदमानमविह्वरम् ॥”
तात्पर्य्यान्तरेण प्रयुक्तस्य शब्दस्यार्थान्तरेण कथनम् । यथा, न्यायसूत्रे । ५० ।
“वचनविघातोऽर्थविकल्पोपपत्त्या छलम् ॥”
“अर्थस्य वाद्यभिमतस्य यो विकल्पो विरुद्धः कल्पः अर्थान्तरकल्पनेति यावत् तदुपपत्त्या युक्तिविशेषेण यो वचनस्य वाद्युक्तस्य विघातो दूषणं तच्छलमित्यर्थः । वक्तृतात्पर्य्याविषयार्थ-कल्पनेन दूषणाभिधानमिति फलितम् । तात्-पर्य्याविषयत्वं विशेष्ये विशेषणे संसर्गे वा । यथा, नेपालादागतोऽयं नवकम्बलवत्त्वादित्यत्र नव-संख्यापरत्वकल्पनयाऽसिद्ध्यभिधानम् । प्रमेयं धर्म्मत्वादित्यत्र पुण्यत्वार्थकल्पनया भागासिद्ध्य-भिधानम् । वह्निमान् धूमादित्यत्र धूमावयवे व्यभिचाराभिधानम् । तत्त्रिविधम् । वाक्छलं सामान्यच्छलमुपचारच्छलञ्च ॥” “छलं नाम परिशठमर्थाभासमनर्थकं वाग्वस्तुमात्रमेव । तद्द्विविधं वाक्छलं सामान्यच्छलञ्च । तत्र वाक्-छलं नाम यथा कश्चिद्ब्रूयात् नवतन्त्रोऽयं भिषगिति भिषग् ब्रूयात् नाहं नवतन्त्र एकतन्त्रो-ऽहमिति । परो ब्रूयात् नाहं ब्रवीमि नव तन्त्राणि तवेति अपितु नवाभ्यस्तं ते तन्त्रमिति भिषग् ब्रूयात् न मया नवाभ्यस्तं तन्त्रं अनेक-शोऽभ्यस्तं मया तन्त्रमिति । एतद्वाक्छलम् । सामान्यच्छलं नाम यथा, व्याधिप्रशमनायौषध-मित्युक्ते परो ब्रूयात् सत् सत्प्रशमनायेति भवा-नाह सत्रोगः सदौषधं यदि च सत्प्रशमनाय भवति सत्कासः सत्क्षयः सत्सामान्यात् कासस्ते क्षयप्रशमनाय भविष्यतीति एतत्सामान्य-च्छलम् ॥” इति चरके विमानस्थाने अष्टमे अध्याये ॥)

**छल्लिः**, स्त्री, ( छदं छादनं लातीति । ला + बाहुलकात् किः ।) त्वक् । इति शब्दरत्नावली ॥ छाल इति भाषा ॥

**छल्ली**, स्त्री, (छदं छादनं लातीति । ला + किः । ततः कृदिकारादिति वा ङीष् । ) वीरुत् । सन्तानः । वल्कलम् । कुसुमविशेषः । इति मेदिनी । ले, १८ ॥

**छविः**, स्त्री, ( छ्यति रूपं करोति यद्वा छ्यति छिनत्ति दूरीकरोति मालिन्यादिकमिति । छो + “कृशृपृकटिपटिशौटिभ्य इन् ।” “छविस्थविकिकीदिवि ।”

ीरं स्नेहसमं दद्यात् शतावर्य्या रसं तथा ॥
ाम्रपात्रे दृढ़े चैव शनैर्म्मृद्वग्निना पचेत् ।
स्यौषधस्य कल्कस्य प्रत्येकं शुक्तिसम्मितम् ॥
ीवन्ती मधुकं द्राक्षाकाकोल्यौ नीलमुत्पलम् ।
ुस्तं सचन्दनं रास्ना पर्णिनीद्वयशारिवे ॥
ेदे द्वे च तथा कुष्ठं जीवकर्षभकौ शटी ।
ार्व्वी प्रियङ्गु त्रिफला नतं तालीशपद्मकौ ॥
एलापत्रं वरीनागजातीकुसुमधान्यकम् ।
ञ्जिष्ठा दाड़िमं दारु रेणुकं शैलवालुकम् ॥
विड़ङ्गं जीरकञ्चैव पेषयित्वा विनिक्षिपेत् ।
वस्त्रपूते च शीते च शर्कराप्रस्थसंयुतम् ॥
निधापयेत् स्निग्धभाण्डे आर्द्रे वा भाजने शुभे ।
अस्यौषधस्य सिद्धस्य शृणु वीर्य्यमतःपरम् ॥
देवदेवं नमस्कृत्य संपूज्य गणनायकम् ।
पिबेत् पाणितलं तस्य व्याधिं वीक्ष्यानु-
ानतः ॥
सर्व्ववातविकारेषु अपस्मारे विशेष... ।
उन्मादे पक्षघाते च आध्माने कोष्ठनिग्रहे ॥
कर्णरोगे शिरोरोगे बाधिर्य्ये चापतन्त्रके ।
भूतोन्मादे च गृध्रस्यां मोहारे चार्द्धितन्त्रे ॥
पार्श्वशूले च हृच्छूले वाह्यायामार्द्दिते तथा ।
वातकण्टकाद्दोगम्नक्रज्के गपङ्गुले ॥
क्रोष्टुशीर्षे तथा खञ्जे कुब्जे चाभाग्नि मिञ्जिने ।
अपतानेऽन्तरायामे रक्तपित्ते तथोरुगे ॥
आनाहेऽशोविकारेषु चातुर्थकज्वरेऽपि च ।
हनुग्रहे तथा शोषे चीयो चैवाववाहुके ॥
दण्डापतानके भग्ने दाहे चाक्षेपके तथा ।
जीर्णज्वरे विषे कुष्ठे शेफःस्तम्भे मदात्यये ॥
आढ्यवातेऽग्निमान्द्ये च वातरक्तगदेषु च ।
एकाङ्गरोगिणि चैव तथा सर्व्वाङ्गरोगिणि ॥
हस्तकम्पे शिरःकम्पे जिह्वाकम्पे जड़े भ्रमे ।
नीरेन्द्रिये नष्टशुक्रे शुक्रनिःसरणे तथा ॥
स्त्रीणां वातासृपाते च पटले चाक्षिस्पन्दने ।
एकाङ्गस्पन्दने चैव सर्व्वाङ्गस्पन्दने तथा ॥
नगादिपतिते वाते स्त्रीणामप्राप्तिहेतुके ।
आभिचारिकदोषे च धनसन्तापसम्भवे ॥
ये वातप्रभवा रोगा ये च पित्तसमुद्भवाः ।
शिरोमध्यगता ये च जन्तुपार्श्वादिसंस्थिताः ॥
मातृग्रहाभिभूतश्च शिशुर्येन्च विशुध्यति ।
प्रक्षीणवलमांसश्च न वर्त्मगमनक्षमः ॥
घृतेनानेन सिध्यन्ति वज्रशुक्तिरिवासुरान् ।
निहन्ति सकलान् रोगान् घृतं परमदुर्लभम् ॥
रसायनं वह्निवलप्रदञ्च
वपुःप्रकर्षं विदधाति रूपम् ।
दन्तावलेन्द्रेण समानतेजा
दीर्घायुषं पुत्रशतं करोति ॥
स्त्रीणां शतं गच्छति वातिरेकं
न याति तृप्तिं सरसः समाङ्गः ।
अपुत्रिणीपुत्त्रशतं करोति
शतायुषं कामसमं वलिष्ठम्
महद्घृतं नाम तु छागलाद्यं
विनिर्म्मितं वातनिषूदनञ्च ।
शिवं शुभं रोगभयापहञ्च
चकार हारीतमुनिर्व्विशिष्टः ॥
छागालवर्ज्जिताः पाके पुमांसं तत्र दापयेत् ।
मयूरी जम्बुकी छागी वीर्य्यहीनाः स्वभावतः ॥
भाषितं काशिराजेन छागमेव नपुंसकम् ॥”
घृतम् १६ शेर । क्वाथार्थं छागमांसपलम् १०० ।
पाकार्थं जलं शं ६४ । शेषः शं १६ । विल्वादि-
दशमूलं प्रपलम् १० । जलं शं ६४ । शेषः
शं १६ । अश्वगन्धा १०० पलम् । जलं शं ६४ ।
शेषः शं १६ । वाट्यालकं १०० पलम् ।
जलं शं ६४ । शेषः शं १६ । दुग्धं शं १६ ।
शतमूलीरसः शं १६ । कल्कार्थं जीवन्त्या-
दीनां जीरकपर्य्यन्तानां कल्कद्रव्याणां प्रं तो ४ ।
वस्त्रपूते शीते शर्करा शं २ । इति वृहच्छागलाद्यं
घृतम् । इति भैषज्यरत्नावली ॥
(“छागमांसं तुलार्द्धं स्यात् दशमूलं तथापरम् ।
तोयद्रोणे पचेद्धीमान् यावत् स्यादंशशेषितम् ॥
तैलप्रस्थद्वयञ्चैव क्षीरञ्चैव शतावरी ।
जीवनीयं ममधुकं वला रास्ना च शैलजम् ॥
मांसीस्याद्धिमतालीशनालुकावनवालुकम् ।
पृथक् पृथक् समादाय सर्व्वमेकत्र साधयेत् ॥
मञ्जिष्ठालोध्रलाक्षा च प्रत्येकं कुड़वान्वितम् ।
आढ़कञ्च जलञ्चैव विधिना च विपाचयेत् ॥
छागलाद्यमिदं तैलं हारीतेन महात्मना ।
पाने वस्तौ तथाभ्यङ्गे भोज्ये चैव प्रशस्यते ।
सर्व्वज्वरगदं हन्ति सन्धिमज्जास्थिजन्तथा ॥”
इति छागलाद्यं तैलम् ॥
इति वैद्यकस्नेहमालिकायां वातरोगाधिकारे ॥)

छागलान्त्रिका, स्त्री, (छागलान्त्री + संज्ञायां कन् । टापि पूर्व्वह्रस्वः ।) वृद्धदारकवृक्षः । इति राजनिर्घण्टः ॥

छागलान्त्री, स्त्री, (छागलं गन्तयतीति बाहुलकात् रक् ततो ङीप् ।) वृकः । इति राजनिर्घण्टः ॥

छागवाहनः, पुं, (छागेन आत्मानं वाहयतीति । वह + णिच् + ल्युः । यद्वा, छागो वाहनमस्य ।) अग्निः । इति त्रिकाण्डशेषः ॥

छागिका, स्त्री, (छागी + स्वार्थे कन् । ततः टापि पूर्व्वह्रस्वः ।) छागी । इति हेमचन्द्रः ।४।३४१ ॥

छागी, स्त्री, (छायते छिद्यते देवोपहारायेति । छो + “छापूखड़िभ्यः कित् ।” उणां ।१।१२४। इति गण् छागः ततः स्त्रियां जातौ ङीष् ।) छागमाता । वकरी इति पाँटी इति च भाषा । तत्पर्य्यायः । अजा २ पयस्विनी ३ भीरुः ४ मेध्या ५ गलेस्तनी ६ । इति राजनिर्घण्टः ॥ छागिका ७ मञ्जा ८ सर्व्वभक्ष्या ९ गलस्तनी १० । इति हेमचन्द्रः ॥ चुलुम्पा ११ । इति त्रिकाण्डशेषः ॥ सञ्जा १२ सुखविलुण्ठिका १३ । इति शब्दरत्नावली ॥ तद्दुग्धगुणाः । मधुरत्वम् । शीतलत्वम् । ग्राहित्वम् । दीपनत्वम् । रक्तपित्तविकारक्षयकासनाशित्वञ्च । यथा, राजनिर्घण्टे ।
“अजानां लघुकायत्वान्नानाद्रव्यनिषेवणात् ।
नात्यम्बुपानात् व्यायामात् सर्व्वव्याधिहरं पयः ॥”
कषायत्वम् । लघुत्वम् । अतीसारज्वरनाशित्वञ्च । यथा, भावप्रकाशे ।
“छागं कषायं मधुरं शीतं ग्राहि पयो लघु ।
रक्तपित्तातिसारघ्नं क्षयकासज्वरापहम् ॥
अजानामल्पकायत्वात् कटुतिक्तादिभक्षणात् ।
स्तोकाम्बुपानाद्व्यायामात् सर्व्वरोगापहं पयः॥’
तद्दधिगुणाः । उत्तमत्वम् । ग्राहित्वम् । लघुत्वम् । दोषत्रयापहत्वम् । श्वासकासार्शःक्षयकार्श्येषु शस्तत्वम् । दीपनत्वञ्च । इति भावप्रकाशः ॥ कफवातनेत्रदोषदुर्नामश्वासकासनाशित्वम् । उष्णत्वम् । रुच्यत्वम् । पाचनत्वञ्च ॥ तन्नवनीतगुणाः । लघुत्वम् । मधुरत्वम् । कषायत्वम् । त्रिदोषनाशित्वम् । चक्षुष्यत्वम् । दीपनत्वम् । पथ्यत्वम् । सदा हितत्वञ्च ॥ तन्नवोत्थनवनीतगुणाः । क्षयकासनेत्रामयकफनाशित्वम् । वल्यत्वम् । परमदीपनत्वञ्च ॥ तद्घृतगुणाः । चक्षुष्यत्वम् । दीपनत्वम् । वलवर्द्धनत्वम् । कासश्वासकफनाशित्वम् । राजयक्ष्मणि शस्तत्वञ्च । इति राजनिर्घण्टः ॥

छातः, त्रि, (छो + क्तः । “शाच्छोरन्यतरस्याम् ।” ७ । ४ । ४१ । इति विभाषायामित्वाभावः ।) छिन्नः । दुर्व्वलः । इत्यमरः । ३ । १ । १०३ ॥

छात्रं, क्ली, वरटीछत्रसम्भवं मधु । तस्य गुणाः । श्वित्रक्रिमिरोगरक्तपित्तनाशित्वम् । गुरुत्वञ्च । इति राजवल्लभः ॥
(“वरटाः कपिलाः पीताः प्रायो हिमवतो वने ।
कुर्व्वन्ति छत्रकाकारं तज्जं छात्रं मधु स्मृतम् ॥”
छात्रं कपिलपीतं स्यात् पिच्छिलं शीतलं गुरु ।
स्वादुपाकं क्रिमिश्वित्ररक्तपित्तप्रमेहजित् ।
भ्रमतृण्मोहविषहृत् तर्पणञ्च गुणाधिकम् ॥”
इति भावप्रकाशस्य पूर्व्वखण्डे द्वितीये भागे ॥)

छा(त्त)त्रः, पुं, (छत्रं गुरोर्दोषाणामावरणं तच्छीलमस्येति । “छत्रादिभ्यो णः ।” ४ । ४ । ६२ । इति णः ।) शिष्यः । इत्यमरः । २ । ७ । ११ ॥ (यथा, राजतरङ्गिण्याम् । ६ । ८७ ।
“भूभुजा दानशौण्डेन येत्रिके स्वण्डिते कृतः ।
छात्त्राणामार्य्यदेश्यानां तेन विद्यार्थिनां मठः ॥”)

छात्रकं, क्ली, (छात्र + स्वार्थे कन् ।) छात्रं मधु । यथा, राजनिर्घण्टे ।
“छत्राकारन्तु पटलं सरघाः पीतपिङ्गलाः ।
ये कुर्व्वन्ति तदुत्पन्नं मधु छात्रकमीरितम् ।
श्वित्रमेहकृमिघ्नञ्च विद्याच्छात्रं गुणोत्तरम् ॥”
अपिच भावप्रकाशे ।
“वरटाः कपिलाः पीताः प्रायो हिमवतो वने ।
कुर्व्वन्ति छत्रकाकारं तज्जं छात्रं मधु स्मृतम् ॥
छात्रं कपिलपीतं स्यात् पिच्छिलं शीतलं गुरु ।
स्वादुपाकं कृमिश्वित्ररक्तपित्तप्रमेहजित् ॥
भ्रमतृड़्मोहविषहृत्तर्पणञ्च गुणाधिकम् ॥”

छात्रगण्डः, पुं, (छात्रो गण्ड इव ।) पदाद्यवित् । विभक्त्यन्तस्य श्लोकचरणस्य वा आदिमात्रवेत्ता ।

भूमौ शङ्कुघात प्रभया विभक्त
प्रजायते दीपशिखौच्यमेवम् ॥
त्रैराशिकेनैव यदेतदुक्त
व्याप्त स्वभेदैर्हरिणेव विश्वम् ॥

उदाहरणम् ।
शङ्कोर्भार्कमिताङ्गुलस्य सुमते दृष्टा किलाद्यङ्गुला
छायाग्राभिमुखे करद्वयमिते न्यस्तस्य दीपे प्रभ ।
तस्येशार्कमिताङ्गुला यदि तदा छायाप्रदीपान्तर
दीपौच्यञ्च कियद्भवद्वदति छायाभिधां वेत्सि चेत् ॥

न्यास




भू $\frac{१३}{३}$ छा $\frac{१}{३}$ भू २ छा $\frac{१}{२}$

अत्र छायाग्रयोरन्तरमङ्गुलात्मकम् । ५२ । छाये च । ८ । १२ । अनयोरन्तरं । ८ । इष्टमनेन । ५२ । गुणिता । ४१७ । छायाप्रमाणान्तरेण । ४ । भक्ता लब्धं भूमानम् । १०४ । इह प्रथमछायाग्रदीपतलयोरन्तरमित्यर्थः । एवं द्वितीयच्छायायमानम् ।१५६। भूशङ्कुघात प्रभया विभक्त इति जातमुभयतोऽपि दीपौच्य सममेव हस्ता ६ $\frac{१}{२}$ ।

एवमित्यं छायाव्यवहारे त्रैराशिककल्पनया नयन वर्तते तद्यथा । प्रथमच्छायातो द्वितीयच्छाया १० । यावताधिका तावता छाया वयवन यदि छायाग्रान्तरतुल्याभलभ्यते तदा छायया किमिति एव पृथक पृथक छाया प्रदीपतलान्तरप्रमाण लभ्यते । ततो द्वितीय त्रैराशिक यदि छायातुल्ये भुजे शङ्कु कोटि स्तदा भूतुल्ये भुजे किमिति लब्ध दीपकौच्य मुभयत्रापि तुल्यमेव । एव पञ्चराशिकादिक मखिल त्रैराशिककल्पनयैव सिद्ध यथा भगवता श्रीनारायणेन जननमरणलक्षणप्रापहारिणा निखिलजगज्जननैकवीजेन सकलभुवनभावनेन निरिमितिनिमुरनरासुरादिभि स्वभेदैरिदं जगद्व्याप्त तद्वत् सकलमिदं गणितजातं त्रैराशिकेन व्याप्त यद्येव तदबहुभि किमित्याशङ्क्याह ।
यत्किञ्चिद्गुणभागहारविधिना वीजेऽत्र वा गण्यते
तत त्रैराशिकमेव निर्मलधिया मेवावगम्य विज्ञम् ।
एतद्यद्बहुधास्मदादिजडधीधीवृद्धिवृद्ध्या बुधै
स्तद्भेदान् सुगमान् विधाय रचित प्राज्ञै प्रकीर्णादिकम् ॥
इति श्रीभास्कराचार्यविरचितायां लीलावत्यां छायाव्यवहार समाप्ततामगात् ॥

छायाभृत्, पुं, (छायां छायारूपमृगलाञ्छन यद्वा छायां शीतलकान्ति विभर्त्तीति । भृ+क्विप ।) चन्द्र । इति हेमचन्द्र । २ । १६ ॥

छायामित्र क्ली, (छायया छायाकरणेन मित्र मिव छायाया मित्रमिति वा ।) छत्रम् । इति शब्दरत्नावली ॥

छायामृगधर, पु (छाया छायारूप एव मृगस्त धरतीति । धृ+अच । छायामृगस्य धरो वा ।) चन्द्र । इति त्रिकाण्डशेष ॥

छायासुत, पुं (छायाया सूर्यपत्न्या सुत पुत्र ।) शनि । इति हेमचन्द्र । २ । ३४ ॥

छि, पुं, (छ्यति छिनत्ति कौर्ष्यादिक नाशयती त्यर्थ । छो+बाहुलकात् कि ।) गह्वा । इत्येकाक्षरकोष ॥

छिक्कनी, स्त्री, (छिक इत्यव्यक्तशब्द कनत्यनया । कन्+करणे ल्युट ततो ङीष ।) क्षुप विशेष । छिक्कनी इति नाकछिकनी इति हाँचोटी इति च भाषा ॥ तत्पर्याय । घ्राण कृत २ तिक्ता ३ छिक्किका ४ घ्राणदुःखदा ५ । अस्या गुणा । कटुत्वम् । रुच्यत्वम् । तीक्ष्णत्वम् । उष्णत्वम् । वह्निपित्तकारित्वम् । वातरक्तकुष्ठक्रिमिवातकफनाशित्वञ्च । इति भावप्रकाश ॥

छिक्का, स्त्री, (छिमित्यव्यक्तशब्देन कायतीति । कै+क । ततष्टाप ।) क्षुतम् । इति शब्दरत्नावली ॥ हिँक इति हिन्दी भाषा । (यथा गारुडे ज्योतिश्चक्र ६० अध्याये ।
'छिक्काया लक्षण वक्ष्ये स्वमेन पूर्वे महाफलम् ।
आग्नेये शोकसन्तापौ दक्षिणे हानिमाप्नुयात् ॥
नैरृते शोकसन्तापौ मिष्टान्नञ्चैव पश्चिमे ।
धनं प्राप्नोति वायव्ये उत्तरे कलहो भवेत् ।
ऐशाने मरण प्रोक्त प्रोक्त छिक्काफलाफलम् ॥')

छिक्किका स्त्री (छिक्का क्षुत साधनत्वेनास्त्यस्या । बाहुलकात ठन् ।) छिक्कनी । इति भावप्रकाश ॥ छिदवकत्ता ॥

छित [द] त्रि (छिनत्तीति । छिद्+क्विप ।)

छित त्रि (छायते स्मेति । छो+क्त । 'शाच्छोरन्यतरस्याम् ।' ७।४।४१ । इतौ ।) छिन्नम् । इत्यमर । ३ । १ । १०३ ॥

छित्ति पु (छिद्+क्तिन् ।) करजश्च । इति शब्दचन्द्रिका ॥ छेदश्च ॥

छित्वर त्रि (छिनत्तीति । छिद्+'छित्वर छत्वरेति । उणा । ३ । १ । इति ष्वरच प्रत्ययेन निपातनात साधु ।) छेदनद्रव्यम् । धूर्त्त । वैरी । इत्युणादिकोष ॥

छिद इ र ध अ आ छेदे । इति कविकल्पद्रुम ॥ (रुधां-उभ सक अनिट् ।) छेदो द्विधाकरणम् । इर अच्छिदत् अच्छैत्सीत् । ध अ छिनत्ति छिन्ते काष्ठं लोक । औ छेत्ता । इति दुर्गादास ।

छिदक स्त्री (छिनत्तीति । छिद्+वुन् ।) वज्रम् । इत्युणादिकोष ॥

छिदा, स्त्री (छिद्+"षिद्भिदादिभ्य ।" ३ । ३ । १०४ । इत्यङ ततष्टाप ।) छेदनम् । इति मुग्धबोधम् ॥

छिदि स्त्री, (छिद्यतेऽनया इति । छिद्+'कृपि कुटिभिदिच्छिदिभ्यश्च ।' उणा । ४ । १४२ । इति इ स च कित ।) कुठार । इत्युणादिवृत्ति ॥

छिदिर, पु (छिनत्त्यनेनेति । छिद्+'इषिमिदि मुदिखिदिच्छिदीति ।' उणा । १ । ५१ । इति किरच ।) करवाल । परशुध । पावक । रज्जु । इति मेदिनी । रे, १५५ ॥

छिदुर पु (छिनत्तीति । छिद्+ विदिभिदिच्छिदे कुरच ।" ३।२।१६२ । इति कुरच ।) छेदनद्रव्यम् । धूर्त्त । वैरी । इति मेदिनी । रे १५६ ॥ (स्वय छिन्ने, त्रि । यथा रघु । १६।६२ ।
"मलभ्यते न छिदुरोऽपि हार ।" )

छिद्र, तु क भेदे । इति कविकल्पद्रुम ॥ (अदन्त चुरां पर सक सेट ।) भेद इह रन्ध्रकरणम् । छिद्रयति छिद्रापयति भाण्डं बालक । इति दुर्गादास ॥

छिद्र, क्ली, (छिद्यते भिद्यते यत् । छिन्दी छेदने+'स्फायितञ्चिवञ्चीति ।' उणा । २।१३ । इति रक ।) भद्र । छेँदा इति भाषा । तत्पर्याय । कुहरम् २ शुषिरम् ३ विवरम् ४ बिलम् ५ निर्व्यथनम् ६ रोकम् ७ रन्ध्रम् ८ श्वभ्रम् ९ वपा १० शुषि ११ । इत्यमर । १ । ८ । २ ॥ खम् १२ सुषी १३ । इति तट्टीका ॥ (यथा महाभारते । ३।८२।५३ ।
"ततो गच्छेत धर्मज्ञ । हिमवत्सुतमर्बुदम् ।
पृथिव्यां यत्र वै छिद्र पूर्वमासीत युधिष्ठिर ॥")
दूषणम् । इति मेदिनी । रे, ३८ ॥ (यथा महाभारते । २ । १२ । २९ ।
'बहुविघ्नञ्च नृपते । क्रतुरेष स्मृतो महान् ।
छिद्राण्यस्य तु वाञ्छन्ति यज्ञघ्ना ब्रह्मराक्षसा ॥'
अवकाश । नवमसंख्या । इति ज्योतिषम् ॥ लग्नादष्टमस्थानम् । 'छिद्राख्यमष्टम स्थानमिति ।' इति ज्योतिस्तत्त्वम् ॥)

छिद्रवैदेही स्त्री, (छिद्रप्रधाना वैदेही पिप्पली ।) गजपिप्पली । इति राजनिर्घण्ट ॥

छिद्रात्मा [न्] पु (छिद्रमन्तर्मध्ये यस्य ।) नल । इति राजनिर्घण्ट ॥

छिद्राफल, क्ली (छिद्र दूषणमाफलतीति । आ+फल+अच ।) मायाफलम् । इति राजनिर्घण्ट ॥

छिद्रित त्रि (छिद्र+इत ।) कृतछिद्र । तत्पर्याय । वेधित २ विद्ध ३ । इत्यमर । ३ । १ । ९९ ॥

छिन्न त्रि (छिद्यते स्म इति । छिद्+क्त ।) कृतच्छेदनम् । छेँदा इति काटा इति च भाषा । तत्पर्याय । छातम् २ लूनम् ३ कृत्तम् ४ दातम् ५ दितम् ६ छितम् ७ वृक्णम् ८ । इत्यमर । ३।१।१०१ । करम् ९ छादितम् १० । इति जटाधर । छेदितम् ११ खण्डितम् १२ । इति हेमचन्द्र ॥ (यथा मार्कण्डेये । ८० । ११ ।

"छिन्ने धनुषि दैत्येन्द्रस्तथा शक्तिमथाददे ॥"४॥ मन्त्रविशेषः, पुं। तल्लक्षणादिकं यथा, विश्वसारे।
"मनोर्यस्यादिमध्यान्तेष्वानिलं बीजमुच्यते।
संयुक्तं वा वियुक्तं वा पराक्रान्तस्त्रिधा पुनः॥
चतुर्धा पञ्चधा वापि स मन्त्रश्छिन्नसंज्ञकः॥")

छिन्नग्रन्थिनिका, स्त्री, (छिन्ना ग्रन्थिनी। संज्ञायां कन् ततष्टाप् पूर्व्वह्रस्वश्च।) चिपर्णिका। इति राजनिर्घण्टः॥

छिन्नपत्री, स्त्री, (छिन्नं पत्रं यस्याः। स्त्रियां ङीष्।) अम्बष्ठा। इति राजनिर्घण्टः॥ (विवरणमस्या अम्बष्ठाशब्दे ज्ञेयम्।)

छिन्नमस्ता, स्त्री, (छिन्नं मस्तं शिरो यस्याः।) दशमहाविद्यान्तर्गतषष्ठमहाविद्या। सा च प्रचण्डचण्डिका। यथा,—
"प्रचण्डचण्डिकां वक्ष्ये सर्व्वकामफलप्रदाम्।
यस्याः प्रसादमात्रेण सदाशिवो भवेन्नरः॥
अपुत्त्रो लभते पुत्त्रं अधनो धनवान् भवेत्।
कवित्वञ्च सुपाण्डित्यं लभते नात्र संशयः॥"
अथ प्रचण्डचण्डिकामन्त्रः। विश्वसारे आमले च।
"लक्ष्मीं लज्जां ततो मायां मात्रां द्वादशिकामपि।
वज्रवैरोचनीये द्वे मावे फट्स्वाहया युतः॥
लक्ष्मीबीजं यदाद्यं स्यात् तदा श्रीः सर्व्वतोमुखी।
लज्जाबीजेन चाद्येन वश्यतां यान्ति योषितः॥
मायाबीजेन चाद्येन महापातकनाशनम्।
मात्रां द्वादशिकां बीजमाद्यं स्वाम्युक्तिदायकम्॥
भैरवोऽस्य ऋषिर्देवि! सम्राट् छन्द उदीरितम्।
छिन्नमस्ता स्मृता देवी बीजं कूर्च्चद्वयं पुनः॥
स्वाहा शक्तिरभीष्टार्थे विनियोग उदाहृतः॥"
"अत्र लज्जापदं कामबीजपरम्। तथा च।
अत्र लज्जापदे देवि! कामबीजं वितन्यते।
महाकालमतं ज्ञेयं मन्त्रोद्धारं शुभावहम्॥"
पूर्व्वमायापदे इति पाठे मायायाः पूर्व्वं लज्जाबीजं तस्मिन्नित्यर्थः। तथा च। पूर्व्वमायापदेन लज्जाबीजमुच्यते। अन्यथा तापिन्यादिविरोधः। तथा च।
"कामाद्यां वाग्भवाद्यां वा मायाद्यां वा जपेत् सुधीः।
लज्जाद्यां वा जपेद्विद्यां चतुर्व्वर्गफलप्रदाम्॥
अन्येषाञ्च मुनीनां मते सर्व्वत्र मायापदं कूर्च्चपरम्। तत्रैव।
वान्तं वह्निसमायुक्तं रतिविन्दुसमन्वितम्।
लक्ष्मीबीजमिदं प्रोक्तं सर्व्वकामार्थसिद्धये॥
नामाक्षिवह्निसंयुक्तं विन्दुनादविभूषितम्।
शिवबीजं महेशानि! लज्जाबीजमुदाहृतम्॥
ईशानमुद्धृत्य पुरारिबीजं
सविन्दुकं नादविभूषितञ्च।
सवामकर्णं परितः प्रकल्प्य
मायां वदन्तीह मनीषिणस्ताम्॥
द्वादशस्वरवर्णं स्यात् नादविन्दुविभूषितम्।
वाग्भवं बीजमित्युक्तं सर्व्ववाक्यविशुद्धये॥
इति मन्त्रे चतुर्ब्बीजव्याख्यानात् अयन्तु समीचीनः। भैरवमते तु माया भुवनेश्वर्य्येव॥
लक्ष्मीः प्रथमबीजेऽस्ति लज्जाबीजे मनोभवः।
तृतीयेऽस्मिन् सदा देवी महापातकनाशिनी॥
चतुर्थे तु गुणातीता मुक्तिविद्याप्रदायिका।
वकारे वरुणः साक्षात् जकारे तु सुराधिपः॥
रेफे हुताशनो देवो वकारे वसुधाधिपः।
ऐकारे त्रिपुरा देवी रेफे त्रिपुरसुन्दरी॥
त्रैलोक्यविजया देवी सदैवौकारसंस्थिता।
चकारे चन्द्रमा देवो नकारे हि विनायकः॥
ईकारे कमला साक्षात् यकारे च सरस्वती।
मायायुग्मे महा देवी प्रकृत्या सह सङ्गता॥
वैखरी चैव फट्कारे स्वाकारे कुसुमायुधः।
हाकारे च रतिस्तिष्ठेदेवं मन्त्रसमुच्चयः॥"
इति व्याख्यानाच्च॥ ५ ॥
अस्याः पूजाप्रयोगः।
प्रातःकृत्यादिकं कृत्वा मन्त्राचमनं कुर्य्यात्। यथा,—
"लक्ष्मीमायाकूर्च्चबीजैस्त्रिभिः पीत्वाम्बु साधकः।
वाग्भवेनौष्ठौ संमृज्य मायाभ्यान्तु द्विरुन्मृजेत्॥
कूर्च्चेन क्षालयेत् पाणी एभिर्मन्त्रैश्च विन्यसेत्।
श्रीमायाकूर्च्चवाक्कामत्रिपुटाभुवनेश्वरैः॥
कामकलाङ्कुशाभ्याञ्च वक्त्रनासाक्षिकर्णकान्।
नाभिहृन्मस्तकं चांसौ स्पृष्ट्वा शम्भुर्भवेत् क्षणात्॥
आचम्यैवं छिन्नमस्तां वज्ररात्रीं प्रपूजयेत्॥
ततः प्राणायामान्तं विधाय षोढान्यासं कुर्य्यात्।
मन्त्रषोढां ततः कुर्य्यात् त्रैलोक्यवशकारिणीम्।
श्रीबालात्रिपुटायोनिप्रासादप्रणवैस्तथा॥
कालीवध्वङ्कुशैः कामकलाकूर्च्चात्मकैः क्रमात्।
षोडशीमनुवर्णैश्च पृथगष्टादशाक्षरैः॥
एभिर्बीजैर्म्मातृकार्णान् स्वेषु स्थानेषु विन्यसेत्।
एषा ब्रह्मस्वरूपा हि बीजषोढा प्रकीर्त्तिता॥
अस्याः संन्यासनात् सर्व्वे वशवर्त्तिनो भवन्ति हि।
सर्व्वैश्वर्य्ययुतास्ते हि जीवन्मुक्ता दशाब्दतः॥"६॥
तत ऋष्यादिन्यासः।
अस्य मन्त्रस्य भैरव ऋषिः सम्राट् छन्दः छिन्नमस्ता देवता हुंकारद्वयं बीजं स्वाहा शक्तिरभीष्टार्थसिद्धये विनियोगः। यथा, शिरसि भैरवऋषये नमः। मुखे सम्राट्छन्दसे नमः। हृदि छिन्नमस्तायै देवतायै नमः। गुह्ये हूँ हूँ बीजाय नमः। पादयोः स्वाहाशक्तये नमः॥ ततः कराङ्गन्यासौ। ओम् आं खड्गाय हृदयाय स्वाहा। इति कनीयसि। ओम् ईं सुखड्गाय शिरसे स्वाहा। इति पवित्राङ्गुलयोः। ओम् ऊं सुवज्राय शिखायै स्वाहा। इति मध्यमयोः। ओम् ऐं पाशाय कवचाय स्वाहा। इति तर्ज्जन्योः। ओम् औं अङ्कुशाय नेत्रत्रयाय स्वाहा। इत्यङ्गुष्ठयोः। ओम् अः सुरक्षरक्षासुरक्षायास्त्राय फट्। इति करतलपृष्ठयोः। एवं हृदयादिषु। तदुक्तं भैरवतन्त्रे।
"उद्धरेत् पूर्व्वमाकारं विन्दुलाञ्छितमस्तकम्।
खड्गाय हृदयायेति स्वाहायुक्तं कनीयसि॥
ईंकारञ्च ततो देवि! चन्द्रकोटिसमप्रभम्।
सुखड्गाय ततो वाच्यं शिरसे तदनन्तरम्॥
स्वाहायुक्तं ततो वाच्यं पवित्राङ्गुलिसंयुतम्।
ऊकारञ्च ततो वाच्यं विन्दुलाञ्छितमस्तकम्॥
सुवज्राय ततो वाच्यं शिखायै तदनन्तरम्।
स्वाहान्तं मध्यमायाञ्च विन्यसेत्तदनन्तरम्॥
मात्रां द्वादशिकां देवीं विन्यसेच्च ततः परम्।
पाशायेति समुच्चार्य्य प्रवदेत् कवचाय च॥
स्वाहान्तं विन्यसेन्मन्त्रं तर्ज्जन्यां तदनन्तरम्।
औकारञ्च ततो देवि! चाङ्कुशं तदनन्तरम्॥
नेत्रत्रयाय स्वाहान्तमङ्गुष्ठे करयोर्द्वयोः।
अकारञ्च विसर्गान्तं सुरक्षारक्षसंयुतम्॥
सुरक्षायसंयुक्तं अस्त्रायेति ततः परम्।
फट्कारसमायुक्तं विन्यसेत् करयोर्द्वयोः॥
हृदि मूर्द्धि शिखायाञ्च कवचे नेत्रमस्त्रके।
यावदस्त्रं चतुर्दिक्षु विदिक्षु च यथाक्रमम्॥"
विशाखिनतन्त्रे भैरववाक्यम्।
"उद्धरेत् प्रणवं पूर्व्वमाकारं विन्दुसंयुतम्।"
इत्यादिवाक्यात् कराङ्गेषु प्रणवसम्बलितो न्यासः। ततो मन्त्रेण मस्तकादिपादपर्य्यन्तं पादादिमस्तकपर्य्यन्तं वारत्रयं न्यसेत्॥ *॥
ततो ध्यानम्।
"स्वनाभौ नीरजं ध्यायेदर्कं विकसितं सितम्।
तत्पद्मकोषमध्ये तु मण्डलं चण्डरोचिषः॥
जवाकुसुमसङ्काशं रक्तबन्धूकसन्निभम्।
रजःसत्त्वतमोरेखायोनिमण्डलमण्डितम्॥
मध्ये तु तां महादेवीं सूर्य्यकोटिसमप्रभाम्
छिन्नमस्तां करे वामे धारयन्तीं स्वमस्तकम्॥
प्रसारितमुखीं देवीं लेलिहानाग्रजिह्विकाम्।
पिबन्तीं रौधिरीं धारां निजकण्ठविनिर्गताम्॥
विकीर्णकेशपाशाञ्च नानापुष्पसमन्विताम्।
दक्षिणे च करे कर्त्रीं मुण्डमालाविभूषिताम्॥
दिगम्बरीं महाघोरां प्रत्यालीढपदे स्थिताम्।
अस्थिमालाधरां देवीं नागयज्ञोपवीतिनीम्॥
रतिकामोपरिष्ठाच्च सदा ध्यायन्ति मन्त्रिणः।
सदा षोडशवर्षीयां पीनोन्नतपयोधराम्
विपरीतरतासक्तौ ध्यायेद्रतिमनोभवौ।
डाकिनीवर्णिनीयुक्तां वामदक्षिणयोगतः॥
देवीगलोच्छलद्रक्तधारापानं प्रकुर्व्वतीम्।
वर्णिनीं लोहितां सौम्यां मुक्तकेशीं दिगम्बरीम्।
कपालकर्त्तृकाहस्तां वामदक्षिणयोगतः।
नागयज्ञोपवीताढ्यां ज्वलत्तेजोमयीमिव॥
प्रत्यालीढपदां दिव्यां नानालङ्कारभूषिताम्।
सदा द्वादशवर्षीयामस्थिमालाविभूषिताम्॥
डाकिनीं वामपार्श्वे तु कल्पसूर्य्याग्निलोपमाम्।
विद्युज्जटां त्रिनयनां दन्तपंक्तिबलाकिनीम्॥
दंष्ट्राकरालवदनां पीनोन्नतपयोधराम्।
महादेवीं महाघोरां मुक्तकेशीं दिगम्बरीम्॥
लेलिहानमहाजिह्वां मुण्डमालाविभूषिताम्।
कपालकर्त्तृकाहस्तां वामदक्षिणयोगतः॥
देवीगलोच्छलद्रक्तधारापानं प्रकुर्व्वतीम्।
करस्थितकपालेन भीषणेनातिभीषणाम्॥

अग्निमभ्यर्च्य मन्त्रेण हुत्वा चाज्याहुतीः शतीः ।
चक्रशङ्खगदादीनि मुद्रास्यग्नौ प्रतापयेत् ॥
ततस्तैरेवायाज्य तान्यभ्यर्च्य प्रणम्य च ।
गुरुं तथाच सवन्द्य भक्त्या विज्ञापयेदिदम् ॥
उच्छिष्टभोजनादेव किङ्करः शरणागतः ।
तस्य चक्रगदादीनि तवाङ्गानीश धारये ॥ इति ।
अथ चक्रादीनामावाहनादिमन्त्रः ।
ओम् नमो भगवते सुदर्शनाय निखिलसकल-
रिपुध्वंसनाय भगवन्नारायणकराम्भोरुहग्रं
दुर्ललिताय ।
एह्येहि त्वं सहस्रार चक्रराज सुदर्शन ॥
यज्ञभागं प्रगृह्णस्व पूजाश्चैव नमो नमः ॥
ओम् नमो भगवते पाञ्चजन्याय विष्णुमुखाय
गम्भीरधीरध्वन्याकुलीकृतकौरवशाहिर्नीनाथाय
चिरेत्साच्छिन्नार्णवाय निष्प्रसादाय ।
एह्येहि पाञ्चजन्य । त्वं नारायणकरस्थित ॥
यज्ञभागं प्रगृह्णस्व पूजाश्चैव नमो नमः ॥
ओम् ऐ ग म न पाञ्चजन्याय नमः ॥ ओम्
भगवते खड्गाय नन्दकाय त्रैलोक्यपाविताय
जयिने सकलसुरासुरसुन्दरीनेत्रोत्पलार्चिताय ।
एह्येहि खड्गरत्न । त्वं नन्दकाख्य सुरार्चित ॥
यज्ञभागं प्रगृह्णस्व पूजाश्चैव नमो नमः ॥
ओम् खड्गाय नमः ॥ ओम् नमो भगवत्यै
कौमोदक्यै गदायै दानवकुलविध्वंसनायै भगवद्-
भट्टारकशाहृद्वलालितायै ।
एह्येहि त्वं गदे देवि कौमोदक्यायुधेश्वरि ॥
यज्ञभागं प्रगृह्णस्व पूजाश्चैव नमो नमः ॥
ओम् ऐ ख च क स गदायै नमः ॥ एवं पद्माय
नमः । शार्ङ्गाय शार्ङ्गाय नमः । इति ॥ ७ ॥
अथ धारणमन्त्रः ।
सुदर्शन । महाज्वाल सूर्य्यकोटिसमप्रभ ॥
अज्ञानान्धस्य मे नित्यं विष्णोर्मार्गं प्रदर्शय ॥
तथा ।
*पाञ्चजन्य । निजध्वानध्वस्तपातकसञ्चय ।*
पाहि मां पापिनं घोरसंसारार्णवपातिनमिति ॥
इत्युच्चारयन् मन्त्रं दक्षिणादिक्रमेण तु ।
भुजयोश्चक्रपूर्व्वाणि शङ्खपूर्व्वाणि धारयेत् ॥
कलत्राण्यपरीवारान् निजान् सर्व्वांश्च वैष्णवः ।
भगवत्यर्पयन् तप्तमुद्राभिलाभिरङ्कयेत् ॥
तथा च । वाराहे ।
अङ्कयेत्तप्तचक्राद्यैरात्मनो बाहुमूलयोः ।
कर्णचापवर्मग्रेषु पद्मान्नेषु च सन्दधे ॥
किञ्च
धारयेत् विधिवत् कृत्वा यथानुपूर्व्वविधानतः ।
तत्तन्मन्त्रैश्च मन्त्रज्ञः प्रतिष्ठाप्य पृथक् पृथक् ॥
ललाटे च गदा धार्य्या मूर्द्ध्नि चापं शरस्तथा ।
नन्दकञ्चैव हृन्मध्ये शङ्खचक्रे भुजद्वये ॥
किञ्च ।
दक्षिणे तु भुजे विप्रो बिभृयाद्वै सुदर्शनम् ।
सव्ये च शङ्खं बिभृयादिति ब्रह्मविदो विदुः ॥
अथ चक्रादिप्रतिकृतिधारणम् । तत्प्रमाणञ्च
शौर्य्यं राजत ताम्रं कांस्यमायसमेव वा ।
चक्रं कृत्वा तु मेधावी धारयेत विचक्षणः इति ॥
एवमेव प्रबोधिन्यां द्वादश्यां भागवतपरैः ।
तप्तमुद्रा धृतं धाम्ना द्वारकायां विधानतः ॥
इति श्रीहरिभक्तिविलासे १५ विलासः ॥

तप्तरूपक, क्ली, (तप्तं वह्निशोधितं रूपकं रूप्यम् ।) शुद्धरौप्यम् । इति राजनिर्घण्टः ॥

तप्तशूर्म्मिकुण्ड, क्ली, (तप्ता अग्निमयी शूर्म्मिः लौहमयनिर्म्मितप्रतिमा । तथाविधं कुण्डं यस्मिन् ।) नरकविशेषः । इति ब्रह्मवैवर्त्ते प्रकृतिखण्डम् ॥

तप्तसुराकुण्ड, क्ली, (तप्तायाः सुरायाः कुण्डमिव ।) नरकविशेषः । इति ब्रह्मवैवर्त्ते प्रकृतिखण्डम् ॥

तम उ इर् भ य खेदे । इच्छायाम् । इति कविकल्पद्रुमः ॥ (दिवां परं-अकं सेट् ।) उ, तमित्वा तान्त्वा । इर्, अतमत् अतमीत् । अमात् पुषादित्वात् नित्यं ङः इत्यन्ये । भ य, ताम्यति लोकः उत्तरः स्यादित्यर्थः । इति दुर्गादासः ॥

तमं, क्ली, (ताम्यत्यस्मादनेन वा । तम + अपादाने करणे वा अप्रत्ययः ।) अन्धकारः । इति शब्दरत्नावली ॥ पादाग्रम् । इति शब्दचन्द्रिका ॥

तम पुं (ताम्यत्यनेनेति । तम + अप्रत्ययः ।) तमोगुणः । इत्यमरटीकायां रायमुकुटः ॥ तमालवृक्षः । इति शब्दचन्द्रिका ॥ (राहुः । इत्यमरः ।१।३।२६। यथा, ज्योतिषे होरायाम् । "भृगुतमकुजजीवैरिति । क्षितवतमस्येति वराह ।" इति उणादिवृत्तिटीकायां उज्ज्वलदत्तः ।४।१८८।)

तमः, [स्] क्ली, (ताम्यत्यनेनेति । तम + "सर्व्वधातुभ्योऽसुन् ।" उणां । ४ । १८८ । इति असुन् ।) प्रकृतेर्गुणविशेषः । यथा,—
"सत्त्वं रजस्तम इति दृश्यन्ते पुरुषे गुणाः ।
*कालसञ्चोदितास्तेऽपि परिवर्त्तन्त आत्मनि ॥*
प्रभवन्ति यदा सत्त्वं मनोबुद्धीन्द्रियाणि च ।
तदा कृतयुगं विद्याज्ज्ञाने तपसि यद्रतिः ॥
यदा कर्म्मसु काम्येषु भक्तिर्यशसि देहिनाम् ।
तदा त्रेता रजोवृत्तिरिति जानीहि धीमतः ॥
यदा लोभस्त्वसन्तोषो मानो दम्भोऽथ मत्सरः ।
कर्म्मणाञ्चापि काम्यानां द्वापरं तद्रजस्तमः ॥
यदा सदानृतं तन्द्री निद्राहिंसादिसाधनम् ।
शोकमोहभयं दैन्यं स कलिस्तु तदा स्मृतः ॥"
इति गारुडे २२७ अध्यायः ॥ ७ ॥
अपि च ।
'तमस्त्वज्ञानजं विद्धि मोहनं सर्व्वदेहिनाम् ।
प्रमादालस्यनिद्राभिस्तन्निबध्नाति भारत ॥
सत्त्वं सुखे सञ्जयति रजः कर्म्मणि भारत ।
ज्ञानमावृत्य तु तमः प्रमादे सञ्जयत्युत ॥
रजस्तमश्चाभिभूय सत्त्वं भवति भारत ।
रजः सत्त्वं तमश्चैव तमः सत्त्वं रजस्तथा ।'
अप्रकाशोऽप्रवृत्तिश्च प्रमादो मोह एव च ।
तमस्येतानि जायन्ते विवृद्धे कुरुनन्दन ॥
यदा सत्त्वे प्रवृद्धे तु प्रलयं याति देहभृत् ।
तदोत्तमविदां लोकानमलान् प्रतिपद्यते ॥
रजसि प्रलयं गत्वा कर्म्मसङ्गिषु जायते ।
तथा प्रलीनस्तमसि मूढयोनिषु जायते ॥
कर्म्मणः सुकृतस्याहुः सात्त्विकं निर्म्मलं फलम् ।
रजसस्तु फलं दुःखमज्ञानं तमसः फलम् ॥
सत्त्वात् सञ्जायते ज्ञानं रजसो लोभ एव च ।
प्रमादमोहौ तमसो भवतोऽज्ञानमेव च ॥
ऊर्द्ध्वं गच्छन्ति सत्त्वस्था मध्ये तिष्ठन्ति राजसाः ।
जघन्यगुणवृत्तस्था अधो गच्छन्ति तामसाः ॥"
इति श्रीभगवद्गीतायाम् । १४ । ८-१८ ।
तत्तु आवरकं मोहहेतुः । इत्यमरभरतौ ॥ अस्य कार्य्यं अहङ्कारः । इति शैवरसार्णवः ॥ तस्य धर्म्मो यथा । प्रमादः १ मोहः २ मदनः ३ क्रान्तिः ४ विषादः ५ शोकः ६ अरतिः ७ अनार्य्यता ८ । इति मोक्षधर्म्मः ॥ स्वप्नः ९ तन्द्रा १० । इत्याध्यात्मिकधर्म्मः ॥ अन्धकारः । (यथा, महाभारते । १ । १०५ । १० ।
"तमसा लोकमावृत्य नौमतामेव भारत ॥")
तत्पर्य्यायः । तमसम् २ तिमिरम् ३ ध्वान्तम् ४ तमिस्रम् ५ दिवान्धकः ६ तिमिरम् ७ वृत्रा ८ । इति त्रिकाण्डशेषः ॥ रजोविरसम् १० दिवाकरम् ११ अन्धकम् १२ । इति शब्दरत्नावली ॥ अमरोक्तपर्य्यायः अन्धकारशब्दे द्रष्टव्यः । शोकः । इति मेदिनी । स २१ ॥ पापम् । इति जटाधरः ॥ (राहुः । इति मेदिनी । से, २४ ॥ यथा रघुः । ८ । ३० ।
"तिमिरेण न रोचतेऽप्रिया
ध्रुवचन्द्रा तमसेव कौमुदी ॥")

तमङ्गक, पुं इन्द्रकोषः । मञ्चकः । इति हेमचन्द्रः त्रिकाण्डशेषश्च ॥

तमत, त्रि, (तम + "अग्रहशिष्वि...त्यादि तमीति ।" उणां । ३ । ११० । इति अतच् ।) इच्छितः । वाञ्छितः । इत्युणादिकोषः ॥

तमप्रभ पुं, (तम इव प्रभा अस्य अस्मिन् वा ।) नरकभेदः । इति हेमचन्द्रः ॥

तमर, क्ली (तमः राति । रा + कः ।) वङ्गम् । इति हेमचन्द्रः ॥

तमराज, पु (तम इव राजते । राज + अच् ।) शर्करविशेषः । गवान इति ख्यात इति कश्चित् । तत्पर्य्यायः । शालक २ । तस्य गुणः । इक्षुर ज्वरदाहरक्तपित्तनाशित्वम् । इति राजवल्लभः ॥

तमस, क्ली (तम + "अत्यविचमितमीति ।" उणां । ३ । ११७ । इति असच् ।) अन्धकारः । इति त्रिकाण्डशेषः ॥ नगरम् । इति संक्षिप्तसारे उणादिवृत्तिः ॥

तमसः, पु, (तम + असच् ।) कूपः । अन्धकारः । इति संक्षिप्तसारे उणादिवृत्तिः ॥

तमसा, स्त्री, (तमइव जलमस्याः । अच् टाप् च ।) नदीविशेषः । इति संक्षिप्तसारे उणादिवृत्तिः ॥ (यथा, महाभारते । ३ । २२१ । २४ ।
"तमसा नर्म्मदा चैव नदी गोदावरी तथा ॥")

तमस्ततिः, स्त्री, ( तमसस्ततिः समूहः । ) अन्ध-कारसमूहः । इति तमिस्राशब्दार्थे मेदिनी ॥

तमस्विनी, स्त्री, ( तमो विद्यतेऽस्यामिति विनिः ङीप् च । ) रात्रिः । ( यथा, महाभारते । ४ । २१ । ३८ ।
"अहन्यमानस्तस्यां तु तमस्विन्यामनिन्दिते ! । नागो बिल्वमिवाक्रम्य पोथयिष्याम्यहं शिरः ॥")
हरिद्रा । इत्यमरः । २ । ९ । ४१ ॥

तमा, स्त्री, ( तमोऽस्त्यस्यामिति । तम + अच् टाप् च । ) रात्रिः । इति हेमचन्द्रः ॥ तमाल-वृक्षः । इति शब्दचन्द्रिका ॥

तमाः, [ स् ] पुं, राहुः । इति मेदिनी । से, २७ ॥

तमालं, क्ली, (ताम्यते काङ्क्ष्यते इति । तमु काङ्क्षा-याम् + "तमिविशिबिडीति ।" उणां ।१।११७। इति कालन् । ) पत्रकम् । इति राजनिर्घण्टः ॥

तमालः, पुं, ( तमु काङ्क्षायाम् + कालन् । ) वृक्ष-विशेषः । तत्पर्य्यायः । कालस्कन्धः २ तापिच्छः ३ । इत्यमरः । २ । ४ । ६८ ॥ तापिञ्छः ४ । इति भरतः ॥ नीलतालः ५ तमालकः ६ नीलध्वजः ७ कालतालः ८ महाबलः ९ । ( यथा, भागवते । ३ । १३ । ३३ ।
"तमालनीलं सितदन्तकोट्या क्ष्मामुत्क्षिपन्तं गजलीलयाङ्ग ॥")
अस्य गुणाः । मधुरत्वम् । बल्यत्वम् । हृद्यत्वम् । शिशिरत्वम् । गुरुत्वम् । कफपित्ततृष्णादाह-श्रमभ्रान्तिकरत्वञ्च । इति राजनिर्घण्टः ॥ तिलकम् । ( यथा, कुट्टनीमते । १६ ।
"यस्यासुपवनवीथ्यां तमालपत्त्राणि युवतिवदने च । नखरप्रहाररचितं तन्त्रीवाद्येषु सुरतकलहेषु ॥"
तमालस्तापिच्छवृक्षः युवतिवदनपक्षे तिलक-मिति ॥ ) खड्गः । वरुणवृक्षः । इति मेदिनी । ले, ६७ ॥ श्वेतखदिरः । इति शब्दचन्द्रिका ॥ वृक्षभेदे वंशत्वचि च पुं क्ली । इति लिङ्गादि-संग्रहे अमरभरतौ ॥

तमालकं, क्ली, ( तमालपत्रवत् वर्णेन कायतीति । कै + कः । ) सुनिषण्णशाकम् । इति त्रिकाण्ड-शेषः ॥ ( तमालमेव । स्वार्थे कन् । ) पत्रकम् । इति राजनिर्घण्टः ॥ तेजपात इति भाषा ॥

तमालकः, पुं, क्ली, ( तमाल एव । स्वार्थे कन् ।) तमालवृक्षः । ( यथा, रामायणे । २ । ९१ । ५० ।
"ततः सरलतालाश्च तिलकाः सतमालकाः । प्रहृष्टास्तत्र सम्भूताः कुब्जा भूत्वाथ वामनाः ॥")
वंशत्वक् । इति शब्दरत्नावली ॥

तमालपत्रं, क्ली, ( तमालस्य पत्रमिव वर्णोऽस्या-स्तीति । अर्श आदित्वात् अच् । ) तिलकम् । पत्रकम् । ( यथास्य पर्य्यायाः ।
"पत्रं तमालपत्रञ्च तथा स्यात् पत्रनामकम् ॥"
इति भावप्रकाशस्य पूर्व्वखण्डे प्रथमे भागे ॥) तमालवृक्षः । इति मेदिनी । रे, ३०२ ॥ (तमा-लस्य पत्रम् । यथा, रघुः । ६ । ६४ ।
"तमालपत्रास्तरणासु रन्तुं प्रसीद शश्वन्मलयस्थलीषु ॥" )

तमालिका, स्त्री, ( तमालाः सन्त्यत्र । तमाल + ठन् । ) तामलिप्तदेशः । इति त्रिकाण्डशेषः ॥ ताम्रवल्ली । भूम्यामलकी । इति राजनिर्घण्टः ॥

तमालिनी, स्त्री, ( तमालो तमालवर्णोऽस्त्यस्या इति । इनिः ततो ङीप् ।) भूम्यामलकी । इति राजनिर्घण्टः ॥ तामलिप्तदेशः । इति हेम-चन्द्रः ॥

तमाली, स्त्री, ( तम + कालन् । गौरादित्वात् ङीष् । ) ताम्रवल्ली । वरुणवृक्षः । इति राज-निर्घण्टः ॥

तमिः, स्त्री, ( ताम्यते ग्लायतेऽत्र । तम + "सर्व्व-धातुभ्य इन् ।" उणां । ४ । ११७ । इतीन् । ) रात्रिः । इत्यमरटीकायां भरतः ॥

तमिस्रं, क्ली, (तमोऽस्त्यत्र । "ज्योत्स्नातमिस्रेति ।" ५ । २ । ११४ । इति निपातनात् साधुः । यद्वा, तमिस्रा अस्त्याश्रयत्वेनास्य अच् ।) अन्धकारम् । इत्यमरः ॥ (यथा, महाभारते । ४ । २१ । १७ ।
"यदेतन्नर्त्तनागारं मत्स्यराजेन कारितम् । दिवात्र कन्या नृत्यन्ति रात्रौ यान्ति यथागृहम् ॥ तमिस्रे तत्र गच्छेथा गन्धर्व्वास्तत्र जानते ॥" )
क्रोधः । इति मेदिनी । रे, ९१ ॥ (नरकविशेषः । यथा, भागवते । ४ । ७ । ४२ ।
"अमङ्गलानाञ्च तमिस्रमुल्वणं विपर्य्ययः केन तदेव कस्यचित् ॥" )

तमिस्रपक्षः, पुं, ( तमिस्रमन्धकारं तत्प्रधानः पक्षः । ) कृष्णपक्षः । यथा, तमिस्रपक्षत्रुटि-कूटभक्षितमिति श्रीहर्षः ॥

तमिस्रा, स्त्री, ( तमोबहुलमस्ति यस्याम् । "ज्योत्स्नातमिस्रेति ।" ५ । २ । ११४ । इति निपातनात् साधुः । ) अन्धकाररात्रिः । कृष्ण-पक्षनिशा । इत्यमरः ॥ तमोयुक्तरात्रिमात्रम् । इति रायमुकुटः ॥ दर्शरात्रिः । इति वाच-स्पतिः ॥ तमस्ततिः । इति मेदिनी । रे, १९१ ॥ ( यथा, रघुः । ५ । १३ ।
"सूर्य्ये तपत्यावरणाय दृष्टेः कल्पेत लोकस्य कथं तमिस्रा ॥")

तमी, स्त्री, ( तमिः कृदिकारादिति वा ङीष् । ) रात्रिः । ( यथा, माघे । ९ । २३ ।
"ददृशेऽपि भास्करकरैर्न यः स तमीं तमोभिरभिगम्य तताम् ॥")
हरिद्रा । इत्यमरः । २ । ९ । ४१ ॥

तमोघ्नः, पुं, ( तमोऽन्धकारं मोहमज्ञानं वा हन्तीति । हन + टक् ।) वह्निः । सूर्य्यः । (यथा, महाभारते । ७ । १४४ । १३६ ।
"स देवशत्रूनिव देवराजः किरीटमाली व्यधमत् समन्तात् । यथा तमांस्यभ्युदितस्तमोघ्नः पूर्व्वप्रतिज्ञां समवाप्य वीरः ॥" )
चन्द्रः । बुद्धः । केशवः । शम्भुः । इति मेदिनी । ने, ७१ ॥

तमोज्योतिः, [ स् ] पुं, ( तमसि ज्योतिर्यस्य ।) ज्योतिरिङ्गणः । इति शब्दरत्नावली ॥

तमोनुत्, [ द् ] पुं, ( तमोऽन्धकारं नुदतीति । नुद + क्विप् ।) अग्निः । सूर्य्यः । चन्द्रः । दीपः । इति शब्दरत्नावली ॥ (तमोनाशके, त्रि । यथा महाभारते । १३ । १६६ । ८ ।
"एवमुक्तस्तदाविर्व्वै तमोनुदभवत्तदा । अभवत् सौम्यभावाच्च सोमवत् प्रियदर्शनः ॥")

तमोनुदः, पुं, ( तमोऽन्धकारं नुदतीति । नुद + "इगुपधज्ञेति ।" ३ । १ । १३५ । इति कः । ) सूर्य्यः । इति शब्दरत्नावली ॥ (अग्निः । चन्द्रः । इति विश्वः ॥ यथा, रघुः । ३ । ३३ ।
"नरेन्द्रकन्यास्तमवाप्य सत्पतिं तमोनुदं दक्षसुता इवाबभुः ॥"
प्रकृतिप्रेरकः । यथा, मनुः । १ । ६ ।
"ततः स्वयम्भूर्भगवानव्यक्तो व्यञ्जयन्निदम् । महाभूतादिवृत्तौजाः प्रादुरासीत्तमोनुदः ॥")

तमोपहः, पुं, (तमोऽन्धकारं अपहन्तीति । अप + हन + "अपे क्लेशतमसोः ।" ३ । २ । ५० । इति डः । ) सूर्य्यः । चन्द्रः । बुद्धः । अग्निः । इति मेदिनी । हे, ३० ॥ ( अज्ञाननाशके, त्रि । यथा, किरातार्ज्जुनीये । ५ । २२ ।
"आगमादिव तमोपहादितः सम्भवन्ति मतयो भवच्छिदः ॥" )

तमोभित्, [ द् ] पुं, ( तमस्तिमिरं भिनत्ति खण्डयति प्रकाशनेन नाशयतीति । भिद + क्विप् । ) खद्योतः । इति शब्दमाला ॥

तमोमणिः, पुं, ( तमसि अन्धकारे मणिरिव । ) खद्योतः । इति त्रिकाण्डशेषः ॥ गोमेदकमणिः । इति राजनिर्घण्टः ॥

तमोलिप्ती, स्त्री, ( तमसा लिप्यते इति । लिप + क्तः निपातनात् ङीप् । ) देशविशेषः । तमो-लुक इति भाषा ॥ तत्पर्य्यायः । तामलिप्तः २ वेलाकूलम् ३ तमालिका ४ । इति शब्दरत्ना-वली ॥ तामलिप्तम् ५ तामलिप्ती ६ । इति त्रिकाण्डशेषः ॥ दामलिप्तम् ७ तमालिनी ८ स्तम्बपूः ९ विष्णुगृहम् १० । इति हेमचन्द्रः ॥

तमोविकारः, पुं, (तमसैव विकारो यत्र ।) रोगः । इति राजनिर्घण्टः ॥

तमोहरः, पुं, ( तमो हरतीति । हृ + अच् । तमस्य हर इति वा ।) चन्द्रः । इति शब्दरत्ना-वली ॥ ( अग्निः । सूर्य्यः । इति व्युत्पत्तिलब्धो-ऽर्थः ॥ )

तम्पा, स्त्री, ( तम्पति गच्छतीति । तम्प + अच् । पृषोदरादित्वात् साधुः । ) गौः । इति हेम-चन्द्रः । ४ । ३३ ॥

तम्ब, गतौ । इति कविकल्पद्रुमः ॥ ( भ्वां-परं-सकं-सेट् । ) ओष्ठ्यवर्गशेषोपधः । तम्बति । इति दुर्गादासः ॥

तम्बा, स्त्री, ( तम्बति गच्छतीति । तम्ब + अच् ।) गौः । इति हेमचन्द्रः । ४ । ३३२ ॥

तय, ङ गतौ । रक्षे । इति कविकल्पद्रुमः ॥ ( भ्वां-आत्मं-सकं-सेट् । ) ङ, तयते । इति दुर्गा-दासः ॥

य: खड्गे जायते शब्दो नखदण्डादिनाहते ।
स ध्वनिस्तुलनामानं ज्ञानमष्टविधन्त्विदम् ॥
पश्चाद्या निपुणै: खड्गे सम्भाव्यन्तेऽपि कृत्रिमा: ।
अन्यथावक्रत्रिमौ ज्ञेयौ तावेव सहजाविति ॥
शतमङ्गानि चत्वारि रूपाणि जातयस्तथा ।
त्रिंशन्नेत्राणि जानीयादरिष्टानि तथैव च ॥
भूमिश्च द्विविधा ज्ञेया ध्वनिरष्टविधो मत: ।
मानन्तु द्विविधं प्रोक्तमित्येषां संग्रहो मत: ॥"॥

अथ खड्गस्य शताङ्गगणना लौहार्णवे ।

"रूप्यस्वर्णगजोरुवृकदमनस्थूलाङ्गकृष्णारुण-श्वेता-
म्भोजगदातिलानलकणाग्रन्थिस्थिरातैत्तिरा: ।
मालाजीरकषट्पदोर्द्ध्वमरिचव्यालाश्ववर्हाञ्जन-
चौद्रक्षुद्रकमक्षिकातुषयवव्रीहीक्षुमासर्षपा: ॥
सिंहीतण्डुलगोशिराशिवनखग्राहाक्षिकेशोत्पल-
श्रोणीकाककपालमत्तुवरीविम्बीफलीसर्षपा: ।
नीलीरक्तवचारसोनसुमनाजिङ्गीशमीरोहित-
प्रोष्ठीमारिषमार्कवाखुरतडि[illegible]द्रिगुञ्जाशरा: ॥
दूर्व्वाबिल्वमसूरटुण्टुकशटीमार्ज्जारिकाकेतकी-
स्कन्धावच्छकलायचम्पकनलान्यग्रोधवंशासना: ।
ज्येष्ठीजालपिपीलिकानलरज: कुष्माण्डरोम-
सृही
कर्कन्धुर्व्वकुलारनालमहिषस्कन्धस्तुवक्रा इति ॥
प्रोक्ता लौहविशारदेन मुनिना खड्गस्य भेदा:
क्रमात् ॥"

अथ तस्य चत्वारि रूपाणि ।

"नील: कृष्ण: पिशङ्गश्च धूम्रश्चेति चतुर्व्विध: ।
वर्णप्रकर्ष: खड्गानां कथितो मुनिपुङ्गवै: ॥"

अथ चतस्रो जातय: ।

"ब्राह्मण: क्षत्त्रियो वैश्य: शूद्रश्चेति चतुर्व्विध: ।
जातिभेदो विनिर्द्दिष्ट: खड्गानां मुनिपुङ्गवै: ॥"

अथ त्रिंशन्नेत्राणि ।

"चक्रं पद्मं गदा शङ्खो डमरुर्वंशुरङ्कुश: ।
छत्त्रं पताका वीणा च मत्स्यलिङ्गध्वजेन्दव: ॥
कुम्भ: शूलञ्च शार्द्दूल: सिंह: सिंहासनं गज: ।
हंसो मयूरो भिक्षो च दर्शन: खड्ग एव च ॥
पुत्त्रिका चामरं शैल: पुष्पमाला भुजङ्गम: ।
त्रिंशदेतानि नेत्राणि खड्गानां कथितानि वै ॥"

अथ त्रिंशदरिष्टानि ।

"छिद्रं काकपदं रेखा भिन्नं भेकश्च मूषिक: ।
विड़ाल: शर्करा नीली मशको भृङ्गवृश्चिके ॥
त्रिविन्दु: कालिका दारी कपोत: काक एव च ।
खर्पर: शकली क्रोड़ी कुशपत्त्रकजालिके ॥
करालकङ्कखर्ज्जूरशृङ्गपुच्छखनित्रकम् ।
लाङ्गलं वड़िशाख्यञ्च मुनिना तत्त्ववेदिना ॥
प्रोक्तान्येतान्यरिष्टानि खड्गानां त्रिंशदेव हि ॥"

अथ द्विविधा भूमि: ।

"दिव्यभौमविभागेन भूमिस्तु द्विविधा भवेत् ।"

अथाष्टधा ध्वनि: ।

"हंसकांस्याश्वढक्कानां काकतन्त्रीखराश्मनाम् ।
ध्वनयोऽष्टविधा: प्रोक्ता नागार्ज्जुनमुनेर्मता: ॥"

अथ द्विविधं मानम् ।

"उत्तमाधमभेदेन मानं तद्द्विविधं भवेत् ।

इति प्रोक्तानि क्षत्राणि खड्गानां ज्ञानहेतवे ॥
एतानि तत्त्वतो ज्ञात्वा भवेन्नृपतिपूजित: ॥"

इति क्षत्राध्याय: ॥ * ॥

तत्र प्रथमतोऽङ्गानां लक्षणानि निबोधत ॥

लौहप्रदीपे ।

"रूप्यपत्त्रसमा भूमिरङ्गं श्वेतं प्रतीयते ।
ऊर्द्ध्वं तत्तु महामूल्यं रूप्यवज्रमुशन्ति तम् ॥
एष खड्गवरो दद्याल्लक्ष्मीमायुर्यशो बलम् ॥१॥
स्वर्णरेखा बली तन्वी यद्भूमौ निकषोपमा ।
स्वर्णवज्रमिति प्राहुरायुर्लक्ष्मीजयप्रदम् ॥२॥
गजशुण्डाकृतिर्भूमौ कृष्णायामङ्गसम्भव: ।
गजवज्रमिति प्राहू रक्तस्पर्शं तु तद्दिशेत् ॥
ज्वरादिव्याधिशमनं तस्य प्रक्षालनाम्भसा ।
अपि क्षीणोऽपि भूपालस्तद्वीर्य्यात् साधयेन्
महीम् ॥३॥
एरण्डवीजप्रतिममङ्गं भूमि: सितेतरा ।
रुवुवज्रमिदं नाम्ना शत्रुदर्पक्षयङ्कर: ॥
एतस्य स्पर्शमात्रेण नर: सम्यग्विमुच्यते ।
महिषाख्यमिदं वज्रं केचिदाहुर्मनीषिण: ॥४॥
अङ्गं दमनपत्त्राभं खड्गे यस्मिन् प्रतीयते ।
विद्याद्दमनवज्रञ्च तज्ज्ञेयं द्विविधं बुधै: ॥
नीला शुभ्रा भवेद्भूमिस्तत्र नीला गरीयसी ।
तस्मिन् पर्य्युषितं तोयं गन्धे दमनकोपमम् ॥
तत्प्रभावान्महीपाल: कृत्स्नां पृथ्वीं हि साध-
येत् ॥५॥"

शार्ङ्गधरस्य ।

"एका स्थूला सिता रेखा भूमिर्न्नीला दृढ़ा यदि ।
स्थूलाङ्गमङ्गवज्रं तद्विद्याल्लक्ष्मीयश:प्रदम् ॥
एतद्घते भवेच्छोथ: स्थूलश्चिरतरस्थिति: ।
एतं महान्तमपरे वदन्ति खड्गकोविदा: ॥६॥
पृष्ठायां दृश्यते भूमौ अङ्गञ्च प्रतिविम्बितम् ।
अङ्ग[illegible] भवेत्तस्य द्विधाभूमि: सितासिता ॥७॥"

लौहप्रदीपेऽपि ।

"निरङ्गं रूप्यपत्त्राभमीषन्मणिनिभञ्च यत् ।
दुर्लभं तन्महामूल्यं कान्तलौहं प्रचक्षते ॥
कृष्णा भूमिर्भवेत् स्वच्छा पीता वज्राङ्गसङ्गता ।
कृष्णवज्रमिति प्राहुस्तद्घते मोह उच्यते ॥"

प्रदीपेऽपि ।

"कृष्णा भूमि: सुवर्णाभमीषच्छुक्लाङ्गसङ्गतम् ।
डाहुलीवज्रकं विद्यात् कालसंज्ञमथापरे ॥८॥
अरुणं सूक्ष्ममूर्द्ध्वेदङ्गं भूमि: सितेतरा ।
अरुणाख्यमिदं वज्रं शत्रुदर्पनिसूदनम् ॥
सूर्य्यांशुस्पर्शमात्रेण वह्निरूपां वमेत् शिखाम् ।
तस्य स्पर्शनमात्रेण पद्मकोष: स्फुटेन्निशि ॥
दुर्लभं तन्मनुष्याणां भाग्यै: क्वापि लभ्यते ।
तद्योजनसहस्रस्य रिष्टं नाशयति ध्रुवम् ॥९॥
श्वेतास्तिस्रो यदा रेखा आमूलादुपलक्ष्यते ।
श्वेताङ्गमिति तद्विद्याद्यशोलक्ष्मीबलप्रदम् ॥१०॥
अम्भोजदलसङ्काशमङ्गं भूमि: सितेतरा ।
अम्भोजवज्रं तज्ज्ञेयं कथितं मुनिपुङ्गवै: ॥११॥
अङ्गं यस्य गदाकारं भूमिश्चैव सितेतरा ।
गदावज्रमिदं ब्रूयात् तद्घते मूर्च्छसम्भव: ॥१२॥
अङ्गं कृष्णतिलाकारं भूमिश्चैव सितासिता ।
तिलवज्रमिदं ज्ञेयं लक्ष्मीबलयश:प्रदम् ॥
तद्घते तिलतैलाभा वसा प्रच्यवतेऽधिकम् ॥१३॥
धूम्रवर्णा भवेद्भूमिरङ्गं वह्निशिखोपमम् ॥
अग्निवज्रमिदं ज्ञेयं शत्रूणां दाहकारकम् ।
अत्र शीतोदकं न्यस्तं तप्तं भवति च क्षणात् ॥
शाणे वह्निं वमेद्यस्तु तथा सूर्य्यांशुसङ्गमात् ।
तद्घते बलवान् दाहो दग्धवच्च व्रणो भवेत् ॥
एतत् परमभाग्येन लभ्यते धरणीतले ॥१४॥
भूमि: सिता तिला वापि अङ्गञ्चेत् पिप्पली-
प्रभम् ॥
कणावज्रमिदं ज्ञेयमन्तर्दाहस्तु तद्घते ॥१५॥
कृष्णाभूमिर्यदैवाङ्गे दृश्यते ग्रन्थिसञ्चय: ॥
ग्रन्थिवज्रमिदं ज्ञेयं वैरिपक्षविनाशनम् ।
तद्घते बलवान् दाहस्तृषा च ज्वर एव च ॥१६॥
शालपर्णीदलाकारमङ्गं कृष्णासिपुत्त्रिका ।
स्थिरावज्रमिदं प्राहुस्तद्घते वेपथुर्भवेत् ॥१७॥
यदा तित्तिरिपक्षाभमङ्गं भूमि: सितेतरा ।
एतत्तित्तिरिवज्रं स्यात् तद्घते बहुवेदनम् ॥१८॥
घनमालासमा यस्मिन् माला खड्गे प्रदृश्यते ।
मालाङ्गमिति तद्विद्यात्तत्तोयं गन्धवद्भवेत् ॥
अत्र तप्तोदकं न्यस्तं शीतं भवति तत्क्षणात् ।
एष दाहपरीतानामृते पित्तहतात्मनाम् ॥
भवेत् परमभैषज्यं भाग्येनैतद्धि लभ्यते ॥१९॥
यदा जीरकसङ्काशमङ्गं भूमि: सितासिता ॥
एतज्जीरकवज्रं स्यात्तद्घते तत्क्षणाज्ज्वर: ॥२०॥
भूमि: सितासितच्चेत्रा अङ्गं भृङ्गाभमिष्यते ॥
तत्र चेन्मध्यमन्यस्तं शोषमाप्नोति केवलम् ।
एतद्भ्रमरवज्रं स्यात्तद्घते स्याद्विसूचिका ॥२१॥
ऊर्द्ध्वगं कपिलाभासमङ्गं यस्मिन् प्रतीयते ।
ऊर्द्ध्ववज्रमिदं प्राहुर्विषवेगनिसूदनम् ॥"

लौहप्रदीपेऽपि ।

"ऊर्द्ध्वगं कपिलाभासमङ्गं यस्मिन् प्रतीयते ।
लाङ्गलाङ्गन्तु तद्विद्यात् स्पर्शे तस्याहिनाशनम् ॥
२२ ॥
अङ्गं मरीचसङ्काशं भवेद्भूमि: सितेतरा ।
मरीचाङ्गमिदं वज्रं तद्घते कटुरक्तता ॥
तत्प्रक्षालनतोयेन नश्यन्ति पीनसादय: ॥२३॥
यदा सर्पफणाकारमङ्गं भूमिस्तु निर्म्मला ॥
भुजङ्गवज्रं तद्विद्यात्तद्घते विषवद्रुजा ।
तस्य स्पर्शनमात्रेण भेक: प्राणैर्विमुच्यते ॥
एकस्यास्य प्रसादेन कृत्स्नां शास्ति महीं नृप: ।
२४ ।
यदाश्वखुरसङ्काशमङ्गं भूमिस्तु निर्म्मला ॥
अश्वाङ्गमिति तं विद्यात् खड्गं परमदुर्लभम् ।
तस्य संयोगमात्रेण वाजी मन्दोऽपि धावति ॥
तस्य क्षालनतोयेन हयानां रोगनाशनम् ।
एतद्घते भृशं मूर्च्छा दाहश्च भ्रम एव च ॥२५॥
मयूरपिच्छसदृशमङ्गं भूमि: सितेतरा ।
वर्हाङ्गमिति तं विद्यात्तद्घते वान्तिरिष्यते ॥
सर्पाणामिह सर्व्वेषामस्य स्पर्शासहिष्णुता ।
एतदेव नृपतिभिर्भाग्यै: क्वापि लभ्यते ॥२६॥

विद्वान् केतकवज्रं तत् वाराणससमुद्भवम्॥”७७
लौहप्रदीपस्य ।
“अङ्गं मूर्व्वातन्तुनिभं भूमिर्मूर्व्वादलच्छविः ।
घ्राणेन वमते शुक्लां शिखां मौर्व्वीं भवेत्ततः ॥
मौर्व्व्यङ्गमिदमुत्कृष्टं यशःकीर्त्तिबलावहम्॥७८॥
लिङ्गं तीक्ष्णं खरं गाढ़ं घ्राणे वह्निर्व्वमेत् कणम्॥
छिन्नत्यन्यविधं लौहं वज्राङ्गमिति तद्वदेत्॥७९॥
कलायपुष्पसदृशमङ्गं भूमिः सितासिता ।
कलायवज्रं जानीयात् तत्क्षते पाक इष्यते ॥८०॥
अङ्गं चम्पकपुष्पाभं भूमिः कृष्णा तथा सिता ।
शिखां घ्राणे वमेच्छीतं तिक्तं तस्य जलं भवेत् ।
इदं चम्पकवज्रं स्यात् सर्व्वत्र विजयप्रदम्॥८१॥
अङ्गं वलाहलसमं भूमिः शुक्ला तथेतरा ।
वलावज्रमिदं ज्ञेयं नागाभावं भवेद्द्रुतम् ॥
इत्ययं वातरोगाणां नाशने परमौषधम् ॥८२॥
अङ्गं वटारोहसमं भूमिर्व्वटदलच्छविः ।
वटवज्रमिदं ज्ञेयं खरं खड्गाधमं बुधैः ।
एतस्य स्पर्शमात्रेण नरो मुच्येत सम्पदा ॥८३॥
वंशनीलीसमा भूमिः खरधारा सिताकृतिः ।
वंशाङ्गमिति जानीयाद्वंशवृद्धिकरं परम् ॥८४॥
भूमिः शालदलाकारा अङ्गं लघु सितासितम् ।
शालाङ्ग एष खड्गः स्यात् पूज्यः सर्व्वार्थदायकः ।
अयं घ्राणे वमेद्वह्निं धारा चाप्यथवा भवेत्॥८५॥
भूमिः सितासिता वापि अङ्गं ज्येष्ठीसमं लघु ।
ज्येष्ठीवज्रमिदं निन्द्यं न स्पृश्यं वा हितेच्छुभिः ॥
८६ ॥
पुराणजालसदृशमङ्गं भूमिः सितासिता ॥
जालवज्रमिदं पूज्यं शत्रुसम्पत्तिनाशनम् ।
यदि घ्राणे वमेन्नीलां शिखां वह्निं वमेच्च वा ॥
तदैव दुर्लभः खड्गो नान्यथा भयहेतुकः॥८७॥
अङ्गं पिपीलिकाकारं भूमिर्धूम्रा तथासिता ॥
पिपीलिकाङ्ग इत्येव तत्क्षते कण्डुसम्भवः ।
स्वयं यदि भवेद्धूम्रः घ्राणे पूज्यतमस्तदा ॥८८॥
नलपत्रसमा भूमिरङ्गन्तत्कुसुमोपमम् ।
नलाङ्गमिति जानीयाद्भर्त्तुः सर्व्वार्थसाधकः ॥
८९ ॥
निरङ्गा निर्म्मला भूमिर्घृष्टं दृष्टं वमेद्रजः ।
दृढ़ा धारा भृशं स्थूला आघातं सहते न च ॥
रजोवज्रमिदं निन्द्यं शत्रूणां विजयावहम् ॥९०॥
कुष्माण्डवीजसदृशमङ्गं भूमिः सितासिता ॥
कुष्माण्डवज्रं जानीयात्तत्क्षते वेगनिग्रहः ॥९१॥
अङ्गं शरोमसदृशं भूमिर्धूम्रा सितासिता ।
रोमाङ्गमिति जानीयात्तत्क्षते पिड़कोद्गमः॥९२॥
भूमिः स्नुहीदलसमा अङ्गं तत्कण्टकोपमम् ॥
धारा तीक्ष्णा स्वयन्तीक्ष्णो लघुमानं खरा स्पृशा ।
स्नुहाङ्गः खड्ग इत्येव तत्क्षते दाहटङ्भ्रमाः ॥
सुखाक्षिकर्णनासानां दाहः पाकश्च जायते ।
अयं यदि च सर्पाणां फणास्वपरि विध्यते ॥
फणाविदारमाप्नोति सर्पो लोटयते शिरः ।
अस्य धावनतोयेन कुष्ठरोगविनाशनम् ॥९३॥
कर्कन्धुदलपृष्ठाभा भूमिरङ्गन्तु तत्समम् ।
कर्कन्धुवज्रं जानीयात्तत्क्षते दाहनाशनम् ॥
एष खड्गाधमस्त्याज्यो घेतथा यदि विद्विषः ॥
९४ ॥
रङ्गं वकुलपुष्पाभं भूमिस्तत्फलसन्निभा ॥
वकुलाङ्गमिदं पूज्यं घ्राणे सुरभिगन्धवत् ।
तन्नास्ति जगतीमध्ये यदनेन न साध्यते ॥९५॥
अङ्गं संमिश्रितं यस्मिन्न किञ्चिद्व्यक्तमीक्ष्यते ।
सर्व्वेषां दर्शनं वापि तीक्ष्णधारः खरस्वरः ॥
एष काञ्चिकवज्रः स्याद्यत्नादेवोपलभ्यते ।
नैनं प्राप्यापि वर्द्धन्ते प्रेयाश्चिन्नादयोऽपि च ॥
९६ ॥
भूमिः कृष्णा निरङ्गा चेद्धारा तीक्ष्णा दृढ़ापि च ।
आघातं सहते घोरं रक्तं स्पर्शेन यो विशेत् ॥
घ्राणेन वह्निं वमति ध्रुवं वाप्यतिपर्य्ययात् ।
मधियाङ्गः स वै खड्गः पृथिव्यां नातिदुर्लभः ॥
९७ ॥
अत्यन्तनिर्म्मला भूमिः शरीरं प्रतिविम्बितम् ।
धारा तीक्ष्णा स्वरस्तीक्ष्णः स्वच्छाङ्गं तद्विनि-
र्द्दिशेत् ॥९८॥
तस्मिन् यदा भवेद्रेखा ऊर्द्धा अत्वाख्यकं तदा॥९९
अस्मिन्नपि भवेद्वक्रा रेखा वक्राभिधन्तु तत्॥१००॥
एतच्चितयमुद्दिष्टं खड्गानां प्रवरं बुधैः ।
प्रायशो लभ्यते लोके यदि सर्व्वगुणावहम् ॥
इतीदं निखिलं प्रोक्तं वज्राणां लक्षणं मया ।
प्रयत्नैर्लिखितं यत्तं सर्व्वेषां हितकाम्यया ॥
इतः परन्तु लौहानां लक्षणं यच्च लक्ष्यते ।
तस्य दासी भवाम्येष प्रतिज्ञेति कृता मया ॥
द्विलिङ्गमिश्रमालोक्य मिश्राङ्गमिति निर्द्दिशेत् ।
सर्व्वेयामङ्गमालोक्य सर्व्वाङ्गमिति निर्द्दिशेत् ॥”
इति खड्गपरीक्षायामङ्गाध्यायो द्वितीयः ॥*॥
खड्गस्य रूपाणि यथा,—
“नीलीकलायकुसुमच्छविरञ्जनाभा
या चन्द्रनीलमणिकाचमणिप्रभा च ।
भूमिश्च या मरकतप्रतिमावभासा
खड्गस्य नीलमिति रूपमिदं वदन्ति ॥
तत्र चेन्निन्दितान्यङ्गान्यरिष्टानि वहून्यपि ।
दृश्यन्ते वहुदोषापि तथापि गुणवत्तरम् ॥१॥
या कालकाम्बुदमसीरसकालसर्प-
शङ्कान्धकारकचभारसमा विभाति ।
भूमिश्च या भ्रमरवन्धुसमावभासा
खड्गस्य कृष्णमिति रूपमिदं वदन्ति ॥
यत्र नेत्राणि सन्त्यत्र अरिष्टान्यशुभानि च ।
साधारणमिदं रूपं प्राह नागार्ज्जुनो मुनिः ॥२॥
या प्राट्पेरणनवभेकसमानवर्णा
गोमेदरत्नसदृशापि च यस्य भूमिः ।
खड्गस्य पिङ्गमिति रूपमिदं वदन्ति
भर्त्तुर्य्यशोवलधनक्षयकारणाय ॥३॥
या मन्दधूमसदृशा च शिरीषपुष्प-
तुल्या विभाति मलिनापि च खड्गभूमिः ।
नागार्ज्जुनो वदति धूम्रमिदं हि रूपं
भर्त्तुर्य्यशोवलधनावलिवर्द्धनाय ॥४॥
द्विरूपं मिश्रितं कृत्वा शङ्करं प्रवदेद्बुधः ।
त्रिभी रूपैः समेतन्तु खड्गं त्रिपुरसञ्ज्ञितम् ॥
रूपैश्चतुर्भिः संयुक्तं चतुरं खड्गमुत्तमम् ॥”
इति लौहार्णवस्य खड्गपरीक्षायां वर्णा-
ध्यायस्तृतीयः ॥ * ॥
“जातिश्चतुर्व्विधा प्रोक्ता खड्गानां या पुरा मया ।
सम्प्रत्यपि प्रयत्नेन तासां लक्षणमुच्यते ॥
शुद्धाङ्गः शुद्धवर्णश्च सुनेत्रः सुस्वरश्च यः ।
मृदुस्पर्शः सुसन्धेयस्तीक्ष्णधारो महागुणः ॥
खड्गं ब्राह्मणजातिं तं प्राह नागार्ज्जुनो मुनिः ।
अस्य क्षते भवेच्छोथो घोरः सर्व्वाङ्गगोचरः ॥
मूर्च्छा पिपासा दाहश्च ज्वरो मृत्युश्च जायते ।
चाष्टष्टं त्रिफलाकल्कगहैरात्रिन्दिवोषितम् ।
मलिनत्वं न सम्प्राप्तं निर्म्मलं क्रियते परम् ।
तरुणादित्यकिरणस्पर्शादेव दृशो स्थितः ॥
पश्येत् सर्व्वं न तु करं पुरुषस्य हि धारिणः ।
नायकुशस्पर्शमात्रेण खरतां व्रजति स्फुटम् ॥
एष खड्गवरः सर्व्वमरिष्टं नाशयेद्ध्रुवम् ।
अस्य प्रसादात् पुरुषस्त्रिलोकामपि साधयेत् ॥
तस्मादेष मनुष्याणां सुलभो न हि भूतले ।
दृश्यन्ते प्रायशः स्वर्गे कुशद्वीपे हिमालये ॥१॥
धूम्रवर्णं महासारं तीक्ष्णधारं खरस्वरम् ।
सर्व्वाघातसहं सर्व्वनेत्रवर्ण्यस्वराकरम् ॥
खड्गं क्षत्त्रियजातिं तं जानीयात् खड्गकोविदः ।
अस्य क्षते भवेद्दाहतृषाणाम्नो ज्वरो भ्रमः ॥
मृत्युश्च जायते घ्राणे वमेद्वह्निकणान् वहून् ।
संस्कारे चाप्यसंस्कारे नैर्म्मल्यं तस्य लभ्यते ॥
घ्राणेऽप्यघ्राणे खरता स्वहि चात्यन्ततीक्ष्णता ।
रत्नाघर्षणमात्रेण विशेदन्तरमन्तरम् ॥
अयं खड्गवरः पूज्यो मनुष्यैरपि लभ्यते ॥२॥
नीलवर्णः कृष्णवर्णः संस्कारे निर्म्मलो भवेत् ॥
घ्राणेन खरता चास्य घाततुल्यं निहन्ति ।
वैश्यजातिरयं खड्गः क्षते त्वक्क्षानदर्शनम् ॥
नात्युत्कृष्टो नातिहीनं सर्व्वत्रैवोपलभ्यते ॥३॥
सजलाम्भोदसङ्काशः स्थूलधारो मृदुस्वरः ॥
संस्कारे चैव मलिनः घ्राणे चापि खरेतरः ।
शूद्रजातिरयं खड्गः क्षते नाल्पापि वेदना ॥
दूरादेषोऽधमस्त्याज्यो यदीच्छेद्धितमात्मनः ।
प्रायशः सर्व्वलोकेषु स्वयमेवोपदृश्यते ॥४॥
द्वयोर्लक्षणमालोक्य जारजं खड्गमादिशेत् ।
त्रयाणां लक्षणैनैव त्रिजातिं खड्गमादिशेत् ।
चतुर्णां लक्षणेनैव जातिसङ्करमुच्यते ॥”
इति लौहार्णवस्य खड्गपरीक्षायां जात्य-
ध्यायः ॥ * ॥
अथ त्रिंशन्नेत्राणां लक्षणानि ।
“चक्राकारं यदा नेत्रं खड्गस्याङ्गे प्रदृश्यते ।
तं चक्रनेत्रं जानीयात् भर्त्तुः सर्व्वार्थसाधनम् ॥
अनेनैकेन खड्गेन शत्रूणां साधयते महीम्॥१॥
प्रफुल्लपद्मसङ्काशं नेत्रं पद्मदलोपमम् ॥
यदि वा दृश्यते खड्गे पद्मनेत्रं समादिशेत् ।
अयं खड्गवरो यत्र तत्रैव कमलालया ॥२॥
ऊर्द्धा स्थूला यदा रेखा गदाकारा प्रतीयते ।
गदानेत्रमिदं विद्धि सर्व्वशत्रुनिसूदनम् ॥३॥
शस्त्राकारं यदा नेत्रं खड्गमध्ये निदृश्यते ।

अरिष्टमेकमेव स्याद्विररिष्टं शुभावहम्।
अन्योन्यमशुभं हन्याद्विषस्य हि विषं यथा ॥
एकमारभ्य सप्तान्तमरिष्टं प्राह नान्यथा।
यथोत्तरं द्विगुणितं फलमाहुर्मनीषिणः ॥
इति खड्गपरीक्षायामरिष्टाध्यायः षष्ठः ॥*॥
अथ द्विविधा भूमिः।
दिव्यभौमविभागेन भूमिर्या द्विविधा मता।
दिव्या दिवि समुद्भूता भौमा भूमिसमुद्भवा ॥
तल्लक्षणमशेषेण लिख्यते तन्निबोधत।
देवदानवयोर्मध्ये खड्गवृष्टिरभूत् पुरा ॥
ते खड्गाः पुण्यदेशेषु केषु केषु प्रतिष्ठिताः ॥
दिव्यलक्षणं यथा,—
ये खड्गाः स्थूलधारा भृशमतिलघवो निर्म्म-
लाङ्गाः सुनेत्रा
ये दिव्याश्चास्वरूपाः सुविमलतनवश्चाप्यसंस्कार-
योगात्।
दुर्भेद्या दुर्घटाश्च ध्वनिगुणगुरवो यत्सहते दाह-
पाकौ
ते दिव्याः कुर्व्वतेऽमी कुलधनविजयश्रीयशो-
वृद्धिमायुः ॥१॥
अथ भौमलक्षणं वृद्धहारीते।
पूर्व्वं महेशेन विषाणि यानि
भुक्तानि तेषां पतितास्तु विन्दवः।
यस्मिन् प्रदेशे स स एव देशः
कालायसामाकरतां जगाम ॥
पुरामृतं क्षीरसमुद्रमध्या-
दुत्पाद्य संगृह्य ययुः सुरेन्द्राः।
तद्विन्दवो यत्र निपेतुरेव
शुद्धायसामाकरतां जगाम ॥
ये विषोत्था भृशङ्कालाः खराङ्गाः सम्भवन्ति हि।
मूर्च्छादाहज्वरानाहशोकहिक्कावमीकराः ॥
येऽमृतोत्थाः कर्वुराङ्गा मन्दाङ्गाः संभवन्ति च।
वलीपलितमालिन्यजराव्याधिविनाशनाः ॥
यत्रैव पतितं यत्तु तत्तदाकरताङ्गताः ॥
तद्यथा,—
वाराणसीमगधसिंहलभूमिभागे
नेपालभूमिषु तथाङ्गमहीप्रदेशे।
सौराष्ट्रकेऽन्यतरवन्यमहीविभागे
शुद्धायसां क्षितिवराः प्रवदन्ति जन्म ॥
तद्यथा,—
वाराणसेयाः सुस्निग्धास्तीक्ष्णधाराः सदङ्गिनः।
लघवः सुखसन्धेया ज्ञेयाश्चाभेद्यशालिनः ॥
मागधाः कर्कशाः स्थूलधारा गूढतराङ्गिनः।
गुरवो दुःखसन्धेयाः खड्गा ज्ञेया विचक्षणैः ॥
नेपालदेशप्रभवा निरङ्गा निश्चलाश्च ये।
ज्ञेयाः सदङ्गा मलिना लघवः स्थूलधारिणः ॥
काजिङ्गा गुरवः स्वच्छा यक्ताङ्गास्तनुहेतवः।
सौराष्ट्रा निर्म्मलाः स्निग्धाः सुयक्ताङ्गा भृशं
खराः ॥
सिंहलद्वीपजातानां चतुर्द्धा भेद उच्यते।
केचित् सदङ्गा गुरवः कर्कशाः स्निग्धधारिणः ॥
केचित् सदङ्गा लघवः सुस्निग्धा स्थूलधारिणः।

एषां रूपेण मिश्रेण ज्ञेया हि द्विजजातयः ॥
सामान्यात् द्विगुणञ्चौड़ं कलिदेशगुणस्ततः।
कलेः शतगुणं भद्रं भद्राद्वङ्गं सहस्रधा।
वङ्गात् षष्ठिगुणः पाञ्चैर्निरविद्देशभिर्गुणैः।
ततः कोटिसहस्रेण ह्ययस्कान्तः प्रशस्यते ॥”
इत्यादिकं रसायनौपयौगिकमेव न तु खड्गे
दृष्टफलम् ॥ यदाह।
आसान्तु लौहजातीनां वक्ष्ये खड्गाय युज्यते।
तथाच।
ये खड्गास्तीक्ष्णधारा भृशमतिगुरवः षड्-
गुणाढ्याः सुभेद्याः
केचित् साङ्गा निरङ्गाः क्वति च न समला
निर्म्मलाः केचिदेव।
ते भौमाः कुर्व्वतेऽमी धनविजयबलं षड्गुणा
निर्गुणा वा
दे दुःखं शोकमुग्रं दधति बलकुलश्रीयशोनाश-
कास्ते ॥
इति खड्गपरीक्षायां भूम्यध्यायः सप्तमः ॥२*॥
अथाष्टधा ध्वनिः।
ध्वनिरष्टविधः प्रोक्तो यः पूर्व्वं ग्रन्थसंग्रहे।
तेषामपि लिखाम्यत्र सगुणं लक्षणाष्टकम् ॥
तद्यथा,—
पूर्व्वं चत्वारः शुभदाः परे निन्द्यास्तदा तथा।
विचार्य्य खड्गमानञ्च कर्त्तव्यं खड्गकोविदैः ॥
घोरस्तार इति ख्यातो द्विविधः खड्गकोविदैः।
घोरः स्यात् सुखसम्पत्त्यै तार उच्चाटने मतः ॥
यत्र हंसरवस्येव खड्गे नखहते ध्वनिः।
हंसध्वनिरयं खड्गः सकलार्थप्रसाधनः ॥१॥
कांस्यशब्द इवाभाति यस्मिन् खड्गे हते ध्वनिः।
कांस्यध्वनिरयं खड्गः प्राह नागार्ज्जुनो
मुनिः ॥२॥
अभ्रस्य लक्षणं पतितम् ॥३॥
ढक्काशब्द इवाभाति यस्मिन् खड्गे हते ध्वनिः।
ढक्काध्वनिरयं खड्गः सर्व्वशत्रुनिसूदनः ॥४॥
काकस्वर इवाभाति यस्मिन् खड्गे हते ध्वनिः।
काकस्वरोऽयं खड्गः स्यात् श्रीयशःकुल-
नाशनः ॥५॥
तन्त्रीस्वरसमो यस्मिन् भवेत् खड्गे हते ध्वनिः।
तन्त्रीध्वनिरयं खड्गः कुलश्रीधननाशनः ॥६॥
खरस्येव ध्वनिर्यस्मिन् खरध्वनिरयं मतः।
श्रीयशोज्ञानविज्ञानजयतेजोविनाशनः ॥७॥
प्रस्तरस्येव यः खड्गः स निन्द्यः खड्ग-
लक्षणे ॥८॥
गभीरतारध्वनिता खड्गस्याशुभलक्षणम्।
उत्तानमन्द्रध्वनिता खड्गस्याशुभलक्षणम् ॥
अपाङ्गनेत्रहीनोऽपि खड्गः सुध्वनिरुत्तमः।
अन्धः कुरूपो मनुजो यथा भुवि सुगायनः ॥
सर्व्वलक्षणसम्पन्नः खड्गो यो ध्वनिवर्ज्जितः।
स निन्द्यः सुन्दराङ्गोऽपि यथा वाक्यविवर्जितः ॥
नखेन चाथ दण्डेन तथा लौहशलाकया।
लोष्टेन शर्कराभिर्व्वा ध्वनिविज्ञानमुच्यते ॥”
इति खड्गपरीक्षायां ध्वन्यध्यायोऽष्टमः ॥*॥

अथ द्विविधं मानम्।
यन्मानं द्विविधं प्रोक्तं तस्य लक्षणमुच्यते।
उत्तमाधमभेदेन भेदो हि द्विविधो मतः ॥
उत्तमं यद्विशालं स्याल्लघुमानं प्रकीर्त्तितम् ॥१॥
अधमं तत्र यत् खर्व्वं गुरुमानं प्रकीर्त्तितम् ॥२॥
तत्पुनस्त्रिविधं प्रोक्तमादिमध्यान्तभेदतः।
यो मुष्टिविंशतिसमायततीव्रधारो
भर्त्तुर्भवेत् प्रसरतोऽपि षड़ङ्गुलीभिः।
मानेन चाष्टपलिकः स हि खड्गमध्ये
नातिप्रकृष्टनिकृष्टफलप्रदः स्यात् ॥
यो द्वादशाष्टनवमुष्टिभिरायतः स्यात्
मन्दो भवेत् प्रसरतोऽपि चतुर्थभागः।
तावत्पलैः परिमितस्तु ततोऽधिको वा
खड्गाधमो धनयशःकुलनाशनाय ॥
नागार्ज्जुनोऽपि।
यावत्यो मुष्टयो दैर्घ्ये तदर्द्धाङ्गुलयो यदा।
प्रसरे तच्चतुर्थांशमिति वै मानमुत्तमम् ॥
यावत्यो मुष्टयो दैर्घ्ये प्रसरे तत्त्रिभागिकः।
पलैस्तदर्द्धैस्तुलितः स खड्गो मध्य उच्यते ॥
यावत्यो मुष्टयो दैर्घ्ये तुर्य्यांशः प्रसरे तु तत्।
अधमः कीर्त्तितः खड्गस्तत्समो वाधिकः
पलैः ॥
भौमानामिदमुद्दिष्टं दिव्यास्तु लघवो मताः ॥”
इति खड्गपरीक्षायां मानाध्यायः ॥ * ॥
भोजस्तु।
“दीर्घता लघुता चैव स्वरविस्तीर्णता तथा।
दुर्भेद्यता सुघटता खड्गानां गुणसंग्रहः ॥
खर्व्वता गुरुता चैव मन्दता तनुता तथा।
सुभेद्यता दुर्घटता खड्गानां दोषसंग्रहः ॥
इति निखिलमुदारमुक्तमत्र
बहुतन्त्रेषु निरूप्य खड्गवृष्टेः।
नृपतिरिति विचिन्त्य यो विधत्ते
स चिरतरां श्रियमूर्ज्जितां लभेत ॥”
इति युक्तिकल्पतरूक्तखड्गपरीक्षा समाप्ता ॥
तरसं, क्ली, (तॄ + बाहुलकात् असच्।) मांसम्।
इत्यमरः। २।६।६३ ॥ (यथा, कात्यायन-
श्रौतसूत्रे।
“तरसमयाः पूर्व्वोक्तभागाः ॥”
“तरसमया मांसमयाः।” इति कर्कः ॥)
तरस्थानं, क्ली, (तराय अवतरणाय यत् स्थानम्।
तरस्य स्थानं वा।) घट्टः। इति जटाधरः ॥
तरस्वान्, [त्] त्रि, (तरो बलं वेगो वा अस्त्य-
स्येति मतुप्। मस्य वः।) शूरः। वेगी।
इति व्याकरणम् ॥ (चतुर्थमनुपुत्रविशेषः।
यथा, हरिवंशे। ७। ८८।
“तरस्भीरुर्व्वंशश्च तरस्वानुग्र एव च।
अभिमानी प्रवीरश्च जिष्णुः सङ्क्रन्दनस्तथा ॥”)
तरस्वी, [न्] त्रि, (तरो वेगः बलं वास्त्यस्य।
तरस् + “अस्मायामेधास्रजो विनिः।” ५।२।
१२१। इति विनिः।) शूरः। वेगी। इत्यमरः।
३।३।१२७। (यथा, भागवते। ८। १०। ३१।
“राहुणा च तथा सोमः पुलोम्ना युयुधेऽनिलः।

तुङ्गः, पुं, (तुजि हिंसायाम् + घञ् ।) पुन्नागवृक्षः ।
(यथा, वैद्यकरत्नमालायाम् ।
"कुम्भीकः पुरुषस्तुङ्गः पुन्नागो रक्तकेशरः ॥")
पर्व्वतः । बुधग्रहः । इति हेमचन्द्रः । ६ । ६४ ॥
नारिकेलः । गण्डकः । इति राजनिर्घण्टः ॥
योगभेदः । इति शब्दरत्नावली ॥ स तु ग्रहाणां
उच्चराशिः । यथा,—
"सूर्य्यादुच्चान् क्रियवृषमृगाङ्गनाकुलीरान्त्ययुक्के
दिग्वह्नीन्द्रद्वयतिथिशरान् सप्तविंशांश्च विंशान् ।
अंशानेतान् वदति जवनस्त्वन्यतुङ्गान् सुतुङ्गां-
स्तानेवांशान् मदनभवनेष्वाह नीचान् सुनी-
चान् ॥"
इति दीपिका ॥
"आदित्यमेषे वृषभे शशाङ्के
कन्यागते ज्ञे च गुरौ कुलीरे ।
मीने च शुक्रे मकरे महीजे
शनौ तुलायामिति तुङ्गगेहाः ॥"
इति समयामृतम् ॥ * ॥
अथ तुङ्गस्थग्रहफलम् ।
"तुङ्गेऽर्कः शुभसंयुतः शुभकरैर्मित्रैश्च दृष्टो यदा
दैवात् पश्यति सोऽपि वा शुभकरानेकं द्विकं वा
त्रिकम् ।
विशेषः प्रथितो विमर्द्दितरिपुः शौर्य्येशमान्यो
यदा
क्ष्मापालार्च्चितपादपद्मयुगलो राजा त्रिकोणे
यदा ॥
तुङ्गे चन्द्रमसि प्रसन्नवपुषि जन्मादनष्टद्युतौ
प्रख्यातोऽरिविमर्द्दकोऽगदतनू राजेश्वरो रूप-
वान् ।
क्ष्मापालार्च्चितपादपद्मयुगलो वा धर्म्मशीलो
महान्
सौख्यैरेव युतोऽथवा प्रियतमैर्द्दृष्टे त्रिकोणेऽपि
च ॥
यदि भवति मृगस्थो भूमिपुत्त्रस्तदा वै
न दिनकरमयूखाद्भ्रष्टरश्मिर्नरेन्द्रः ।
अगदतनुरभीतः शत्रुदर्पापहारी
प्रहतरिपुनरेन्द्रः स्यात्त्रिकोणेऽपि जातः ॥
कन्याशः शशलाञ्छनस्य तनयस्त्र्यंशकैः
संयुतो
दृष्टो वा यदि संयुतः शुभकरैर्ज्ञातस्तदा
भूपतिः ।
यात्रायां तुरगोग्रमत्तकरिणां यातैर्मही कम्पते
तस्मादम्बरवीथिका विगलिता यान्ति त्रिकोणे-
ऽपि च ॥
तुङ्गे गुरौ मित्रखगेन दृष्टो
राजा भवेदिन्द्रसमानमूर्त्तिः ।
गजाश्वनौकानरपूर्णलक्ष्मीः
पृथ्वीपतिः स्वस्य त्रिकोणगेऽपि ॥
तुङ्गे भृगौ शुभसुहृत्प्रयुते च दृष्टे
दैवात् पुनः स यदि पश्यति मित्त्रसंघान् ।
भूपाधिपो भवति कीर्त्तिकरप्रधानो
दीर्घायुरुग्रसुखसुग्भृगुजे त्रिकोणे ॥
तुङ्गे शनौ मित्त्रखगेन दृष्टे
प्रचण्डदण्डो नृपतिप्रधानः ।
न दृश्यते दिग्गमने च पृथ्वी
त्रिकोणगे चापि नरेन्द्रमूर्त्तिः ॥
भवति धरणिपालो नीचबुद्धिः प्रतापी
हयगजधनपूर्णो जातिवर्गे विरक्तः ।
कुटिलमतिरनीतो भूरिभाण्डारयुक्त-
स्तमसि मिथुनसंस्थे जायते मानवेन्द्रः ॥
मृगपतिमृगकन्याकर्कटस्थे च राहौ
भवति विपुललक्ष्मी राजराजाधिपो वा ।
हयगजनरनौकामण्डितः सार्व्वभौमो
नृपतिरमरपूज्यो राहुतुङ्गी चिरायुः ॥
अरिनिधनव्ययतुङ्गे कीर्त्तितमेतत् फलं व्यर्थम् ।
केन्द्रत्रिकोणे लाभे वा तुङ्गफलं यथोद्दिष्टम् ॥"
इति कोष्ठीप्रदीपः ॥
तुङ्गः, त्रि, (तुजि हिंसायाम् + घञ् ।) उग्रः ।
प्रधानम् । उन्नतः । इति शब्दरत्नावली ॥ (यथा,
रघुः । ६ । ३ ।
"शिलाविभङ्गैर्मृगराजशाव-
स्तुङ्गं नगोत्सङ्गमिवारुरोह ॥"
प्रचुरः । यथा, तत्रैव । ४ । ७० ।
"तेषां सदश्वभूयिष्ठास्तुङ्गा द्रविणराशयः ॥")
किञ्जल्के क्ली । इति राजनिर्घण्टः ॥
तुङ्गकः, पुं, (तुङ्ग + स्वार्थे संज्ञायां वा कन् ।) पुन्नाग-
वृक्षः । इति शब्दरत्नावली ॥ (अरण्यरूप-
तीर्थविशेषे, क्ली । यथा, महाभारते । ३ । ८५ ।
४६-५४ ।
"तुङ्गकारण्यमासाद्य ब्रह्मचारी जितेन्द्रियः ।
वेदानध्यापयत् तत्र मुनीन् सारस्वतः पुरा ॥
तत्र वेदेषु नष्टेषु मुनेरङ्गिरसः सुतः ।
ऋषीणामुत्तरीयेषु उपविष्टो यथासुखम् ॥
ओँकारेण यथान्यायं सम्यगुच्चारितेन ह ।
येन यत् पूर्व्वमभ्यस्तं तत् सर्व्वं समुपस्थितम् ॥
ऋषयस्तत्र देवाश्च वरुणोऽग्निः प्रजापतिः ।
हरिर्नारायणस्तत्र महादेवस्तथैव च ॥
पितामहश्च भगवान् देवैः सह महाद्युतिः ।
भृगुं नियोजयामास याजनार्थे महाद्युतिम् ॥
ततः स चक्रे भगवानृषीणां विधिवत्तदा ।
सर्व्वेषां पुनराधानं विधिदृष्टेन कर्म्मणा ॥
आज्यभागेन तत्राग्निं तर्पयित्वा यथाविधि ।
देवाः स्वभवनं याता ऋषयश्च यथाक्रमम् ॥
तदरण्यं प्रविष्टस्य तुङ्गकं राजसत्तम ! ।
पापं प्रणश्यत्यखिलं स्त्रिया वा पुरुषस्य वा ॥
तत्र मासं वसेद्धीरो नियतो नियताशनः ।
ब्रह्मलोकं व्रजेद्राजन् ! कुलञ्चैव समुद्धरेत् ॥")
तुङ्गभद्रः, पुं, (तुङ्ग उच्चोऽपि भद्रः ।) मदोत्-
कटहस्ती । इति मेदिनी । रे, २६३ ॥
तुङ्गभद्रा, स्त्री, (तुङ्गा प्रधाना भद्रा निर्म्मला च ।)
नदीविशेषः । सा दक्षिणे प्रसिद्धा । (यथा,
मत्स्यपुराणे । ११३ । २८ ।
"तुङ्गभद्रा सुप्रयोगा वाह्या कावेरी चैव तु ।
दक्षिणापथनद्यस्ताः सह्यपादाद्विनिःसृताः ॥")
तस्या जलस्य गुणाः । स्निग्धत्वम् । निर्म्मल-
त्वम् । स्वादुत्वम् । गुरुत्वम् । कफपित्तासदाहक-
त्वम् । प्रायःशाल्मलत्वम् । मेधाकरत्वञ्च । इति
राजनिर्घण्टः ॥
तुङ्गशेखरः, पुं, (तुङ्गान्युच्चानि शेखराणि शृङ्गाणि
यस्य ।) पर्व्वतः । इति शब्दमाला ॥
तुङ्गा, स्त्री, (तुङ्ग + टाप् ।) वंशलोचना । शमी ।
इति राजनिर्घण्टः ॥ (अस्याः पर्य्याया यथा,—
"शमी शक्तुफला तुङ्गा केशहन्त्री शिवा फला ।
मङ्गल्या च तथा लक्ष्मीः शमीरः शल्पिका
स्मृता ॥"
इति भावप्रकाशस्य पूर्व्वखण्डे प्रथमे भागे ॥)
तुङ्गिनी, स्त्री, (तुङ्गो वृक्षविशेषस्तद्वदाकृति-
रस्त्यस्याः । तुङ्ग + इनिः । ङीप् ।) महाशता-
वरी । इति राजनिर्घण्टः ॥
तुङ्गी, स्त्री, (तुङ्ग + गौरादित्वात् ङीष् ।) हरिद्रा ।
वर्व्वरी । इति मेदिनी । गे, ८ ॥ (अस्याः
पर्य्याया यथा, भावप्रकाशस्य पूर्व्वखण्डे १भागे ।
"वर्व्वरी तुवरी तुङ्गी खरपुष्पाजगन्धिका ।
पर्णाशस्तत्र कृष्णे तु कठिञ्जरकुठेरकौ ॥"
रात्रिः । इति त्रिकाण्डशेषः ॥)
तुङ्गी, [न्] पुं, (तुङ्गः उच्चस्थानं आश्रयत्वेन
अस्त्यस्य । इनिः ।) तुङ्गस्थानस्थितः । उच्चस्थ-
ग्रहः । इति ज्योतिषम् ॥
तुङ्गीपतिः, पुं, (तुङ्ग्या निशायाः पतिः ।) चन्द्रः ।
इति त्रिकाण्डशेषः ॥
तुङ्गीशः, पुं, (तुङ्गी सर्व्वप्रधान ईशः प्रभुश्च ।)
शिवः । कृष्णः । सूर्य्यः । इति शब्दरत्नावली ॥
तुच्छं, क्ली, (तौति असारत्वं गच्छतीति । तु +
"छोऽदिकचिभ्यां तुतुभ्यान्तु कित् पीयूडोः स्वः ।"
२ । ३३ । उणादिकोषटीकाधृतसूत्रात् छः स
च कित् ।) पुलाकजम् । इत्युणादिकोषः ॥
भुषि इति भाषा ॥
तुच्छः, त्रि, (तुद् + क्विप् । तेन तं वा छ्यतीति ।
छो + कः ।) शून्यः । इत्यमरः । ३ । १ । ५६ ॥
हीनः । इत्युणादिकोषः ॥ (यथा, भागवते ।
७ । ७ । ४५ ।
"किमेतैरात्मनस्तुच्छैः सह देहेन नश्वरैः ॥")
अल्पः । इति हेमचन्द्रः । ६ । ६२ ॥
तुच्छद्रुः, पुं, (तुच्छो हीनो द्रुर्वृक्षः ।) एरण्ड-
वृक्षः । इति शब्दचन्द्रिका ॥
तुच्छधान्यकं, क्ली, (तुच्छं धान्यम् । अल्पार्थे
कन् ।) पलाकः । इति रत्नमाला ॥ आगड़ा
इति भाषा ॥
तुच्छा, स्त्री, (तुच्छ + टाप् ।) तुत्था । नीली-
वृक्षः । इति भावप्रकाशः ॥ (सूक्ष्मैला । गुज-
राटदेशीया एलाची । अस्याः पर्य्याया यथा,
"सूक्ष्मोपकुञ्चिका तुच्छा कोरङ्गी द्राविडी
त्रुटिः ॥"
इति भावप्रकाशस्य पूर्व्वखण्डे प्रथमे भागे ॥)
तुज, हिंसे । इति कविकल्पद्रुमः ॥ (भ्वां-परं-
सकं-सेट् ।) तोजति । इति दुर्गादासः ॥

तुन्दपरिमृज:, त्रि, ( तुन्दमुदरं परिमार्ष्टीति । परि+मृज+"तुन्दशोकयो: परिमृजापनुदो: ।" ३ । २ । ५ । इत्यत्र "आलस्यसुखाहरणयोरिति वक्तव्यम् ।" इति वार्त्तिकोक्त्या क: । ) अलस: । इत्यमर: । २ । १० । १८ ॥

तुन्दि, स्त्री, ( तुद+इन् बाहुलकात् नुम् च । ) उदरम् । इति हेमचन्द्र: । ३ । २६८ ॥ गन्धर्व्वविशेषे, पुं । इति जटाधर: ॥

तुन्दि:, स्त्री, ( तुद्+इन् बाहुलकात् नुम् च । ) नाभि: । इति त्रिकाण्डशेष: ॥

तुन्दिक:, त्रि, ( अतिशयितं तुन्दमुदरमस्त्यस्य । "तुन्दादिभ्य इलच ।" ५ । २ । ११७ । इति चकारात् ठन् । ) विशालजठरो जन: । इति शब्दरत्नावली ॥

तुन्दिका, स्त्री, ( तुन्दमुदरं आश्रयत्वेनास्त्यस्या: । तुन्द+ठन् टाप् च । ) नाभि: । इति शब्दरत्नावली ॥

तुन्दित:, त्रि, तुन्दिल: । इति भरतस्य द्विरूपकोष: ॥

तुन्दिभ:, त्रि, (तुन्दिर्वृद्धा नाभिरस्त्यस्येति । तुन्दि+"तुन्दिवलिवटेर्भ: ।" ५ । २ । १३९ । इति भ: । ) तुन्दिल: । इति शब्दरत्नावली ॥

तुन्दिल:, त्रि, ( तुन्दं विशालमुदरमस्त्यस्येति । तुन्द+"तुन्दादिभ्य इलच ।" ५ । २ । ११७ । इतीलच् । ) विशालजठरो जन: । भुँड़े इति भाषा ॥ तत्पर्य्याय: । पिचिण्डिल: २ बृहत्कुक्षि: ३ तुन्दिक: ४ तुन्दिभ: ५ तुन्दी ६ । इति शब्दरत्नावली ॥

तुन्दिलफला, स्त्री, ( तुन्दिलवत् फलमस्या: । ) त्रपुषी । इति राजनिर्घण्ट: ॥

तुन्दी, स्त्री, ( तुन्दि+वा ङीष् । ) नाभि: । इति शब्दरत्नावली ॥

तुन्दी, [ न् ] त्रि, (तुन्दं विशालमुदरमस्त्यस्येति । "तुन्दादिभ्य इलच ।" ५ । २ । ११७ । इति चकारात् इनि: । ) तुन्दिल: । इति शब्दरत्नावली अमरश्च ॥

तुन्न:, पुं, (तुद्यते इति । तुद+क्त: । ) नन्दीवृक्ष: । तुँद इति भाषा । इत्यमर: । २ । ४ । १२७ ॥ त्रि, व्यथित: । ( यथा, रामायणे । २ । १४ । २३ ।
"स तुन्न इव तीक्ष्णेन प्रतोदेन हयोत्तम: ।
राजा प्रचोदितोऽभीक्ष्णं कैकेयीमिदमब्रवीत् ॥"
छिन्ने । द्विधाकृते च ॥ )

तुन्नवाय:, पुं, ( तुन्नं छिन्नं वयतीति । वे+"ह्वावामश्च ।" ३ । २ । २ । इत्यण् । ) सौचिक: । इत्यमर: । २ । १० । ६ ॥ दरजी इति भाषा ॥ ( यथा, मनु: । ४ । २१४ ।
"शैलूषतुन्नवायान्नं कृतघ्नस्यान्नमेव च ॥")

तुन्प, वधे । इति कविकल्पद्रुम: ॥ (भ्वा-परं-सकं-सेट् । ) तुम्पति । इति दुर्गादास: ॥

तुन्प, श वधे । क्लेशे । इति कविकल्पद्रुम: ॥ ( तुदां-सकं-अकं च-सेट् । ) श, तुम्पति तुतुम्प । तुम प श तुन्प श क्लिशि वधे इत्येताभ्यामेव तुम्पति तुपतीति सिद्धौ तुन्प वधे इत्यस्य भ्वादौ पाठस्तु वेदे शबन्तस्य शान्तस्य चोच्चारणभेदार्थ: । इति दुर्गादास: ॥

तुन्फ, वधे । इति कविकल्पद्रुम: ॥ ( भ्वा-परं-सकं-सेट् । ) तुम्फति । इति दुर्गादास: ॥

तुन्फ, श वधे । क्लेशे । इति कविकल्पद्रुम: ॥ ( तुदां-परं-सकं-अकं च-सेट् । ) श, तुफति तुतुम्फ । इति दुर्गादास: ॥

तुप, वधे । इति कविकल्पद्रुम: ॥ ( भ्वा-परं-सकं-सेट् । ) तोपति । इति दुर्गादास: ॥

तुप, इ क अर्द्दने । इति कविकल्पद्रुम: ॥ ( चुरां-परं-सकं-सेट् । ) पञ्चमस्वरी । इ क, तुम्पयति । अर्द्दनं वध: । इति दुर्गादास: ॥

तुप, प श क्लेशे । वधे । इति कविकल्पद्रुम: ॥ (तुदां-परं-अकं-सकं च-सेट् । ) प श, तुम्पति तुतोप । इति दुर्गादास: ॥

तुफ, वधे । इति कविकल्पद्रुम: ॥ ( भ्वा-परं-सकं-सेट् । ) तोफति । इति दुर्गादास: ॥

तुफ, प श क्लेशे । वधे । इति कविकल्पद्रुम: ॥ ( तुदां-परं-अकं-सकं च-सेट् । ) प श, तुम्फति तुतोफ । इति दुर्गादास: ॥

तुब, इ कि अर्द्दे । इति कविकल्पद्रुम: ॥ ( चुरां-पक्षे भ्वा-परं-सकं-सेट् । ) तवर्गाद्यादि: । पञ्चमस्वरी । इ, तुम्बते । कि, तुम्बयति तुम्बति । अर्द्दो वध: । इति दुर्गादास: ॥

तुभ, ऌ ङ हिंसे । इति कविकल्पद्रुम: ॥ ( भ्वा-आत्मं-सकं-सेट् । ) ऌ, अतुभत् । ङ, तोभते । इति दुर्गादास: ॥

तुभ, य ग हिंसे । इति कविकल्पद्रुम: ॥ (दिवां-क्र्यां च-परं-सकं-सेट् । ) य, तुभ्यति । ग, तुभ्नाति । तुतोभ । इति दुर्गादास: ॥

तुमर:, पुं स्त्री, ( तुमुल: । रस्य ल: । ) तुमुल: ॥ इत्यमरटीकायां रायमुकुट: ॥ ( क्षत्रियजातिविशेष: । यथा, मात्स्ये । ११३ । ५३ ।
"तुमरास्तुम्बराश्चैव पञ्चमा नैषधै: सह ॥")

तुमुलं, क्ली, ( तु सौत्रो धातु:+बाहुलकात् मुलक् । ) रणसङ्कुलम् । सङ्कीर्णयुद्धम् । इत्यमरमेदिनीकरौ ॥ परस्परसम्बाधो रणसंघट्ट: । इति भरत: ॥ (यथा, देवीभागवते । ५।४१।२८ ।
"तत्राभूत्तुमुलं युद्धं देवदानवसैन्ययो: ॥")

तुमुल:, पुं, ( तु+बाहुलकात् मुलक् । ) कलिवृक्ष: । इति मेदिनी । ले, ६८ ॥ व्याकुलो रण: । इति त्रिकाण्डशेष: ॥ ( प्रचण्डे उग्रे सङ्कुलमात्रे च त्रि । यथा, राजतरङ्गिण्याम् । ४ । ५४१ ।
"एकस्य करुणाक्रन्दै: सैन्यस्यान्यस्य गर्ज्जितै: ।
सरित्तरङ्गघोषैश्च बभूवुस्तुमुला दिश: ॥"
तथा, महाभारते । १ । ५३ । १२ ।
"ववौ गन्धश्च तुमुलो दह्यतामनिशं तदा ॥")

तुम्ब:, पुं स्त्री, ( तुम्बति नाशयत्यरुचिमिति । तुम्ब अर्द्दने+अच् । ) अलावु: । इत्यमरटीकायां भरत: ॥ ( अलाबो: शुष्कत्वक् । यथा, हरिवंशे । ६४ । ५ ।
"सद्यिकयतुम्बकरकौ गोपवेणुप्रवादकौ ॥")

तुम्बक:, पुं, (तुम्बति अरुचिमिति । तुम्ब+ण्वुल् ।) अलावु: । इति शब्दरत्नावली ॥ राजालावु: । इति राजनिर्घण्ट: ॥

तुम्बा, स्त्री, ( तुम्ब+टाप् । ) अलावु: । इति शब्दरत्नावली ॥ ( यथा, आर्य्यासप्तशत्याम् । ७ ।
"श्यामावतीसमविडम्बा गवेन नवतुम्बाभवीण-सविधा
शं बाहुलेयशशिविम्बाभिरामसुखसंबाधित-स्तनभरा ॥")
गवी । इति त्रिकाण्डशेष: ॥

तुम्बि:, स्त्री, ( तुम्बति नाशयत्यरुचिमिति । तुबि अर्द्दने+"सर्व्वधातुभ्य इन् ।" उणां ४ । ११७ । इतीन् । ) अलावु: । इति शब्दरत्नावली ॥ ( अलावुशब्देऽस्या विवरणं ज्ञातव्यम् ॥)

तुम्बिका, स्त्री, (तुम्ब अर्द्दने+ण्वुल् । टापि अत इत्वम् । ) अलावु: । इति शब्दरत्नावली ॥ कटुतुम्बी । इति राजनिर्घण्ट: ॥

तुम्बिनी, स्त्री, ( तुम्बति नाशयत्यरुचिमिति । तुम्ब+णिनि: ङीप् । ) कटुतुम्बी । इति राजनिर्घण्ट: ॥

तुम्बी, स्त्री, ( तुम्बि+कृदिकारादिति वा ङीष् ।) अलावु: । इत्यमर: । २ । ४ । १५६ ॥ ( यथा, शान्तिशतके । ३ । १६ ।
"अरे चेतोमीन ! भ्रमणमधुना यौवनजले
त्यज त्वं स्वच्छन्दं युवतिषु जलधौ पश्यसि न किम् ।
तनूजालीजालं स्तनयुगलतुम्बीफलयुगं
मनोभू: कैवर्त्त: क्षिपति परितस्त्वां प्रति सह्: ॥"
"अलावु: कथिता तुम्बी द्विधा दीर्घा च वर्त्तुला ।
मिष्टं तुम्बीफलं हृद्यं पित्तश्लेष्मापहं गुरु ॥
वृष्यं रुचिकरं प्रोक्तं धातुपुष्टिविवर्द्धनम् ॥"
इति भावप्रकाशस्य पूर्व्वखण्डे प्रथमे भागे ॥ )
कुलिकवृक्ष: । इति रत्नमाला ॥

तुम्बीपुष्पं, क्ली, (तुम्ब्या: पुष्पमिव पुष्पमस्य ।) क्षारमुत्तम् । अलावुपुष्पम् । इति हारावली । २०२ ॥

तुम्बुकं, क्ली, (तुम्ब+बाहुलकात् उक: ।) अलावुफलम् । इति हेमचन्द्र: ॥

तुम्बुक:, पुं, (तुम्ब+बाहुलकात् उक: ।) अलावु: । इति भरतधृतहेमचन्द्र: ॥

तुम्बुरी, स्त्री, ( तुम्बवदाकारं रातीति । रा+क: । ङीष् । पृषोदरादित्वादुत्वम् । ) कुक्कुरी । धन्याकम् । इति मेदिनी । रे, १६३ ॥

तुम्बुरु, क्ली, कुस्तुम्बुरु । इत्यमरटीकायां भरत: ॥ ( यथा, वैद्यके ।
"तुम्बुरुश्टङ्गवेराङ्कन्दकं कटुरोहिणी ॥"
अस्य तैलगुणा: ।
"तुम्बुरुत्थं करञ्जोत्थं ज्योतिष्मत्युद्भवन्तथा ।
अर्शःकुष्ठकृमिश्लेष्मशुक्रमेदोऽनिलापहम् ॥"
इति हारीते प्रथमे स्थाने नवमेऽध्याये ॥)

तुलसीं ये विचिन्वन्ति धन्यास्ते करपल्लवाः ॥"

इति ॥ * ॥

"संक्रान्त्यादौ निषिद्धोऽपि तुलस्यवचयः स्मृतः ।
परं श्रीविष्णुभक्तैस्तु द्वादश्यामेव नेष्यते ॥" * ॥

अथ तुलस्यवचयनिषेधकालः । विष्णुधर्म्मोत्तरे ।
"न छिन्द्यात् तुलसीं विप्रा द्वादश्यां वैष्णवः कश्चित् ॥"

गारुडे ।
"भानुवारं विना दूर्व्वां तुलसीं द्वादशीं विना ।
जीवितस्याविनाशाय न विचिन्वीत धर्म्मवित् ॥"

पाद्मे च ।
श्रीकृष्णसत्यासंवादीयकार्त्तिकमाहात्म्ये ।
"द्वादश्यां तुलसीपत्रं धात्रीपत्रञ्च कार्त्तिके ।
लुनाति स नरो गच्छेन्निरयानतिगर्हितान् ॥"

अतएवोक्तम् ।
"देवार्थे तुलसीच्छेदो होमार्थे समिधान्तथा ।
इन्दुक्षये न दुष्येत गवार्थे तु तृणस्य च ॥
एवं कृत्वा महापूजामङ्गोपाङ्गादिकं प्रभोः ।
क्रमादृषया सम्प्रदायं तत्तत्स्थानेषु पूजयेत् ॥"

इति श्रीहरिभक्तिविलासे ७ विलासः ॥ * ॥

अथ तुलसीविवाहः प्रतिष्ठाविधिश्च ।

श्रीवशिष्ठ उवाच ।
"विवाहं संप्रवक्ष्यामि तुलस्यास्तु यथाविधि ।
यथोक्तं पञ्चरात्रे वै ब्रह्मणा भाषितं पुरा ॥
आरादेव वनेऽवाप्य तुलसीं स्वगृहेऽपि वा ।
वर्त्तत्रयेण पूर्णेन ततो यजनमारभेत् ॥
सौम्यायने प्रकर्त्तव्यं गुरुशुक्रोदये तथा ।
अथवा कार्त्तिके मासि भीष्मपञ्चदिनेषु च ॥
वैवाहिकेषु भर्क्षेषु पूर्णिमायां विशेषतः ।
मण्डपं कारयेत्तत्र कुण्डवेदीं तथा पुनः ॥
शान्तिकञ्च प्रकर्त्तव्यं मातॄणां स्थापनं तथा ।
मातृश्राद्धादिकं सर्व्वं विवाहवत् समाचरेत् ॥
ब्राह्मणांश्च शुचिस्नातान् वेदवेदाङ्गपारगान् ।
ब्रह्मा चाचार्य्यकश्चैव चत्वारश्च तदर्त्विजः ॥
वैष्णवेन विधानेन वर्द्धनीकलसं न्यसेत् ।
मण्डपं कारयेत्तत्र लक्ष्मीनारायणं शुभम् ॥
गृह्यसूत्रं पुरः कृत्वा मातॄणां यजनं तथा ।
कृत्वा नान्दीमुखं श्राद्धं सौवर्णं स्थापयेद्धरिम् ॥
कृत्वारोप्य च तुलसीं लग्ने लक्ष्यमिते रवौ ।
वासः शतेन मन्त्रेण वस्त्रयुग्मेन वेष्टयेत् ॥
यदा बध्नाति मन्त्रेण कङ्कणं पाणिपल्लवे ।
कोऽदादिति च मन्त्रेण पाणिग्राहो विधीयते ॥
ततः कुण्डे समागत्य आचार्य्यः सदस्यैर्द्विजैः ।
आचार्य्यो वेदिकाकुण्डे जुहुयाच्च नवाहुतीः ॥
विवाहकर्म्मवत् सर्व्वं वैष्णवं देशिकोत्तमैः ।
कर्त्तव्यञ्च ततो होमो विधिपाद्विधिपूर्व्वकम् ॥"

ॐ नमो भगवते केशवाय नमः स्वाहा ।
नारायणाय स्वाहा । माधवाय । गोविन्दाय ।
विष्णवे । मधुसूदनाय । त्रिविक्रमाय । वामनाय । श्रीधराय । हृषीकेशाय । पद्मनाभाय ।
दामोदराय । उपेन्द्राय । अनिरुद्धाय । अच्युताय । अनन्ताय । गदिने । चक्रिणे । विश्वक्सेनाय । वैकुण्ठाय । जनार्द्दनाय । मुकुन्दाय ।
अधोक्षजाय स्वाहा । इति होमः ॥

यजमानः सपत्नीको लग्ने ये गोत्रबान्धवाः ।
प्रदक्षिणाञ्च कर्त्तव्याश्चत्वारो विष्णुना सह ॥
तुलस्याः पाणिग्रहणं वेदिकायां विभावसौ ।
घृतकुम्भं जपेत् सूक्तं पावमानीं विशेषतः ॥
तथैव शान्तिकाध्यायं नवसूक्तं तथैव च ।
श्रीसूक्तं पुनर्ब्रह्मा तथा वैष्णवमंहिताम् ॥
गृह्यसूत्रविधिर्यावत् विधिर्वैरीतुर्म्मस्य निस्वनैः ।
गायन्ति मङ्गलं नार्य्यो माङ्गल्यं विधिमाचरेत् ॥
दद्यात् पूर्णाहुतिं पश्चादभिषेकविधिं ततः ।
आचार्य्याय शुभं दद्यादाचार्य्यं परिधाप्य च ॥
शय्यां पटञ्च तथा धम्मिसाचार्य्याय प्रदापयेत् ।
धेनुं सवत्सां दापयेद्ब्राह्मणेभ्यो दद्याच्च दक्षिणाम् ॥
एवं प्रतिष्ठितां देवीं विष्णुना च समर्चयेत् ।
आजन्मोपार्ज्जितं पापं दर्शनेन प्रणश्यति ॥
रोपयेत्तुलसीं यस्तु सेवयेच्च प्रयत्नतः ।
प्रतिष्ठाप्य यथोक्तेन विष्णुना सह मानवः ॥
स मोक्षं लभते जन्तुर्विष्णुलोकं तथाक्षयम् ।
प्राप्नोति विपुलान् भोगान् विष्णुना सह मोदते ॥
प्रतिष्ठा श्रीतुलस्यास्तु लिखिता विष्णुयामले ॥"

इति श्रीहरिभक्तिविलासे २० विलासः ॥

**तुलसीद्वेषा**, स्त्री, (तुलसीं द्वेष्टि तुल्यगन्धत्वात् सहते इति । द्विष + अच् । ततष्टाप् ।) बर्व्वरी । इति रत्नमाला ॥ (बर्व्वरीशब्देऽस्या गुणादिकं ज्ञेयम् ॥)

**तुला**, स्त्री, (तोल्यतेऽनया । तुल उन्माने भिदादङ् । अतुलोपमाभ्यामिति निर्द्देशात् गुणाभावः ।) सादृश्यम् । (यथा, रघुः । ८ । १५ ।
"नभसा निभृतेन्दुना तुलामुदितार्केण समारुरोह तत् ॥")

मानम् । (यथा, पञ्चतन्त्रे । २ । ८४ ।
"सकृदपि दृष्ट्वा पुरुषं विबुधा जानन्ति सारतां तस्य ।
हस्ततुलयापि निपुणाः पलपरिमाणं विजानन्ति ॥")

गृहाणां दारुबन्धाय पीठिका । पलशतम् ।
(यथा, अमरकोषे । २ । ९ । ८७ ।
"तुला स्त्रियां पलशतं भारः स्यात् विंशतिस्तुलाः ॥")

भाण्डम् । इति मेदिनी । ले, २५ ॥ मेषादिद्वादशराश्यन्तर्गतसप्तमराशिः । तत्पर्य्यायः ।
युकः २ युक् ३ घटः ४ तौली ५ तुलाभृत् ६ ।
इति ज्योतिषम् ॥ सा चित्राशेषपादद्वयस्वातीसमुदायुक्तविशाखाप्रथमपादत्रयेण भवति ।
तदधिष्ठातृदेवता तुलाधारिपुरुषः । अस्याः शिरस उदयः नानावर्णः उष्णस्वभावः । सा पश्चिमदिक्स्वामिनी वायुराशिः स्निग्धा विकला निःशब्दा वनचारिणी अल्पसन्ताना अल्पस्त्रीसङ्गा शूद्रवर्णा समानाङ्गा च । तत्र जातस्य फलम् । वक्ता विद्यावरः श्रीदः स्थिरः ।
इति जातकम् ॥ जन्मकालीनचन्द्राश्रिततद्राशिफलम् ।

"क्रयसुरद्विजगणक्रयविक्रयी
द्विजसुराधनदानमनाः पुमान् ।
शशिनि तौलिगते बहुदारभाग्विभवशीलविचित्रविक्रमः ॥"

इति कोष्ठीप्रदीपः ॥

तस्या उदये तन्नामकलग्नं भवति । तस्य गनितप्रमाणपरिमाणं दशदण्डाधिकपञ्चाङ्गुलप्रभे देशे वर्त्तमानोनविंशत्यधिके षट्त्रिंशत्पलाधिकपञ्चदण्डाः । इति ज्योतिषम् ॥ तत्र जातफलम् ।
"तुलालग्ने पुमान् जातः सुधीः सत्कर्म्मतत्परः ।
विद्वान् सर्व्वकलाभिज्ञो धनाढ्यो जनपूजितः ॥"

इति कोष्ठीप्रदीपः ॥ * ॥

परीक्षाविशेषः । यथा नारदः ।
"ब्राह्मणस्य घटो देयः क्षत्रियस्य हुताशनः ।
वैश्यस्य सलिलं देयं शूद्रस्य विषमेव तु ॥
साधारणः समस्तानां कोषः प्रोक्तो मनीषिभिः ।
विषवर्ज्जं ब्राह्मणस्य सर्व्वेषान्तु तुला स्मृता ॥" *

अथ तस्या उत्पत्तिविधिः । यज्ञियं वृक्षं यूपवत्मन्त्रपूर्व्वकं छित्त्वा लोकपालेभ्यः प्रणम्य षड्भिः चतुर्हस्ता चतुरस्रा ऋज्वी तुला कार्य्या तत्र च स्थानेषु वलयानि दातव्यानि । तत्र यथोक्तौ स्तम्भौ कृत्वा हस्तद्वयपरिमाणेन दशिणोत्तरयोर्दिशोर्भूखनननिखननं कृत्वा तदाधारकीलकाग्रसमायोगेयसि व्रणद्वयचिह्नं मध्यनिवेशितलौहाङ्कुशयुक्तं निधाय तदुपरि कला मध्यस्थिताङ्कुशेन तुलामध्यवलयस्थलौहं संयुञ्ज्यात् । एवञ्च सति स्तम्भयोरन्तरतिर्य्यक् तुलादण्डस्तिष्ठति तुलाग्रस्थिताभ्यामायसकीलकाभ्यां शिक्यद्वयस्य बन्धनं कुर्य्यात् । तुलायाः पार्श्वयोः प्राक्प्रत्यक्दिशोस्तोरणस्तम्भौ तुलातो दशाङ्गुलोच्छ्रायौ कार्य्यौ तोरणयोरुपरिसम्बन्धनौ स्तम्भयोरधोमुखौ घटमस्तकचुम्बिनावलम्बौ कार्य्यौ । तुलादण्डः पूर्व्वपश्चिमयोर्धार्य्यः ।
पूर्व्वशिक्ये शिलां तोलयेत् पश्चिमे कर्त्तारं तुलाया उपरि जलं देयं यदि जलं न प्लवते तदा तुला समा ज्ञेया ॥ * ॥ अथैतत्प्रयोगः ।
कृतोपवासः कृतस्नानादिः प्राड्विवाको नापणः कार्य्यो एव्वेत् निवेदितं विवेचयेत् । ततोऽभियुक्तं तोलयितावतार्य्य धर्म्मावाहनादिकं कुर्य्यात् । ॐ तत् सवितुर्धार्म्य ब्राह्मणत्रयं गन्धादिना पूजयित्वा तान् सविपुण्याहशब्दैः प्रत्येकं विन्यावयित्वा दिशाङ्गभूतहोमार्थं ब्रह्मचतुष्टयं अर्त्विक्चतुष्टयञ्च पाद्यादिभिरभ्यर्च्य वृणुयात् । अग्निस्थापनं ब्रह्मासनमेकं अर्त्विजञ्च । ततस्तुलां सपताकां ध्वजालङ्कृतां भूमौ निधाय तस्यां प्राङ्मुखः प्राड्विवाकः पुष्पाक्षतमादाय ॐ भूर्भुवः स्वरित्युच्चार्य्य ।
एह्येहि भगवन् धर्म्म! दिव्ये ह्यस्मिन् समाविश ।

दन्तधावनः, पुं, (धावयत्यनेनेति । धावि+ल्युट् । दन्तानां धावनः ।) खदिरवृक्षः । गुच्छकरञ्जः । इति राजनिर्घण्टः ॥ बकुलः । इति शब्दचन्द्रिका ॥

दन्तपत्रं, क्ली, (दन्ता इव पत्राणि यस्य ।) कुन्दकम् । इति शब्दरत्नावली ॥ (यथा कुमारे । ७ । २३ ।
"कर्णावसक्तामलदन्तपत्रं
माता तदीयं मुखमुन्नमय्य ॥")

दन्तपत्रकं, क्ली, (दन्त इव शुभ्रं पत्रं दलं यस्य । कप् ।) कुन्दपुष्पम् । इति शब्दचन्द्रिका ॥

दन्तपुष्पं, क्ली, (दन्त इव शुभ्रं पुष्पमस्य ।) कतकफलम् । इति शब्दचन्द्रिका ॥

दन्तफलं, क्ली, (दन्त इव शुक्लं फलमस्य ।) कतकम् । इति शब्दचन्द्रिका ॥

दन्तफलः, पुं, (दन्त इव शुक्लं फलमस्य ।) कपित्थः । इति राजनिर्घण्टः ॥

दन्तफला, स्त्री, (दन्तवत् शुभ्रं फलं यस्याः । टाप् ।) पिप्पली । इति राजनिर्घण्टः ॥

दन्तभागः, पुं, (दन्तवर्त्तिनो भागः । शाकपार्थिवादिवत् समासः ।) गजाग्रभागः । गजस्य मुखतः स्कन्धपर्य्यन्तो योऽग्रभागः स दन्तसन्धितः । इत्यमरभरतौ ॥

दन्तमलं, क्ली, (दन्तलग्नं दन्तस्य वा मलम् ।) दन्तलग्नक्लेदः । तत्पर्य्यायः । पुष्पिका २ । इति हारावली । १६५ ॥

दन्तमूलिका, स्त्री, (दन्त इव शुभ्रं मूलमस्याः । कप्+टापि अत इत्वञ्च ।) दन्तीवृक्षः । इति शब्दरत्नावली ॥

दन्तरोगः, पुं, (दन्तस्य रोगः ।) रदनामयः । तन्निदानादि दन्तशब्दे द्रष्टव्यम् । तस्यौषधं यथा,
"काकजङ्घाशिग्रुमूले मुखेन विधृते शिव ! ।
चर्व्विता दन्तरोगाणां विनाशो हि भवेद्धर ! ॥"
दन्तरोगाणामित्यत्र दन्तकीटानामिति पुस्तकान्तरे पाठः ॥ इति गारुडे १९६ अध्यायः ॥
अपि च गारुडे १६८ अध्याये ।
"शुष्कमूलकशुण्ठीनां क्षारो हिङ्गुलनागरम् ।
घृतपुष्पी वचा कुष्ठं दारु शिग्रु रसाञ्जनम् ॥
सौवर्च्चलं यवक्षारं सामुद्रं सैन्धवं तथा ।
भुजग्रन्थि विड़ं मुस्तं मधु शुक्तं चतुर्गुणम् ॥
मातुलुङ्गरसश्चैव कदलीरसमेव च ।
तैलमेभिर्विपक्तव्यं कर्णशूलापहं परम् ।
वाधिर्य्यं कर्णनादञ्च पूयमावञ्च दारुणः ।
पूरणादस्य तैलस्य शमयः कर्णयोः खिलाः ॥
क्षिप्रं विनाशमायान्ति शशाङ्कक्षतशेखर ! ।
क्षारतैलमिदं श्रेष्ठं मुखदन्तामयापहम् ॥"
अन्यच्च ।
"तैलं लाक्षारसं क्षीरं पृथक् प्रस्थमितं पचेत् ।
द्वयोः पलमितैरेतैः क्वाथैश्चापि चतुर्गुणैः ॥
लोध्रकट्फलमञ्जिष्ठापद्मकेशरपद्मकैः ।
चन्दनोत्पलयष्ट्याह्वैस्तत्तैलं वदने धृतम् ॥
दालनं दन्तचालञ्च दन्तमोक्षं कपालिकाम् ।
शीतादं पूतिवक्त्रञ्च विरसं विरसास्यताम् ॥
हन्यादास्यगदानेतान् कुर्य्याद्दन्तानपि स्थिरान् ।
लाक्षादिकमिदं तैलं दन्तरोगेषु पूजितम् ॥
इति लाक्षाद्यं तैलम् ।
चर्व्वेद्धिमावर्गः स्निग्धमचलं क्रिमिदन्तकम् ।
तथा च पीतैर्व्वातघ्नैः स्नेहगण्डूषधारणैः ॥
भद्रदार्व्वादिवर्षाभूलेपैः स्निग्धैश्च भोजनैः ।
क्रिमिदन्तापहं कोष्णं हिङ्गु दन्तान्तरे स्थितम् ॥
बृहतीभूमिकदम्बीपञ्चाङ्गुलकण्टकारिकाक्वाथः ।
गण्डूषस्तैलयुतः क्रिमिदन्तकवेदनाशमकः ॥
नीली वायसजङ्घा कटुतुम्बीमूलमेकैकम् ।
संचूर्ण्य दशनविधृतं दशनक्रिमिपातनं प्राहुः ॥
स्नेहानां कवलाः कोष्णाः सर्पिषस्त्रैवृतस्य च ।
निर्यूहाश्चानिलघ्नानां दन्तहर्षप्रमर्दनाः ॥
त्रैवृतस्य सर्पिषः त्रिवृता पक्वस्य सर्पिषः कवल इत्यर्थः ।
स्नैहिकोऽत्र हितो धूमो नस्यं स्नैहिकमेव च ।
पेया रसयवागूश्च क्षीरसन्तानिकाघृतम् ॥
शिरोबस्तिर्हितश्चापि क्रमो यश्चानिलापहः ।
अत्र दन्तहर्षे ।
अच्छिन्नदन्तमूलानि शर्करासहरेद्भिषक् ।
लाक्षाचूर्णैर्म्मधुयुतैस्ततस्तान् प्रतिसारयेत् ॥
दन्तहर्षक्रियां चात्र कुर्य्यान्निरवशेषतः ।
कपालिका कृच्छ्रतमा तत्राप्येषा क्रिया हिता ॥
अत्र दन्तशर्करायाम् । एषा क्रिया दन्तहर्षक्रिया ।
फलान्यम्लानि शीताम्बु रूक्षान्नं दन्तधावनम् ।
तथातिकठिनं भक्ष्यं दन्तरोगी विवर्ज्जयेत् ॥"
इति भावप्रकाशः ॥

दन्तवस्त्रं, क्ली, (दन्तानां वस्त्रमिवाच्छादकत्वात् ।) ओष्ठः । इति हेमचन्द्रः । ३ । २४५ ॥

दन्तवासाः, [स्] पुं, (दन्तस्य वासो वस्त्रमिवावरकत्वात् ।) ओष्ठः । इति त्रिकाण्डशेषः ॥ (यथा, कुमारे । ५ । ३४ ।
"अपि त्वदावर्ज्जितवारिसम्भृतं
प्रवालमासामनुबन्धि वीरुधाम् ।
चिरोज्झितालक्तकपाटलेन ते
तुलां यदारोहति दन्तवाससा ॥")

दन्तवीजकः, पुं, (दन्ता इव वीजानि यस्य । ततः स्वार्थे कन् ।) दाड़िमः । इति राजनिर्घण्टः ॥

दन्तशटः, पुं, (दन्तेषु शट इव ग्लानिजनकत्वात् ।) दन्तशठः । इत्यमरटीकायां मथुरानाथः ॥

दन्तशठः, पुं, (दन्तेषु शठ इव ग्लानिकारकत्वात् ।) जम्बीरः । कपित्थः । कर्म्मरङ्गकः । नागरङ्गकः । इति मेदिनी । ठे, १६ ॥ (यथा, सुश्रुते । १ । ४६ ।
"ऐरावतं दन्तशठमम्लं शोणितपित्तकृत् ॥")
अम्लः । इति हेमचन्द्रः । ६ । २४ ॥

दन्तशठा, स्त्री, (दन्तेषु शठा ।) चाङ्गेरी । इति मेदिनी । ठे, १८ ॥ (यथा, भावप्रकाशे ।
"चाङ्गेरी चुक्रिका दन्तशठाम्बष्ठाम्ललोणिका ॥")
क्षुद्राम्लिका । इति राजनिर्घण्टः ॥

दन्तशर्करा, स्त्री, (दन्तस्य शर्करेव ।) दन्तरोगविशेषः । कफवायुशोषितदन्तगतमलम् । पाथुरि इति भाषा ॥ (तस्य लक्षणं यथाह माधवकरः ।
"मलो दन्तगतो यस्तु कफमारुतशोषितः ।
शर्करेव खरस्पर्शा सा ज्ञेया दन्तशर्करा ॥"
यथा च सुश्रुते निदानस्थाने १६ अध्याये ।
"शर्करेव स्थिरीभूतो मलो दन्तेषु यस्य वै ।
सा दन्तानां गुणहरी तु विज्ञेया दन्तशर्करा ॥"
तस्यौषधम् यथा,—
"गोरक्षकर्कटीमूलं पिष्टं वास्तोदकेन च ।
पीतं दिनत्रयेणैव नाशयेत् दन्तशर्कराम् ॥"
इति गारुडे १९० अध्यायः ॥

दन्तशाणः, पुं, (दन्तानां शाण इव । चिक्कणताजनकत्वात् ।) निचुलवृक्षः । इति त्रिकाण्डशेषः ॥ मिधि इति भाषा ॥

दन्तशिरा, स्त्री, (दन्तानां शिरा यत्र ।) माड़ी । इति शब्दरत्नावली ॥

दन्तशूलः, पुं, (दन्तस्य शूल इव । शूलवेधनवद्वेदनादायकत्वात् ।) दशनवेदना । तस्यौषधम् ॥ यथा,—
"त्रिफलानिम्बयष्ट्याह्वं कटुकारग्वधैः शृतम् ।
पाययेन्मधुना मिश्रं दन्तशूलोपशान्तये ॥"
इति गारुडे १७४ अध्यायः ॥

दन्तहर्षः, पुं, (दन्तानां हर्षो यस्मात् ।) दन्तरोगविशेषः । इति माधवकरः ॥ (अस्य लक्षणं यथा, सुश्रुते निदानस्थाने १६ अध्याये ।
"दशनाः शीतमुष्णञ्च सहन्ते स्पर्शनं न च ।
यस्य तं दन्तहर्षन्तु व्याधिं विद्यात् समीरणात् ॥"
दन्तग्लानिः । यथा,—
"यस्य वै खातमात्रस्य हृदयं शीर्य्यते भृशम् ।
जायते दन्तहर्षश्च तं गतायुषमादिशेत् ॥"
इति वायुपुराणम् ॥)

दन्तहर्षकः, पुं, (दन्तान् हर्षयतीति । हृष+णिच्+ण्वुल् ।) जम्बीरः । इति जटाधरः ॥

दन्तहर्षणः, पुं, (दन्तान् हर्षयतीति । हृष+णिच्+ल्युः ।) जम्बीरः । इति त्रिकाण्डशेषः ॥

दन्ताघातः, पुं, (दन्तानाहन्तीति । आ+हन+अण् ।) निम्बूकः । इति राजनिर्घण्टः ॥ दशनाघातः । (यथा, गणेशखण्डे ।
"दन्ताघातविदारितारिरुधिरैः सिन्दूरशोभाकरम् ॥")
रतिक्रीड़ायां तस्य स्थानानि दन्तशब्दे द्रष्टव्यानि ॥

दन्तार्बुदं, क्ली, पुं, (दन्तस्य अर्बुदमिव ।) दन्तरोगभेदः । तत्पर्य्यायः । दन्तमूलम् २ दन्तशोफः ३ हिक्कावणः ४ । इति राजनिर्घण्टः ॥

दन्तायुधः, पुं, (दन्त एव आयुधं यस्य ।) शूकरः । इति त्रिकाण्डशेषः ॥

दन्तालिका, स्त्री, (दन्तान् अलति पर्य्याप्नोतीति । अल+ण्वुल् । टापि अत इत्वम् ।) वल्गा । इति त्रिकाण्डशेषः ॥

दन्तावलः, पुं, (अतिशयितौ दन्तौ यस्य । दन्त+"दन्तशिखात् संज्ञायाम् ।" ५।२।११३।

"एवं स राजा धर्म्मात्मा नरिष्यन्तोऽभवत् पुरा ।
मरुत्ततनयो विप्र ! विख्यातबलपौरुषः ॥"
"नरिष्यन्तस्य तनयो दुष्टारिदमनो दमः ।
शक्रस्येव बलं तस्य दयाशीलं मुनेरिव ॥
बाभ्रव्यामिन्द्रसेनायां स जज्ञे तस्य भूभृतः ।
नववर्षाणि जठरे स्थित्वा मातुर्महायशाः ॥
यद्ग्राहयामास दमं मातरं जठरे स्थितः ।
दमशीलश्च भविता यतश्चायं नृपात्मजः ॥
ततस्त्रिकालविज्ञानः स हि तस्य पुरोहितः ।
दम इत्यकरोत् नाम नरिष्यन्तसुतस्य तु ॥
स दमो राजपुत्त्रस्तु धनुर्व्वेदमशेषतः ।
जगृहे नरराजस्य सकाशाद्वृषपर्व्वणः ॥"
अस्य विशेषविवरणन्तु तत्रैवाध्याये विशेषतो द्रष्टव्यम् ॥ भीमस्य राज्ञः पुत्त्रविशेषः । यथा, महाभारते । ३ । ५३ । ९ ।
"कन्यारत्नं कुमारांश्च त्रीनुदारान् महायशाः ।
दमयन्तीं दमं दान्तं दमनञ्च सुवर्च्चसम् ॥"
विष्णुः । यथा, तत्रैव । १३ । १४९ । १०५ ।
"धनुर्धरो धनुर्व्वेदो दान्तो दमयिता दमः ॥")

दमकः, त्रि, ( दमयतीति । दम + णिच् + ण्वुल् । ) दमनकर्त्ता । इति व्याकरणम् ॥ ( यथा मनुः । ३ । १६२ ।
"हस्तिगोऽश्वोष्ट्रदमको नक्षत्रैर्यश्च जीवति ॥")

दमघोषः, पु, चन्द्रवंशीयराजविशेषः । स चेदिदेशपतिः शिशुपालपिता च । इति पुराणम् ॥ ( यथा, भागवते । ९ । २४ । ३९ ।
"दमघोषश्चेदिराजः श्रुतश्रवसमग्रहीत् ॥")

दमघोषसुतः, पुं, ( दमघोषस्य सुतः । ) शिशुपालः । इति त्रिकाण्डशेषः ॥

दमथः, पुं, ( दमु उपशमे + "बाहुलकात् दृशमिदमिभ्यश्च ।" ३ । ११४ । इति अथः । इत्युज्ज्वलदत्तः । ) दमः । दण्डः । इत्युणादिकोषः ॥

दमनं, क्ली, ( दम + भावे ल्युट् । ) दण्डः । यथा,
"चलुच्छ्रितस्य दमनमुचितञ्च श्रुतौ श्रुतम् ॥"
इति ब्रह्मवैवर्त्ते श्रीकृष्णजन्मखण्डम् ॥

दमनः, पुं, ( दाम्यतीति । दम + ल्युः । ) पुष्पविशेषः । दोना इति भाषा । तत्पर्य्यायः । पुष्पचामरः २ । इति त्रिकाण्डशेषः ॥ (यथा,
"दमनस्तु वरस्तिक्तो हृद्यो वृष्यः सुगन्धिकः ।
ग्रहण्यार्शविषकुष्ठास्रक्लेदकण्डूत्रिदोषजित् ॥"
इति भावप्रकाशस्य पूर्व्वखण्डे प्रथमे भागे ॥) वीरः । उपशान्तः । इति शब्दरत्नावली ॥ कुन्दवृक्षः । इति राजनिर्घण्टः ॥ ( ऋषिविशेषः । यथा, महाभारते । ३ । ५३ । ६ ।
"तमभ्यगच्छद् ब्रह्मर्षिर्दमनो नाम भारत ! ।
तं स भीमः प्रजाकामस्तोषयामास धर्म्मवित् ॥"
अस्य भीमस्य पुत्त्रविशेषः । यथा, तत्रैव । ३ । ५३ । ९ ।
"कन्यारत्नं कुमारांश्च त्रीनुदारान् महायशाः ।
दमयन्तीं दमं दान्तं दमनञ्च सुवर्च्चसम् ॥"
विष्णुः । यथा, महाभारते । १३ । १४९ । ३४ ।
"मरीचिर्दमनो हंसः सुपर्णो भुजगोत्तमः ॥"
"स्वाधिकारात् प्रमाद्यन्तीः प्रजा दमयितुं शीलं यस्य वैवस्वतादिरूपेण स दमनः ।" इति तद्भाष्ये शङ्कराचार्य्यः ॥ महादेवः । यथा, महाभारते । १३ । १७ । १३६ ।
"महाप्रसादो दमनः शत्रुहा श्वेतपिङ्गलः ॥")

दमनकः, पुं, ( दमन एव । स्वार्थे कन् । ) वृक्षविशेषः । दोना इति भाषा । तत्पर्य्यायः । दमनः २ दान्तः ३ गन्धोत्कटा ४ मुनिः ५ जटिला ६ दण्डी ७ पाण्डुरागः ८ ब्रह्मजटा ९ पुण्डरीकः १० तापसपत्री ११ पत्री १२ पवित्रकः १३ देवशेखरः १४ कुलपत्रः १५ विनीतः १६ तपस्विपत्रः १७ । इति राजनिर्घण्टः ॥ मुनिपुत्त्रः १८ तपोधनः १९ गन्धोत्कटः २० ब्रह्मजटी २१ कुलपुत्त्रकः २२ । इति भावप्रकाशः ॥ अस्य गुणाः । शीतलत्वम् । तिक्तत्वम् । कषायत्वम् । कटुत्वम् । कुष्ठदोषद्वन्द्वत्रिदोषविषविस्फोटविकारहरत्वञ्च । इति राजनिर्घण्टः ॥ हृद्यत्वम् । वृष्यत्वम् । सुगन्धित्वम् । ग्रहण्यस्रक्लेदकण्डूनाशित्वञ्च । इति भावप्रकाशः ॥ (क्ली, षड्क्षरच्छन्दोविशेषः । यथा, चिन्तामणिधृतवचनम् ।
"द्विगुणनगणमिह वितनु हि ।
दमनकमिति गदति सुधि हि ॥"
एकादशाक्षरच्छन्दोविशेषोऽपि । यथा, तत्रैव ।
"द्विजवरगणयुगममलं तदनु च कलय करतलम् ।
फणिपतिवरपरिगदितं दमनकमिदमतिललितम् ॥")

दमनकारोपणोत्सवः, पुं, ( दमनकस्य आरोपणार्थं य उत्सवः । ) श्रीकृष्णस्य दमनकार्पणार्थमहापूजारूपोत्सवः । यथा,—
"चैत्रस्य शुक्लद्वादश्यां दमनारोपणोत्सवम् ।
विदध्यात्तद्विधिर्बौधायनाद्युक्तोऽत्र लिख्यते ॥
मधोः सितैकादश्याञ्च प्रातःकृत्यं समाप्य च ।
गत्वा दमनकारामं तत्राशोकं स्मरं यजेत् ॥
तत्र मन्त्रः ।
अशोकाय नमस्तुभ्यं कामस्त्रीशोकनाशन ! ।
शोकार्त्तिं हर मे नित्यमानन्दं जनयस्व मे ॥
नेष्यामि कृष्णपूजार्थं त्वां कृष्णप्रीतिकारकम् ।
इति संप्रार्थ्य नत्वा च गृह्णीयाद्दमनं शुभम् ॥
प्रोक्ष्य तत् पञ्चगव्येन प्रक्षाल्याद्भिः प्रपूज्य च ।
वस्त्रेणाच्छाद्य वेदादिघोषेण गृहमानयेत् ॥*॥
अथ दमनकाधिवासविधिः ।
कृष्णस्याग्रे समुद्धृत्य सर्व्वतोभद्रमण्डलम् ।
निधाय दमनं तत्र रात्रौ तदधिवासयेत् ॥
तत्र मन्त्रः ।
पूजार्थं देवदेवस्य विष्णोर्लक्ष्मीपतेः प्रभोः ।
दमन ! त्वमिहागच्छ सान्निध्यं कुरु ते नमः ॥ इति
सबीजं कामदेवञ्च तथा भस्मशरीरकम् ।
अनङ्गं मन्मथञ्चैव वसन्तसखमेव च ॥
स्मरं तथेक्षुचापञ्च पुष्पबाणञ्च पूजयेत् ।
प्रागादिदिक्षु रत्याढ्यं विधिवद्दमने क्रमात् ॥
अष्टोत्तरशतं कामगायत्र्या चाभिमन्त्र्य तत्
दत्त्वा पुष्पाञ्जलिं कामदेवं वन्देत मन्त्रवत् ॥
मन्त्रश्चायम् ।
नमोऽस्तु पुष्पबाणाय जगदाह्लादकारिणे ।
मन्मथाय जगन्नेत्रे रतिप्रीतिप्रदायिने ॥ इति ॥
आमन्त्रितोऽसि देवेश ! पुराणपुरुषोत्तम ! ।
प्रातस्त्वां पूजयिष्यामि सान्निध्यं कुरु केशव ! ॥
निवेदयाम्यहं तुभ्यं प्रातर्द्दमनकं शुभम् ।
सर्व्वथा सर्व्वदा विष्णो ! नमस्तेऽस्तु प्रसीद मे ॥
इत्यमामन्त्र्य देवेशं दत्त्वा पुष्पाञ्जलिं पुनः ।
गीतनृत्यादिना रात्रौ कुर्य्याज्जागरणं मुदा ॥*॥
अथ दमनकार्पणविधिः ।
प्रातःस्नानादि निर्व्वर्त्य नित्यपूजां विधाय च ।
दमनारोपणार्थञ्च महापूजां समाचरेत् ॥
ततो दमनकं भक्त्या पाणिभ्यां परिगृह्य च ।
घण्टादिवाद्यघोषेण श्रीकृष्णाय समर्पयेत् ॥
तत्र मन्त्रः ।
देवदेव जगन्नाथ वाञ्छितार्थप्रदायक ! ।
हृत्स्थान् पूरय मे कृष्ण कामान् कामेश्वरीप्रिय ! ॥
इदं दमनकं देव गृहाण मदनुग्रहात् ।
इमां सांवत्सरीं पूजां भगवन्निह पूरय ॥ इति ॥
ततो दामनकीं मालां गन्धादीनि समर्प्य च ।
गीतादिनोत्सवं कृत्वा श्रीकृष्णं प्रार्थयेदिदम् ॥
मणिविद्रुममालाभिर्म्मन्दारकुसुमादिभिः ।
इयं सांवत्सरी पूजा तवास्तु गरुड़ध्वज ! ॥
वनमालां यथा देव ! कौस्तुभं सततं हृदि ।
तद्वद्दामनकीं मालां पूजाञ्च हृदये वहेत्यादि ॥
भगवन्तं प्रणम्याथ गुरुं संपूज्य भक्तितः ।
संपूज्य ब्राह्मणान् शक्त्या भुञ्जीत सह बन्धुभिः ॥
पारणाहे न लभ्येत द्वादशी घटिकापि चेत् ।
तदा त्रयोदशी ग्राह्या पवित्रा दमनार्पणे ॥
न कृष्णे दमनारोपः स्यान्मधौ विघ्नतो यदि ।
वैशाख्यां श्रावणे मासि कर्त्तव्यं वा तदर्पणम् ॥
अतएवोक्तं ब्रह्मणा देवीपुराणे ।
चैत्रादौ कारयेत् पूजां सम्यग्वत्स ! यथाविधि ॥
गन्धधूपार्घनैवेद्यैर्म्माल्यैर्द्दमनकोद्भवैः ।
सहोमं पूजयेद्देवं सर्व्वान् कामानवाप्नुयात् ॥
सर्व्वतीर्थाभिषेकस्य फलं प्राप्नोति मानवः ॥"
इति श्रीहरिभक्तिविलासे १४ विलासः ॥

दमनी, स्त्री, ( दम्यतेऽग्निरनया । दम + ल्युट् । स्त्रियां ङीप् । ) अग्निदमनीवृक्षः । इति राजनिर्घण्टः ॥

दमयन्ती, स्त्री, (दमयति नाशयति अमङ्गलादिकमिति । दम + णिच् + शतृ + ङीप् । ) भद्रमल्लिका । इति शब्दमाला ॥ नलराजपत्नी । सा विदर्भदेशीयभीमराजकन्या । (यथा, महाभारते । ३ । ५३ । ५-९ ।
"तथैवासीद्विदर्भेषु भीमो भीमपराक्रमः ।
शूरः सर्व्वगुणैर्युक्तः प्रजाकामः स चाप्रजः ॥
स प्रजार्थे परं यत्नमकरोत् सुसमाहितः ।
तमभ्यगच्छद्ब्रह्मर्षिर्दमनो नाम भारत ! ॥
तं स भीमः प्रजाकामस्तोषयामास धर्म्मवित् ।

महिष्या सह राजेन्द्र । सत्कारेण सुवर्चसम् ।
तस्मै प्रसन्नो दमनः सभार्याय वरं ददौ ।
कन्यारत्नं कुमारांश्च त्रीनुदारान् महायशाः ।
दमयन्तीं दमं दान्तं दमनञ्च सुवर्चसम् ।
उपपन्नान् गुणैः सर्व्वैर्भीमान् भीमपराक्रमान् ॥
दमयन्ती तु रूपेण तेजसा यशसा श्रिया ।
सौभाग्येन च लोकेषु यशः प्राप सुमध्यमा ॥"
अस्या विशेषविवरणन्तु तमेवाध्यायमारभ्य विस्तरशो द्रष्टव्यम् ॥ )

दमितः त्रि, ( दम्यते स्म इति । दम+क्तः । "वा दान्तशान्तेति ।" ७ । २ । २७ । इति पक्षे इट । ) दान्तः । इत्यमरः । ३ । १ । ९० ॥ (यथा, हरिवंशे । ९७ । ५६ ।
"यथैव सरिदम्भोदा भवेच्छिवजलाशया ।
भोज्योपभोग्या च यथा नागे वै दमिते मया ।")
क्लेशसहमात्रम् । इति भरतः ॥ भारवाहनादि क्लेशसहः । इति सुभूतिः ॥

दमी, [ न् ] त्रि, (दमोऽस्यास्तीति । दम+इनि ।) दमनविशिष्टः । ( तीर्थविशेषे, क्ली । तत्प्रवर्त्तक ऋषिभेदे पुं । यथा, महाभारते । ३ । ८२ । ७१—७४ ।
"प्रदक्षिणमुपावृत्य गच्छेत भरतर्षभ ।
तीर्थं कुरुवरश्रेष्ठ । त्रिषु लोकेषु विश्रुतम् ॥
दमीति नाम्ना विख्यातं सर्व्वपापप्रमोचनम् ।
यत्र ब्रह्मादयो देवा उपासन्ते महेश्वरम् ॥
तत्र स्नात्वार्च्चयित्वा च रुद्रं देवगणैर्वृतम् ।
जन्मप्रभृति यत् पापं तत् स्नातस्य प्रणश्यति ॥
दमी चात्र नरश्रेष्ठ । सर्व्वदेवैरभिष्टुतः ।
तत्र स्नात्वा नरश्रेष्ठ । हयमेधमवाप्नुयात् ॥"
दमीत्यत्र द्रिमीति क्वचित् पाठः ॥ )

दमुनाः, [ स् ] पुं ( दाम्यतीति । अन्तर्भावितण्यर्थात् दमधातोः + "दमेरुनसि ।" उणां । ४ । २३४ । इति उनसि. । ) अग्निः । इत्यमरः ।१।१।५९। शुक्राचार्य्यः । इत्युणादिकोषः ॥

दमूनाः [ स् ] पुं, (दमुनस्+अन्येषामपि दृश्यते इति पक्षे दीर्घः । यद्वा, दमेरूनसिरिति पठित्वा ऊनसिप्रत्ययः ।) अग्निः । इति शब्दरत्नावली ॥ ( त्रि, दमनीयः । यथा ऋग्वेदे । १ । १४१ । ११ ।
"अस्मे रयिं न स्वर्थं दमूनसं भगं दक्षं न पपृचासि धर्णसिम् ॥'
दानमनाः । दान्तचित्तः । यथा, तत्रैव ।५।४।५।
'जुष्टो दमूना अतिथिर्दुरोण इमं नो यज्ञमुपयाहि विद्वान् ॥")

दम्पती, पुं, ( जाया च पतिश्च । राजदन्तादिगणे पाठात् जायाया दम्भावो वा निपात्यते । ) भार्य्यापती । इत्यमरः । २ । ६ । ३८ ॥ (यथा, मनुः । ३ । ११६ ।
भुक्तवत्स्वथ विप्रेषु स्वेषु भृत्येषु चैव हि ।
भुञ्जीयातां ततः पश्चादवशिष्टन्तु दम्पती ॥")

दम्भः, पुं, ( दभ्यते इति । दम्भ दम्भे+घञ् । ) कपटः । ( यथा पञ्चतन्त्रे । १ । २२२ ।
"सुप्रभस्यापि दम्भस्य ब्रह्माप्यन्तं न गच्छति ॥"
अयन्तु अधर्म्मात् मृषागर्भे जातः । यथा, भागवते । ४ । ८ । २ ।
"मृषाऽधर्म्मस्य भार्य्यासीद्दम्भं मायाञ्च शत्रुहन् ॥
असूत मिथुनं तत्तु निरृतिर्जगृहेऽप्रजः ॥")
कल्कम् । आटोपाहङ्कृतिः । इति शब्दरत्नावली ॥ ( यथा, गीतायाम् । १६ । १७ ।
"आत्मसम्भाविताः स्तब्धा धनमानमदान्विताः ।
यजन्ते नामयज्ञैस्ते दम्भेनाविधिपूर्व्वकम् ॥"
धर्म्माशुत्सादः । यथा मनुः ।४।१६३।
"नास्तिक्यं वेदनिन्दाञ्च देवतानाञ्च कुत्सनम् ।
द्वेषं दम्भञ्च मानञ्च क्रोधं तैक्ष्ण्यञ्च वर्ज्जयेत् ॥"
महादेवः । यथा, महाभारते । १३।१७।७८।
"दम्भो ह्यदम्भो वैदम्भो वश्यो वशकरः कलिः ॥")

दम्भोलिः, पुं ( दम्भ नोदे+भावे असुन् । दम्भसि प्रेरणे अलति पर्य्याप्नोतीति । अल+इन् । ) वज्रम् । इत्यमरः । १ । १ । ५० ॥

दम्यः, पुं, ( दम्यते इति । दम+यत् । ) वत्सतरः । स तु प्राप्तदमनकालो गौः । इत्यमरः । २ । ९ । ६२ ॥ अनड्वान् । इति राजनिर्घण्टः ॥ (यथा, महाभारते । १३ । ६६ । ४ ।
"शकटं दम्यसंयुक्तं दत्तं भवति चैव हि ।")
दमनीये, त्रि ॥

दय, ङ रक्षणे । गतौ । वधे । दाने । अदने । इति कविकल्पद्रुमः ॥ (भ्वां-आत्म-सक सेट् । ) अदनं पालनम् । ङि, दयितोऽस्ति । ङ, दयते दीनं दयालुः । तेषां दयसे न कस्मात् । अत्र कर्म्मणि षष्ठी । इति दुर्गादासः ॥

दयः पुं ( दय+बाहुलकात् अप । ) दया । इति शब्दरत्नावली ॥

दया, स्त्री, (दय+भिदादित्वात् अङ् । ततष्टाप् ।) करुणा । अस्या लक्षणं यथा, पाद्मे क्रियायोगसारे ।
"यत्नादपि परक्लेशं हर्त्तुं या हृदि जायते ।
इच्छा भूमिसुरश्रेष्ठ । सा दया परिकीर्त्तिता ॥"
अपि च मत्स्यपुराणे ।
"आत्मवत् सर्व्वभूतेषु यो हिताय शुभाय च ।
वर्त्तते सततं हृष्टः क्रिया ह्येषा दया स्मृता ॥"*॥
"परे वा बन्धुवर्गे वा मित्रे द्वेष्टरि वा सदा ।
आत्मवद्वर्त्तितव्यं हि दयैषा परिकीर्त्तिता ॥"
इत्येकादशीतत्त्वम् ॥
( इयं हि शक्तीनामन्यतमा । यथा देवीभागवते । १ । १५ । ६० ।
'श्रद्धा मेधा स्वधा स्वाहा क्षुधा निद्रा दया मतिः ।
'संस्थिताः सर्व्वत मार्ग्ये महादेव्याः पृथक् पृथक् ॥")

दयाकूर्च्चः, पुं, (दयायां कूर्च्चं शीर्षमिव प्रधानम् ।) बुद्धः । इति हेमचन्द्रः । २ । १४८ ॥

दयालुः, त्रि, (दयते इति । दय+"स्पृहिगृहीति ।" ३ । २ । १५८ । इति आलुच् ।) दयायुक्तः । तत्पर्य्यायः । कारुणिकः २ कृपालुः ३ सूरतः ४ । इत्यमरः ।३।१।१५ ॥ (यथा, रघुः ।१०।१८ ।
"दयालुमनघस्पृष्ट पुराणमजरं विदुः ।")

दयितः त्रि, ( दय्यते स्मेति । दय+क्तः । ) प्रियम् । इत्यमरः । ३ । १ । ५३ ॥ ( यथा, आर्य्यासप्तशत्याम् । २८८ ।
"दृष्टमदृष्टप्राय दयितं कृत्वा प्रकाशितस्नेहया ।
हृदयं करेण ताडितमथ मिथ्याश्वसितवपया ॥"
यथा च पञ्चतन्त्रे । २ । १८९ ।
"दयितजनविप्रयोगो वित्तवियोगश्च केन सह्याः स्युः ।
यदि सुमहौषधकल्पो वयस्यजनसङ्गमो न स्यात् ॥")

दयितः, पुं, ( दय+क्तः । ) पतिः । इति जटाधरः ॥

दयिता, स्त्री, ( दयित+टाप् । ) भार्य्या । इति हलायुधः ॥ ( यथा, रघुः । २ । १ ।
"निवर्त्य राजा दयितां दयालु-
स्तां सौरभेयीं सुरभिर्यशोभिः ॥ )

दरं, क्ली ( दीर्य्यते इति । दॄ+अप । ) इषदर्थः । इति मेदिनी । रे, ४७ ॥ ( यथा आर्य्यासप्तशत्याम् । ३०० ।
"दरतरलेऽपिद्वि वपुषि दरोन्नते तव सखे च दरहसिते ।
आस्तां कुसुमं वीरः सारोऽधुना चित्रधनुर्यापि ।'
"अपिद्वि नेत्रे द्रुमभग्नवे सति । तत्पद्मुन्नमिते वपुषि सुखे च किञ्चिद्धसितवति सति ।" इति तट्टीका ॥ )

दरं, क्ली, शङ्खः । यथा । विष्णुं वन्दे दरकमल कौमोदकीचक्रपाणिमिति क्रमदीपिका ॥

दरः, पुं क्ली ( दीर्य्यते अनेनेति । दॄ+"ग्रहवृदृ निश्चिगमश्च ।" ३ । ३ । ५८ । इति अप । ) भयम् । ( यथा आर्य्यासप्तशत्याम् । २६५ ।
"दरनिमीलस्यापि स्मरस्य शिरसेन निगताः सन् मे ।
मुग्धे । तव हृदिरसावर्ज्जयन्तीषुरिव इमि ।")
गर्त्तः । इत्यमरः । ३ । ३ । १८४ ॥ ( शङ्खः । यथा भागवते । १ । ११ । २ ।
'स उच्चकाशे धवलोदरो दरो-
ऽप्युरुक्रमस्याधरशोणशोणिमा ।
दाध्मायमानः करकञ्जसम्पुटे
यथाब्जखण्डे कलहंस उत्स्वनः ॥ )
कन्दरे पुं स्त्री । इत्यमरटीकायां भरतः ॥ ( स्त्रियां ङीप् । यथा, ऋतुसंहारे । १ । २५ ।
"ध्वनति पवनविद्धः पर्व्वतानां दरीषु
स्फुटति पटुनिनादैः शुष्कवंशस्थलीषु ॥")

दरकण्टिका, स्त्री, ( दरः इषत् कण्टो यस्याः कप् । टापि अत इत्वम् । ) शतावरी । इति राजनिर्घण्टः ॥

दरणिः, पुं, (दॄ विदारणे+"ऋसृतेरनिः ।" २ । १०३ । इति उज्ज्वलदत्तोक्त्या अनिः ।) कुलभङ्गः । भाङ्गन इति भाषा । तत्पर्य्यायः । कूलङ्कषः २ । इति शब्दरत्नावली ॥ कूलतक्षुलः ३ । इति भूरिप्रयोगः ॥

दरत्, [ द् ] स्त्री, ( दृणातीति । दृ विदारणे + "दृ‌भसोऽदि: ।" उणां । १ । १२९ । इति अदि: । ) प्रपात: । भयम् । पर्व्वत: । इति मेदिनी । दे, ३० ॥ म्लेच्छजाति: । इति लिङ्गादिसंग्रहे अमर: ॥ ( देशविशेष: । यथा, राजतरङ्गिण्याम् । १५७ ।
"दरत्तुरुष्काधिपयोर्य: केशरिवराहयो: ।
हिमवद्विन्ध्ययोरासीदार्य्यावर्त्त इवान्तरे ॥")
कूलम् । तीरम् । इति सिद्धान्तकौमुद्यामुणादि-वृत्ति: ॥

दरदं, क्ली, ( दर ईषत् दायति शुध्यतीति । दै + क: ।) हिङ्गुलम् । इति राजनिर्घण्ट: ॥ ( क्वचित् पुंलिङ्गेऽपि दृश्यते । अस्य पर्य्यायो यथा,—
"रक्तं मर्कटशीर्षञ्च हिङ्गुलं दरदो रस: ॥"
इति वैद्यकरत्नमालायाम् ॥
पर्य्यायान्तरं यथा,—
"हिङ्गुलन्दरदं म्लेच्छं चित्राङ्गञ्चूर्णपारदम् ।
दरदस्त्रिविध: प्रोक्तश्चर्म्मार: शुकतुण्डक: ॥
हंसपादस्तृतीय: स्यादुगुणवानुत्तरोत्तरम् ।
चर्म्मार: शुक्लवर्ण: स्यात् सपीत: शुकतुण्डक: ॥
जवाकुसुमसङ्काशो हंसपादो महोत्तम: ॥"
इति भावप्रकाशस्य पूर्व्वखण्डे प्रथमे भागे ॥
"दरदं तण्डुलं कृत्वा ग्लनुपानके त्रिदिनम् ।
भाव्यं जम्बीररसैश्चार्द्रकैर्वा रसैर्बहुधा ॥
ततश्च जम्बीरवारिणा चाङ्गेर्य्या रसेन परिप्लुतम् ।
कृत्वा स्थालीमध्ये निधाय तदुपरि कठिनीं दृढम् ॥
चारु शरावं तत्र निंशद्वारं जलं देयं उष्णे देयं
तथैव तदूर्द्धपातनेन निर्म्मलं शिवज: ॥"
"हिङ्गुले हिङ्गुलुर्याति दरद: शुक्लतुण्डका: ।
रसगन्धकसम्भूतो हिङ्गुलो दैत्यरक्तका: ॥
अम्लवर्गद्रवै: पिष्टा दरदो माहिषेण च ।
दुग्धेन सप्तधा पिष्ट: शुष्कीभूतो विशुध्यति ॥
अन्यच्च ।
मेषीदुग्धेन दरदमम्लवर्गैर्विभावितम् ।
सप्तवारं प्रयत्नेन शुद्धिमायाति निश्चितम् ॥
अन्यमतम् ।
दरदं दोलिकायन्त्रे पक्तं जम्बीरजैर्द्रवै: ।
वारवारमथार्द्रैर्भावितं शुद्धिमेति हि ॥"
इति वैद्यकरसेन्द्रसारसंग्रहे जारणमारणाधि-कारे ॥ )

दरद:, पुं, (दरं भयं ददातीति । दा + क: ।) देश-विशेष: । भयम् । म्लेच्छजातिभेद: । इति शब्दरत्नावली ॥ ( अयन्तु पूर्व्वं क्षत्त्रिय आसीत् पश्चात् क्रमश: उपनयनादिक्रियालोपात् शूद्र-त्वादिकं प्राप्त: । यदुक्तं मनौ । १० । ४३-४४ ।
"शनकैस्तु क्रियालोपादिमा: क्षत्त्रियजातय: ।
वृषलत्वं गता लोके ब्राह्मणादर्शनेन च ॥
पौण्ड्रकाश्चौड्रद्रविडा: काम्बोजा यवना: शका: ।
पारदा पह्लवाश्चीना: किराता दरदा: खशा: ॥")

दरि:, स्त्री, ( दृ + इन् । ) दरी । इति शब्द-रत्नावली ॥ ( तक्षककुलोत्पन्ने सर्पे, पुं । इति महाभारतम् ॥ )

दरित:, त्रि, ( दरो भयमस्य सञ्जात: । दर + तारकादित्वात् इतच् । ) भीत: । इति हेम-चन्द्र: । ३ । २९ ॥

दरिद्र:, पुं, ( दरिद्राति दुर्गच्छतीति । दरिद्रा + अच् । ) निर्धन: । तत्पर्य्याय: । निस्व: २ दुर्विध: ३ दीन: ४ दुर्गत: ५ । इत्यमर: । ३।१। ४९ ॥ कीकट: ६ दुस्थ: ७ । इति जटाधर: ॥ अकृतमित: ८ । इति दानधर्म्म: । तस्य कारणं यथा,—
"अनुपोष्य त्रिरात्राणि तीर्थान्यनभिगम्य च ।
अदत्त्वा हेमधेनूश्च दरिद्रो जायते नर: ॥"
इति पाद्मे भूखण्डम् ॥
"दरिद्रो यस्त्वसन्तुष्ट: कृपणो योऽजितेन्द्रिय: ॥"
इति श्रीभागवतम् ॥

दरिद्रा, ध क दुर्गत्याम् । इति कविकल्पद्रुम: ॥ (अदां-परं-अकं-सेट् ।) दुर्गतिरकिञ्चनीभाव: । ध क, उपर्य्युपरि सश्च्नत: सर्व्व एव दरिद्रति । इति दुर्गादास: ॥

दरिद्रायक:, त्रि, (दरिद्रातीति । दरिद्रा + ण्वुल् ।) दरिद्र: । इति मुग्धबोधम् ॥

दरिद्रित:, त्रि, ( दरिद्रा + कर्त्तरि क्त: । ) दरिद्र: । दारिद्र्ययुक्त: ॥

दरिद्रिता, [ ऋ ] त्रि, ( दरिद्रा + तृच् । ) दरि-द्रायक: । दरिद्राधातो: कर्त्तरि तृन्प्रत्यय: ॥

दरोदरं, क्ली, ( दरो भयं तज्जनकं उदरं यस्य । प्रायश: सर्व्वग्रासकत्वादेवास्य तथात्वम् । ) दुरोदरम् । इत्यमरटीकायां भरत: ॥

दरोदर:, पुं, ( दरजनकमुदरं यस्य । ) दुरोदर: । इत्यमरटीकायां भरत: ॥ ( यथा, उणादि-सूत्रटीकायां उज्ज्वलदत्तधृतगोवर्द्धन: । ५ । ३८ ।
"आश्रित्य दुर्गं गिरिकंदरोदरं
क्रीडन्त्यसुस्मिन् सततं दरोदरम् ॥")

दर्द्दर:, पुं, पर्व्वत: । ( यथा, रामायणे । २ । ९१ । २४ ।
"मलयं दर्द्दरञ्चैव तत: स्वेदनुदो निल: ॥"
क्वचित् दर्द्दुरोऽपि पाठ: ॥ ) ईषद्भग्नभाजने, त्रि । इति मेदिनी । रे, १६६ ॥

दर्द्दराम्र:, पुं, आम्रविशेष: । तत्पर्य्याय: । मीना-म्रीय: २ । इति शब्दमाला ॥

दर्द्दरीकं, क्ली, ( दारयतीव कर्णौ । दृ + णिच् + "फर्फरीकादयश्च ।" उणां । ४ । २० । इति ईकन्प्रत्ययेन साधु: । ) वाद्यम् । इत्युणादि-कोष: ॥

दर्द्दरीक:, पुं, ( दारयतीव कर्णौ इति । दृ + णिच् + "फर्फरीकादयश्च ।" उणां । ४ । २० । इति ईकन्प्रत्ययेन साधु: ।) मेघ: । वाद्यभेद: । भेक: । इति संक्षिप्तसारे उणादिवृत्ति: ॥

दर्द्दुरं, क्ली, ग्रामजालम् । इति मेदिनी । रे, १६७ ॥

दर्द्दुर:, पुं, ( दृणाति कर्णौ शब्देनेति । दृ + "मद्गुरदर्द्दुरौ ।" उणां । १ । ४१ । इति उरच् प्रत्ययेन निपातनात् साधु: ।) भेक: । इत्यमर: । १ । १० । २४ ॥ ( यथा,—
"भद्रं कृतं कृतं मौनं कोकिलैर्जलदागमे ।
दर्द्दुरा यत्र वक्तारस्तत्र मौनं हि शोभनम् ॥"
इत्युद्भट: ॥ )
मेघ: । वाद्यभाण्डभेद: । पर्व्वतविशेष: । इति मेदिनी । रे, १६७ ॥ (यथा, रघौ । ४ । ५१ ।
"स निर्विश्य यथाकामं तटेष्वालीनचन्दनौ ।
स्तनाविव दिशस्तस्या: शैलौ मलयदर्द्दुरौ ॥" )
राक्षस: । इति संक्षिप्तसारे उणादिवृत्ति: ॥ ( अभ्रकधातुभेद: । यथा, भावप्रकाशे ।
"पिनाकं दर्द्दुरं नागं वज्रञ्चेति चतुर्व्विधम् ॥"
"दर्द्दुरं त्वग्निनिक्षिप्तं कुरुते दर्द्दुरध्वनिम् ।
गोलकान् बहुश: कृत्वा स स्यान्मृत्युप्रदायक: ॥")

दर्द्दुरा, स्त्री, (दृणाति दारयति वा असुरानिति । दृ + उरच् प्रत्ययेन निपातनात् साधु: । तत-ष्टाप् । ) चण्डिका । इति मेदिनी । रे, १६७ ॥

दर्द्रू:, पुं, (दरिद्राति दुर्गच्छत्यङ्गमनेनेति । दरिद्रा + "दरिद्रातेर्यालोप: ।" उणां ।१।९०। इति ऊ: । रकारेकारयकाराणां लोपश्च । ) दद्रुरोग: । इति शब्दरत्नावली ॥

दर्द्रु:, पुं, (दरिद्रा + बाहुलकात् उ: । यालोपश्च ।) दद्रुरोग: । इत्युणादिकोष: ॥

दर्द्रुघ्न:, पुं, ( दर्द्रु हन्तीति । दर्द्रु + हन् + टक् । ) चक्रमर्द्दक: । इति शब्दरत्नावली ॥

दर्द्रुण:, त्रि, ( दर्द्रुरस्यास्तीति । दर्द्रु + "लोमादि-पामादिपिच्छादिभ्य: शनेलच: ।" ५।२।१०० । इति पामादिषु पाठात् न: । ततो णत्वञ्च । ) दद्रुरोगी । इत्यमरटीकायां भरत: ॥

दर्द्रू:, पुं, ( दरिद्रा + ऊ: । यालोपश्च । ) दद्रुरोग: । इत्युणादिकोष: ॥

दर्द्रूण:, त्रि, ( दर्द्रूरस्यास्तीति । दर्द्रू + न: । ) दद्रु-रोगी । इत्यमरटीकायां भरत: ॥

दर्द्रूरोगी, [ न् ] त्रि, (दर्द्रूरोगोऽस्यास्तीति । दर्द्रू-रोग + इनि: । ) दद्रुरोगी । इत्यमरटीकायां भरत: ॥

दर्प:, पुं, ( दृप्यते इति । दृप् + भावे घञ् । ) उच्छृङ्खलत्वम् । इति नीलकण्ठ: । कस्तूरी । इति मेदिनी । पे, ७ ॥ उष्मा । इति त्रिकाण्ड-शेष: ॥ अहङ्कृति: । तत्पर्य्याय: । गर्व्व: २ अह-ङ्कार: ३ अवलिप्तता ४ अभिमान: ५ ममता ६ मान: ७ चित्तोन्नति: ८ स्मय: ९ । इति हेम-चन्द्र: । २ । २३१ ॥ * ॥
"अहङ्कारश्च सर्व्वेषां पापबीजममङ्गलम् ॥
ब्रह्माण्डेषु च सर्व्वेषां गर्व्वपर्य्यन्तमुन्नति: ॥
येषां येषां भवेद्दर्पो ब्रह्माण्डेषु परात्पर
विज्ञाय सर्व्वं सर्व्वात्मा तेषां शास्तासि एव च ॥
क्षुद्राणां महतां चैव येषां गर्व्वो भवेत् प्रिये ! ।
एवंविधमहं तेषां चूर्णीभूतं करोमि च ॥
चकार दर्पभङ्गञ्च महाविष्णो: पुरा विभु:
ब्रह्मणश्च तथा विष्णो: शेषस्य च शिवस्य च ॥
धर्म्मस्य च यमस्यापि शक्रस्य चन्द्रसूर्य्ययो: ।
गरुडस्य च वह्नेश्च गुरोर्दूर्व्वाससस्तथा ।
दौवारिकाश्च भक्तस्य [illegible]स्य च ।

सुराणामसुराणाञ्च भक्तस्य कामधेनुयोः ।
लक्ष्मणस्यार्ज्जुनस्यापि वानरस्य च भृगोस्तथा ।
सुमेरोश्च समुद्राणां वायोश्च वरुणस्य च ॥
सरस्वत्याश्च दुर्गायाः भद्रायाश्च शुभवल्या ।
सावित्र्याश्चैव गङ्गाया मनसायास्तथैव च ॥
प्राणाधिष्ठातृदेव्याश्च प्रियायाः प्राणतोऽपि च ।
प्राणाधिकाया राधाया अन्येषामधिका कथा ।
दृष्ट्वा दर्पश्च सर्व्वेषां प्रशान्तञ्च चकार सः ॥'

इति ब्रह्मवैवर्त्ते गीतगणेशखण्डम् ॥

दर्पकः पुं (दर्पयति दर्पयति मोहयति वेति । दृप हर्षमोहनयोः + णिच् + ण्वुल् ।) कामदेवः । इत्यमरः । १ । १ । २६ ॥

दर्पणः, स्त्री (दर्पयति सन्दीपयतीति । दृप् + णिच् + ल्युः ) चक्षुः । इति जटाधरः ॥ (भावे ल्युट् ।) सन्दीपनम् । इति दृपधात्वर्थदर्शनात् ॥

दर्पणः, पुं क्ली (दर्पयति सन्दीपयतीति । दृप + णिच् + नन्द्यादित्वात् ।' ३ । १ । १३४ । इति ल्युः ।) रूपदर्शनाधारः । आर्शी इति भाषा । तत्पर्य्यायः । मुकुरः २ आदर्शः ३ । इत्यमरः । २ । ७ । १४० ॥ आत्मदर्शः ४ मन्दरः ५ दर्शनम् ६ प्रतिबिम्बाश्रयम् ७ । इति शब्दरत्नावली ॥ कर्कः ८ कर्करः ९ । इति जटाधरः ॥ (यथा चाणक्ये । १०९ ।

'यस्य नास्ति स्वयं प्रज्ञा शास्त्रं तस्य करोति किम् ।
लोचनाभ्यां विहीनस्य दर्पणः किं करिष्यति ॥')

अस्य गुणः । आयुःश्रीकारित्वम् । पापनाशित्वञ्च । इति राजवल्लभः ॥ पुं पर्व्वतभेदः । नदविशेषः । यथा —

और्व्व उवाच ।

अत पूर्व्वं महाराज दर्पणो नाम पर्व्वतः ।
कुवेरो यत्र वसति धनपालैः समं सदा ।
यस्मिन्नास्ते मध्यभागे रोहिण्यो रोहिताकृतिः ।
यस्मिँल्लोहादिकं स्पृष्टं स्वर्णतां याति तत्क्षणात् ॥
तस्मात्तु दूरे वसति दर्पणो नाम वै नदः ।
हिमाद्रिप्रभवो नित्यं लौहित्यसदृशः पयः ॥
सहतृपन्न हि लौहित्यं सर्व्वैर्देवगणैर्वहिः ।
सर्व्वतीर्थोदकैः सम्यक् स्नापयामास तं सुतम् ॥
तस्य स्नानमशुद्धस्य पापदर्पस्य पाटनः ।
तेनायं दर्पणो नाम पुरा देवगणैः कृतः ॥
तस्मिन् स्नात्वा नदवरे योऽर्च्चयद्धनदाचले ।
कुवेरं प्रतिपत्तिथ्यां कार्त्तिके शुक्लपक्षके ॥
स याति ब्रह्मसदनमिह भूतिशतैर्युतः ॥

इति कालिकापुराणे ८१ अध्यायः ॥

दर्पारम्भः पुं (दर्पस्य आरम्भः ) अहङ्कारारम्भः । तत्पर्य्यायः । मटस्फटिः २ । इति जटाधरः ॥

दर्भः, पुं (दृणाति विदारयतीति । "दृदलिभ्यां भः ।" उणां ३ । १५१ । इति भः ।) कुशः । इत्यमरः । २ । ४ । १६६ ॥ उलपतृणम् । इति रत्नमाला ॥ काशः । इति शब्दरत्नावली ॥ * ॥ ("कुशा दर्भस्तथा वर्हिः सूच्यग्रो यज्ञभूषणः । ततोऽन्यो दीर्घपत्रः स्यात् क्षुरपत्रस्तथैव च ॥
दर्भद्वयं त्रिदोषघ्नं मधुरन्तुवरं हिमम् ।
मूत्रकृच्छ्राश्मरीतृष्णावस्तिरुक्प्रदरास्रजित् ॥"

इति भावप्रकाशस्य पूर्व्वखण्डे प्रथमे भागे ॥)

'हरिता यज्ञियाश्चैव पुष्टाः स्निग्धाः समाहिताः ।
गोकर्णमात्रास्तु कुशाः सञ्छिन्नाः समूलकाः ॥
पितृतीर्थेन देयाः स्युर्दूर्व्वाश्यामाकमेव च ।
काशाः कुशा बल्वजाश्च तथान्ये तीक्ष्णरोमशाः ।
मौञ्जाश्च शाद्वलाश्चैव षड्दर्भाः परिकीर्त्तिताः ॥'
यज्ञियाः याज्ञाः तीक्ष्णरोमशाः इति बल्वजानां विशेषणम् । शाद्वला इति सर्व्वेषां विशेषणम् । तेन तेषामभावे शूकतृणशरशीर्य्यबल्वजमसशुण्ठवज सर्व्वतृणानीति गोभिलेन तद्व्यतिरिक्तबल्वजानां निषेधो बोद्धव्यः । शूकानि धान्यपुष्पमञ्जर्य्यस्तानि येषां तृणानां सन्ति तानि शूकतृणानि इति भट्टनारायणधरणा ॥ गोकर्णमिता वितृस्ताङ्गुष्ठानामिकापरिमाणाः ।
दक्षिणमाणाः प्रोक्ता ये पितृतीर्थेन संस्कृताः ।
उपमूले तथा लूनाः प्रस्तरार्थे कुशोत्तमाः ॥

इति वायुपुराणम् ॥ * ॥

वन्दप्रतिप्रसवमाह हारीतः ।
पथि दर्भाश्चिता दर्भा ये दर्भा यज्ञभूमिषु ।
स्तरणासनपिण्डेषु षड्दर्भान् परिवर्ज्जयेत् ।
पिण्डार्थं ये धृता दर्भा यैः कृतं पितृतर्पणम् ।
मूत्रोच्चिष्टप्रलिप्ते च त्यागस्तेषां विधीयते ॥
धृते कृते च विण्मूत्रे त्यागस्तेषां विधीयते ।
धृतैरित्युपलक्षणेन कृतीया धृतैर्दर्भैः पलचितेन पुरुषेण ॥
नीवीमध्ये च ये दर्भा ब्रह्मसूत्रे च ये धृताः ।
पवित्रांस्तान् विजानीयाद्यथा कायस्तथा कुशाः ॥
आचम्य प्रयतो नित्यं पवित्रेण द्विजोत्तम ।
नोच्छिष्टन्तु भवेत्तत्तु भुक्तशेषं विवर्ज्जयेत् ॥
कृतं समाप्तमित्यर्थः ॥ * ॥

दर्भपटलसङ्ख्यामाह रत्नाकरे ग्रह्यसङ्ग्रहः ।
ऊर्द्धकेशो भवेद्ब्रह्मा लम्बकेशस्तु विष्टरः ।
दक्षिणावर्त्तको ब्रह्मा वामावर्त्तस्तु विष्टरः ॥
शालिग्रामीपिकायाम् ।
सप्तभिर्नवभिर्वापि साङ्गुलित्रयवेष्टितम् ।
ओङ्कारेणैव मन्त्रेण द्विजः कुर्य्यात् कुशद्विजम् ।
नवभिरित्यत्र पञ्चभिरिति कर्म्मोपदेशिन्यां पाठः । दर्भसंख्याविशेषाभिधानं छन्दोगेतरपरम् ।
पञ्चाशद्भिस्तु ब्रह्माश्च तदर्द्धं ब्रह्मविष्टरौ तथा ।
दर्भसंख्या न विहिता विष्टरास्तरणेष्वपि ॥
इति गोभिलपरिशिष्टीयवचनात् ।" इति आह्निकतत्त्वम् ॥

दर्भटः, क्ली (दभ्यते निभृतस्थाने विरच्यते इति । दभ ग्रन्थने + बाहुलकात् अटन् ।) निभृतगृहम् । इति त्रिकाण्डशेषः ॥

दर्भपत्रः, पुं (दर्भस्य कुशस्येव पत्राणि यस्य ।) काशः । इति राजनिर्घण्टः ॥

दर्भाह्वयः, पुं, (दर्भं आह्वयते स्पर्द्धते सदृशत्वात् । आ + ह्वे + अच् ।) मुञ्जः । इति राजनिर्घण्टः । (मुञ्जशब्देऽस्य विवरणं ज्ञातव्यम् ॥)

दर्व्वः पुं (दृणाति विदारयतीति । दृ + "कृगृशृदृभ्यो वः ।" उणां १ । १५५ । इति वः ।) राक्षसः । हिंस्रः । इति संक्षिप्तसारे उणादिवृत्तिः । (जातिविशेषः । यथा, महाभारते । २ । ५१ । १३

"कैरता दरदा दर्व्वाः शूरा वैयामकास्तथा ।
औदुम्बरा दुर्व्विभागाः पारदाः सह बाह्लिकैः ।
स्त्रियां टाप् । उशीनरपत्नीभेदः । यथा हरिवंशे । ३१ । २२ ।

"उशीनरस्य पत्न्यस्तु पञ्च राजर्षिवंशजाः ।
नृगा कृमी नवा दर्व्वा पञ्चमी च दृषद्वती ॥)

दर्व्वरीकः, पुं (दृ विदारे + "फर्फरीकादयश्च ।" उणां । ४ । २० । इति ईकन्प्रत्ययेन निपातनात् साधुः ।) इन्द्रः । वायुः । वाद्यभेदः । इति संक्षिप्तसारे उणादिवृत्तिः ॥

दर्व्वाटः पुं (दर्व्वाय हिंसायै अटतीति । अट + अच् । शकन्ध्वादित्वात् अलोपः ।) द्वारवारी । इति हारावली । १२८ ॥

दर्व्विः स्त्री (दृणाति विदारयत्यनेनेति । दृ + 'दृदृभ्यां विन् ।' उणां ४ । ५३ । इति विन् ।) अन्नादिदारकः । हाता इति भाषा । तत्पर्य्यायः । कम्बिः २ खजाका ३ । इत्यमरः । २ । ९ । ३४ ॥ दर्व्वी ४ कम्बी ५ खजाकम् ६ । मथा । इति शब्दरत्नावली ॥

दर्व्विकः पुं (दर्व्वि + स्वार्थे कन् । अभिधानात् पुंस्त्वम् ।) दर्व्वी । इति त्रिकाण्डशेषः ॥

दर्व्विका स्त्री, (दर्व्वि + स्वार्थे कन् + टाप् ।) दार्व्विका । इत्यमरटीकायां रायमुकुटः ॥ खजाका । इति त्रिकाण्डशेषः ॥ कज्जलम् । यथा

"सौवीरं जाम्बलं तुत्थं मयूरग्रीवकं तथा ।
दर्व्विका मेघनीलञ्च अञ्जनानि भवन्ति षट् ॥"

तल्लक्षणम् यथा कालिकापुराणे ६८ अध्याये ।

'मधूपकं सौवीरं जाम्बलं प्रस्तरं तथा ।
मयूरग्रीवकं रत्नं मेघनीलन्तु तैजसम् ॥
पिष्ट्वा निष्पाद्य चैतानि शिलायां तैजसेऽथवा ।
प्रदद्यात् सर्व्वदेवेभ्यो देवीभ्यश्चापि पुत्रक ॥
घृततैलादियोगेन ताम्रादौ दीपवह्निना ।
यदञ्जनं जायते तु दर्व्विका परिकीर्त्तिता ॥

दर्व्वी स्त्री (दर्व्वि + वा ङीष् ।) दर्व्विः । इति शब्दरत्नावली ॥ (यथा, उत्तरगीतायाम् । २ । ३७ ।

'अधीत्य चतुरो वेदान् धर्म्मशास्त्राणि सर्व्वदा ।
योऽत्मतत्त्वं न जानाति दर्व्वी पाकरसं यथा ॥")

दर्व्वीकरः पुं (दर्व्वीं फणां करोतीति कृ + "कृञो हेतुताच्छील्यानुलोम्येषु । ३ । २ । २० । इति ट । यद्वा दर्व्वी यथा करः हस्तोऽस्य ।) सर्पः । इत्यमरः । १ । ८ । ८ ॥ (यथा सुश्रुते कल्पस्थाने चतुर्थाध्याये ।

'दर्व्वीकरा मण्डलिनो राजिमन्तश्च पन्नगाः ।
तेषु दर्व्वीकरा ज्ञेया विंशतिः षट् च पन्नगाः ॥

मुग्धः, त्रि, (मुह् + कर्त्तरि क्तः ।) मूढः । (यथा, ऋग्वेदे । ५ । ४० । ५ ।

"अक्षेत्रविद् यथा मुग्धो भुवनान्यदीधयुः ॥")

सुन्दरः । इति विश्वः ॥ (यथा, मेघदूते । १४ ।

"दृष्टोत्साहश्चकितचकितं मुग्धसिद्धाङ्गनाभिः ॥")

मुग्धबोधं, क्ली, (मुग्धः सुन्दरः बोधः ज्ञानं पदपदार्थानां भवत्यस्मात् । यद्वा, मुग्धान् मूढ़ान् अल्पबुद्धीन् जनान् बोधयतीति । मुग्धबोधम् । इति दुर्गादासः । मुग्ध + बुध् + "कर्म्मण्यण् । ३ । २ । १ । इति अण् ।) वोपदेवकृतव्याकरणविशेषः । यथास्याद्यश्लोकः ।

"मुकुन्दं सच्चिदानन्दं प्रणिपत्य प्रणीयते ।
मुग्धबोधं व्याकरणं परोपकृतये मया ॥"

मुग्धा, स्त्री, (मुग्ध + टाप् ।) नायिकाविशेषः । (सा च नायिका स्वीयापरकीयाभेदेन द्विविधा ।) तत्र स्वीयापि त्रिविधा । मुग्धा मध्या प्रगल्भा च । तत्राङ्कुरितयौवना मुग्धा । सा च ज्ञातयौवना अज्ञातयौवना च । सैव क्रमशो लज्जाभयपराधीनरतिर्नवोढ़ा । सैव जातप्रश्रया विश्रब्धनवोढ़ा । अस्याश्चेष्टा क्रिया मनोहरा । कोपे मार्द्दवं नवविभूषणे समीहा च ॥ मुग्धा यथा ।

"आनन्दं किल कामदेवधरणीपालेन काले शुभे वस्तुं वास्तुविधिं विधास्यति तनौ तारुण्यमेणीदृशः ।
दृष्ट्या खञ्जनचातुरी मुखरुचा सौधाकरी माधुरी
वाचा किञ्च सुधासमुद्रलहरी लावण्यमामन्त्रते ॥"*॥

अज्ञातयौवना यथा,—

"नीरात्तीरमुपागता श्रवणयोः सीम्नि स्फुरन्नेत्रयोः
श्रोणे लग्नमिदं किमुत्पलमिति ज्ञातुं करं न्यस्यति ।
शैवालाङ्कुरशङ्कया शशिमुखी रोमावलीं प्रोञ्छति
आत्मानामाततमुद्रः सखीमविदितश्रोणीभरा पृच्छति ॥"

ज्ञातयौवना यथा,—

"स्वयम्भूः शम्भुरम्भोजलोचने त्वत्पयोधरः ।
नखेन कस्य धन्यस्य चन्द्रचूड़ो भविष्यति ॥"

नवोढ़ा यथा,—

"हस्ते धृतापि शयने विनिवेशितापि
क्रोड़े कृतापि यतते बहिरेव गन्तुम् ।
जानीमहे नववधूरथ तस्य वश्या
यः पारदं स्थिरयितुं क्षमते करेण ॥"

द्वितीया यथा,—

"बलान्नीता पार्श्वं मुखमनुमुखं नैव कुरुते
धुनाना मूर्द्धानं क्षिपति वदनं चुम्बनविधौ ।
हृदि न्यस्तं हस्तं क्षिपति गमनारोपितमना
नवोढ़ा वोढ़ारं रमयति च सन्तापयति च ॥"

विश्रब्धनवोढ़ा यथा,—

"दरमुकुलितनेत्रपालिनीवीनियमितबाहुकृतोरुयुग्मबन्धम् ।
करकलितकुचस्थलं नवोढ़ा
स्वपिति समीपमुपेत्य कस्य यूनः ॥"

इति रसमञ्जरी ॥

सुच इ ड
सुच ड } कल्कने । दम्भे । शाठ्ये । इति कविकल्पद्रुमः ॥ (भ्वा०-आत्म०-अक०-सेट् ।) द्वौ पञ्चमस्वरिणौ । इ सुच्यते । ड सुचते ड मोचते । इति दुर्गादासः ॥

सुच ऌ श प ञ औ मोचे । इति कविकल्पद्रुमः ॥ (तुदा०-उभ०-सक०-बन्धनरहितीभावे अक०-अनिट् ।) मोचस्त्यागः । ऌ असुचत् । श प ञ सुचति सुचते धनं दाता । बन्धनरहितीभावे अकर्म्मकोऽयम् । आलानान्मुक्तो गजः कर्त्तरि क्तः । एवं पापान्मुक्त इत्यादौ पापबन्धनान्मुक्त इत्यर्थः । इति दुर्गादासः ॥

सुच क मोचे । इति कविकल्पद्रुमः ॥ (चुरा०-पर० सक०-सेट् ।) क मोचयति । मोचस्त्यागः । इति दुर्गादासः ॥

सुचिरः, त्रि, (सुचति धनादिकं ददातीति । सुच् + "इषिमदिमुदिखिदिच्छिदिभिदिमन्दिचन्दितिमिमिहिमुहिसुचीति ।" उणा० १ । ५२ । इति किरच् ।) दाता । इति त्रिकाण्डशेषः ॥

सुचिरः, पुं, (सुच् + किरच् ।) धर्म्मः । वायुः । देवता । इति संक्षिप्तसारोणादिवृत्तिः ॥

सुचुकुन्दः, पुं, (सुच् + बाहुलकात् कुः । सुचुः कुन्द इवेति । राजदन्तादित्वात् पूर्व्वनिपातः ।) पुष्पवृक्षविशेषः । मेकचन्द इति हिन्दी भाषा । (यथा, राजेन्द्रकर्णपूरे । १० ।

"आनन्दे सुचुकुन्दकन्दलि ! भज स्वस्यासि वासन्तिके ! ।")

तत्पर्य्यायः । छत्रवृक्षः २ चित्रकः ३ प्रतिविष्णुकः ४ । इति भावप्रकाशः ॥ बहुपुत्त्रः ५ सुदलः ६ हरिवल्लभः ७ सुपुष्पः ८ अर्घ्यार्हः ९ लघुपत्रकः १० रक्तप्रसवः ११ । अस्य गुणाः । कटुत्वम् । तिक्तत्वम् । कफवातनाशित्वम् । कण्ठकरत्वम् । त्वग्दोषशोफशमनत्वम् । जीर्णज्वरविनाशनत्वञ्च । इति राजनिर्घण्टः ॥ शिरःपीड़ापित्तास्रविषनाशित्वम् । इति भावप्रकाशः ॥ * ॥ मान्धातृराजपुत्त्रः । इति श्रीभागवतम् । ९ । ७ । ३८ । (यथा च देवीभागवते । ७ । १० । ४ ।

"तस्यां सुतमुत्पादयामास मान्धाता द्वौ सुतौ नृप ! ।
पुरुकुत्सं सुविख्यातं सुचुकुन्दं तथापरम् ॥")

सुचुटी, स्त्री, अङ्गुलिमोटनम् । आङ्गुलमट्काना इति भाषा । यथा,—

"सुचुटी सञ्चुटी चैव भवेदङ्गुलिमोटने ।"

इति शब्दरत्नावली ॥

मुष्टिः । मुठा इति भाषा । यथा,—

"सम्पिण्डिताङ्गुलिःपाणिर्मुष्टिर्मुस्तु सुचुट्यपि ।"

इति हेमचन्द्रः । [illegible] ॥

सुज इ क
सुज क } ध्वनावब्ध्योः । इति कविकल्पद्रुमः ॥ (चुरा०-पर०-मार्ज्जने सक०-ध्वनौ अक०-सेट् ।) द्वौ पञ्चमस्वरिणौ । इ क सुञ्जयति । क मोजयति । इति दुर्गादासः ॥

सुञ्चकः, पुं, (सुचिड + ण्वुल् ।) सुष्ककवृक्षः । इति राजनिर्घण्टः ॥

सुञ्जः, पुं, (सुञ्जयते ध्वन्यते अनेन । सुञ्ज + करणे अच् ।) तृणविशेषः । मुँज इति भाषा ॥ (यथा, पञ्चदश्याम् । १ । ४२ ।

"यथा सुञ्जादीषिकैवमात्मा युक्त्या समुद्धृतः ।
शरीरत्रितयाद्धीरैः परं ब्रह्मैव जायते ॥")

तत्पर्य्यायः । मौञ्जीतृणाख्यः २ ब्रह्मण्यः ३ तेजनाह्वयः ४ वाणीरकः ५ सुञ्जनकः ६ शरी ७ दर्भाह्वयः ८ दूरमूलः ९ दृढ़तृणः १० दृढ़मूलः ११ बहुप्रजः १२ रञ्जनः १३ शत्रुभङ्गः १४ । अस्य गुणाः । मधुरत्वम् । शीतत्वम् । कफपित्तमदोषनाशित्वम् । ब्रह्मचारिदीक्षासु च पावनत्वम् । भूतनाशित्वञ्च । इति राजनिर्घण्टः ॥ अपि च ।

"सुञ्जो सुञ्जातको वाणः स्थूलदर्भः सुमेधसः ।
सुञ्जद्वयन्तु मधुरं तुवरं शिशिरं तथा ॥
दाहतृष्णाविसर्पास्रमूत्रवस्त्यक्षिरोगजित् ।
दोषत्रयहरं वृष्यं मेखलासूपयुज्यते ॥"

इति भावप्रकाशः ॥

शरः । इति रत्नमाला । उपनयनकाले सुञ्जमेखलाधारणविधिर्यथा । "अथैनं माणवकमाचार्य्यस्त्रिःप्रदक्षिणं त्रिवृतं सुञ्जमेखलां परिधापयन् मन्त्रद्वयं वाचयति । इति भवदेवभट्टः ॥

सुञ्जकेशी, [न्] पुं, (सुञ्जा इव केशाः सन्त्यस्य । इनिः ।) विष्णुः । इति हेमचन्द्रः । २ । १३१ ॥

सुञ्जरं, क्ली, (सुञ्जयते प्रक्षाल्यते इति । सुञ्ज + बाहुलकात् अरन् ।) शालूकम् । इति शब्दमाला ॥

सुञ्जातकः, पुं, (सुञ्जं अतति तत्सादृश्यं प्राप्नोतीति । अत + अच् । ततः स्वार्थे कन् ।) पुष्पशाकभेदः । अस्य गुणाः । परं स्वादुत्वम् । हृद्यत्वम् । पित्तानिलापहत्वञ्च । इति राजवल्लभः ॥ (यथा, सुश्रुते सूत्रस्थाने ३६ अध्याये ।

"हस्तिकर्णसुञ्जातकलामज्जकप्रभृतीनि ।")

सुट इ मर्द्दे । इति कविकल्पद्रुमः ॥ (भ्वा०-पर०-सक०-सेट् ।) पञ्चमस्वरी । इ सुण्टति । मर्द्दो मर्द्दनम् । इति दुर्गादासः ॥

सुट कि चुर्द्दि । इति कविकल्पद्रुमः ॥ (चुरा० पक्षे भ्वा०-सक०-सेट् ।) चुर्द्दि चूर्णीकरणे । कि मोटयति तण्डुलं शिला । यस्तु दुर्गंश मोटतीति हलायुधः ॥

सुट शि आक्षेपे च । इति कविकल्पद्रुमः ॥ (तुदा०-पर०-सक०-सेट् ।) मवर्गशेषादिः । शि सुटति असुटीत् सुमोट । चकारात् चुर्द्दि च । सुटति द्विषां दर्पं य इति हलायुधः । इति दुर्गादासः ॥

लावणमधुरा स्निग्धा शीताश्चैव रसा हिताः ।
मुखपाकं शिराकर्म शिरःकायविरेचनम् ।
मूत्रतैलघृतक्षीरैश्च कवलग्रहः ॥
सप्तच्छदविफलापाठा मृद्वीकाजातिपल्लवाः ।
कषायतिक्तकाः शीताः क्वाथाश्च मुखधावनाः ।
तुलां खदिरसारस्य द्विगुणामरिमेदसः ॥
प्रक्षाल्य जर्जरीकृत्य चतुर्द्रोणेऽम्भसः पचेत् ।
द्रोणशेषं कषायं तं पूत्वा भूयः पचेच्छनैः ॥
ततस्तस्मिन् घनीभूते चूर्णीकृत्यार्द्धभागिकम् ।
चन्दनं पद्मकोशीरं मञ्जिष्ठा धातकी घनम् ॥
प्रपौण्डरीकं यष्ट्याह्वं त्वगेलापद्मकेशरम् ।
लाक्षां रसाञ्जनं मांसीं त्रिफलां लोध्रवालकम् ॥
रजन्यौ फलिनीमेलां समङ्गां कट्फलं वचाम् ।
यवासमगुरुं पत्तङ्गं गैरिकाञ्जनमावपेत
लवङ्गनखकक्कोलजातीकोषात् पलोन्मितान् ।
कर्पूरकुडवञ्चापि पुनः शीते विचारिते ॥
ततस्तु गुलिकाः कार्य्याः शुष्का वास्येन धारयेत् ।
तैलमानेन कल्केन कषायेण च साधयेत् ॥
दन्तानां चलनं शौषिर्यं क्रिमिरोगनुत् ।
मुखपाकास्यदौर्गन्ध्यं चारोचकनाशनम् ॥
श्रावोपजिह्विकास्वास्यगलरोगनुत् ।
दन्तास्यगलरोगेषु सर्व्वेषां तत्परायणम् ॥'
इति खदिरादिगुटिकातैलञ्च । इति मुखरोगचिकित्सा । इति चरकचिकित्सास्थाने २६ अध्यायः ॥)

मुखलाङ्गल पुं (मुखं लाङ्गलमिव भूविदारकमस्य ।) शूकरः । इति जटाधरः ॥

मुखबन्धन क्ली (मुखं प्रारम्भविषयं तस्य बन्धनमुपक्षेपः ।) ग्रन्थारम्भे तत्र वक्तव्यकथनम् । तस्य नामान्तरम् । अनुक्रमणिका । भूमिका । इति छन्दोमञ्जर्य्याः मुखबन्धनाख्यप्रथमस्तवके । इति तद्ग्रन्थकर्तृगङ्गादासवैद्येन लिखितम् ॥

मुखवल्लभ पुं (मुखस्य वल्लभः प्रीतिकरः ।) दाडिमवृक्षः । इति शब्दमाला ॥ मुखप्रिये त्रि ॥

मुखवासिका स्त्री (मुखं वासयति शोधयतीति । वस + णिच् + ण्वुल् + स्त्रियां टाप् । अत इत्वञ्च ।) अम्बष्ठा । इति राजनिर्घण्टः ॥

मुखवाद्य, क्ली (मुखेन वाद्यम् ।) वक्त्रतालवाद्यम् । वाक इति भाषा । इति त्रिकाण्डशेषः ॥ मुखस्य मुखेन च वाद्यञ्च । शिवपूजान्ते बम् इति शब्देन गालवाद्यम् । यथा —
"लिङ्गं निर्म्माय विधिवत् विधिवत् पूजयेच्च तम् ।
बम्बारं जपित्वा वै मुखवाद्यं शुचिस्मिते ! ॥"
इति लिङ्गार्च्चनतन्त्रे १५ पटलः ॥
अपि च ।
"मुखवाद्यं समुत्थाय हि कृत्वा तु परमेश्वरि ! ।
साष्टकामस्यदितं मुखवाद्यं सुदुर्लभम् ॥
अकारादिलकारान्तमनुलोमविलोमतः ।
पञ्चाशत् परमेशानि ! मुखवाद्यं शुचिस्मिते ! ॥
सबिन्दुं च समुच्चार्य्य पञ्चाशद्वर्णकान् प्रिये ! ।
अनुलोमविलोमेन सर्व्वमेव वरानने ! ॥
अनेनैव विधानेन मुखवाद्यं करोति यः ।
स सिद्धः सगणः सोऽपि स शिवो नात्र संशयः ।
मृत्युञ्जयोऽहं देवेशि मुखवाद्यप्रसादतः ॥
यस्मिन् काले महेशानि असुरो बलवान् भवत् ।
तस्मिन् काले महेशानि ! मुखवाद्यं करोम्यहम् ॥
तत श्रुत्वा परमेशानि ! असुरा राक्षसाश्च ये
पलायन्ते महेशानि ! तत श्रुत्वा परमेश्वर ! ॥
ये नरा भुवि तिष्ठन्ति मुखवाद्यं विना प्रिये ! ।
स सर्व्वयातनाभोगी अन्ते कुम्भीरतां व्रजेत् ॥
इति च लिङ्गार्च्चनतन्त्रे ८ पटलः ॥

मुखवास पुं (मुखस्य वासः सौरभ्यमस्मात् ।) गन्धतृणम् । इति राजनिर्घण्टः ॥

मुखवासन पुं (मुखं वासयतीति । वस + णिच् + ल्यु ।) मुखसद्गन्धकारकद्रव्यम् । तत्पर्य्यायः । आमोदी २ । इत्यमरः । १ । ५ । १२ ॥ द्वे मुखवासनवटिकादौ आमोदयुक्ते कर्पूरादिरामोदी इत् । मुखं वासयति मुखवासनं नन्द्यादित्वाल्ल्युः । नानाद्रव्यरचित एकैकश्च एव वा कर्पूरादिभिर्म्मुख पयोऽस्य मुखवासनवटिरामोदीति सर्व्वम् । शुभवासन इति पाठे शुभं मनोहरं वासनं वासो यस्य कषायादेः स आमोदीत्यामुदिरिति सुभूतिः । क्षीरस्वामिना तु समाकर्षादिचतुष्टयेन इष्टगन्धादिचतुष्टयेन च पर्य्यायद्वयमाख्यातम् । शब्दार्णवे तु ।
'कस्तूरिकायामामोदः कर्पूरे मुखवासनः ।
बकुलः स्यात् परिमलश्चम्पकः सुरभिस्तथा ।
गन्धा द्विपरस्पेते गुणितश्चा त्रिलिङ्गका ।'
इति भरतः ॥

मुखविलुण्ठिका, स्त्री (मुखेन विलुण्ठयतीति । लुण्ठ + णिच् ण्वुल् । स्त्रियां टाप् । अत इत्वञ्च ।) छागी । इति शब्दरत्नावली ॥

मुखविष्ठा स्त्री, (मुखे विष्ठा मलमस्याः ।) तैलपायिका । यथा —
'वलगुलिका मुखविष्ठा परोष्णी तैलपायिका ।"
इति हेमचन्द्रः ॥

मुखशफ पुं (मुखं शफः क्षुर इव तीक्ष्णमस्य ।) दुर्म्मुखः । इति शब्दमाला ॥

मुखशुद्धि स्त्री (मुखस्य शुद्धिः ।) वक्त्रशोधनम् । यथा, आह्निकतत्त्वे ।
'अभावे दन्तकाष्ठानां प्रतिषिद्धदिने तथा ।
अपां द्वादशगण्डूषैर्मुखशुद्धिं विधीयते ॥"

मुखशोधन क्ली (मुखस्य शोधनम् ।) त्वचम् । इति राजनिर्घण्टः ॥

मुखशोधन पुं (मुखं शोधयत्यनेनेति । शुध + णिच् + करणे ल्युट् ।) कटुरसः । इति हेमचन्द्रः ॥

मुखशोधी, [न्] पुं, (मुखं शोधयतीति । शुध + णिच् + णिनि ।) जम्बीरः । इति राजनिर्घण्टः ॥ (गुणादयोऽस्य जम्बीरशब्दे ज्ञातव्याः ॥)

मुखषील, त्रि (मुखं षीलति निरस्यति विकृतं करोतीति भावः । षील + इगुपधत्वात् कः पृषोदरादित्वात् षस्य सत्वम् ।) डमुरः । इति शब्दमाला ॥

मुखसम्भव पुं (मुखात् सम्भव उत्पत्तिरस्य ।) ब्राह्मणः । इति हेमचन्द्रः । ३ । ४७६ ॥

मुखसुर, क्ली, (मुखस्य सुरा इति विभाषा सेनासुराच्छायाशालानिशानाम् । २ । ४ । २५ । इति षष्ठीसमासे सुराशब्दस्य क्लीवत्वम् ।) तालसुरा । इति त्रिकाण्डशेषः । ताडी इति भाषा ॥

मुखस्राव पुं, (स्रु भावे + घञ् । मुखात् स्रावः पतनमस्य ।) लाला । इति राजनिर्घण्टः ॥

मुखाग्नि, पुं (मुखे अग्निरिव ।) दावाग्निः । यथा —
'हेमकन्दिर्यथोद्वाथ नगौकाः स्याद्दवानलः ।
मुखोल्का भूतमत्सारी मुखाग्निर्दवमत्सरः ॥"
इति शब्दमाला ।
शवमुखे दत्तवह्निः । इति लोके । शास्त्रे तु शिरःस्थाने । यथा,—
'दक्षिणाभिमुखः सर्व्वं गृहीत्वा तु हुताशनम् ।
गृहीत्वा पाणिना चैव मन्त्रमेतदुदीरयेत् ॥
कृत्वा तु दुष्कृतं कर्म्म जानता वाप्यजानता ।
मृत्युकालवशं प्राप्य नरं पञ्चत्वमागतम् ॥
धर्म्माधर्म्मसमायुक्तं लोभमोहसमावृतम् ।
दहेयं सर्व्वगात्राणि दिव्यान् लोकान् स गच्छतु ॥
एवमुक्त्वा ततः शीघ्रं कृत्वा चैव प्रदक्षिणम् ।
ज्वलमानं तथा वह्निं शिरःस्थाने प्रदापयेत् ॥
चातुर्व्वर्ण्येषु संस्थानमेवं भवति पुत्रिके ॥'
इति शुद्धितत्त्वम् ॥

मुखामय, पुं (मुखस्यामयः ।) मुखरोगः । इति राजनिर्घण्टः ॥

मुखार्जक, पुं, अर्जकः । इति राजनिर्घण्टः ॥

मुखाश्व पुं, (मुखम् अश्वमिवास्य ।) कर्कटः । इति त्रिकाण्डशेषः ॥

मुखोल्का, स्त्री (मुखे उल्केव यस्याः ।) दावानलः । इति शब्दमाला ॥

मुख्य पुं प्रथमः कल्पः । इत्यमरः । २ । ७ । ४० ॥ यागादिषु शास्त्रोक्तः प्रथमः कल्पो मुख्यः स्यात् । यथा, व्रीहिभिर्यजेतेत्यादिना उक्तत्वात् मुखमिव मुख्यः विकारश्चेत्यादिना इवार्थे यः । इति तट्टीकायां भरतः ॥

मुख्य त्रि, श्रेष्ठः । इत्यमरः । ३ । १ । ५७ ॥ (तथास्य पर्य्यायः ।
"प्रधानमुत्तमं रथ्यं श्रेष्ठं मुख्यमनुत्तमम् ।
वरं वरेण्यं प्रमुखं परार्द्धं प्रवरं तथा ॥"
इति वैद्यकरत्नमालायाम् ॥
यथा, भागवते । ७ । २५ । ३६ ।
"मुख्यानामपुरस्ताद्वात्तयायक्षपूरयो ॥")

मुख्यसर्ग, पुं (मुख्यानां सर्गः इति ।) स्थावरसृष्टिः । यथा —
'मुख्यसर्गश्चतुर्थस्तु मुख्या वै स्थावराः स्मृताः ॥"
इति वराहपुराणम् ॥

मुगूह, पुं, दात्यूहपक्षी । इति भूरिप्रयोगः ॥

मुग्धः, त्रि, (मुह् + कर्त्तरि क्तः ।) मूढ़ः । ( यथा, ऋग्वेदे । ५ । ४० । ५ ।
"अक्षेत्रविद् यथा मुग्धो भुवनान्यदीधयुः ॥")
सुन्दरः । इति विश्वः ॥ ( यथा, मेघदूते । १४ ।
"दृष्टोत्साहश्चकितचकितं मुग्धसिद्धाङ्गनाभिः ॥")

मुग्धबोधं, क्ली, ( मुग्धः सुन्दरः बोधः ज्ञानं पदपदार्थानां भवत्यस्मात् । यद्वा, मुग्धान् मूढ़ान् अल्पबुद्धीन् जनान् बोधयतीति । मुग्धबोधम् । इति दुर्गादासः । मुग्ध + बुध् + "कर्म्मण्यण् । ३ । २ । १ । इति अण् ।) वोपदेवकृतव्याकरणविशेषः । यथास्यान्त्यश्लोकः ।
"मुकुन्दं सच्चिदानन्दं प्रणिपत्य प्रणीयते ।
मुग्धबोधं व्याकरणं परोपकृतये मया ॥"

मुग्धा, स्त्री, (मुग्ध + टाप् ।) नायिकाविशेषः । ( सा च नायिका स्वीयापरकीयाभेदेन द्विविधा ।) तत्र स्वीयापि त्रिविधा । मुग्धा मध्या प्रगल्भा च । तत्राङ्कुरितयौवना मुग्धा । सा च ज्ञातयौवना अज्ञातयौवना च । सैव क्रमशो लज्जाभयपराधीनरतिर्नवोढ़ा । सैव जातप्रश्रया विश्रब्धनवोढ़ा । अस्याश्चेष्टा क्रिया मनोहरा । कोपे मार्द्दवं नवविभूषणे समीहा च ॥ मुग्धा यथा ।
"आम्रप्रं किल कामदेवधरणीपालेन काले शुभे वस्तुं वास्तुविधिं विधास्यति तनौ तारुण्यमेणीदृशः ।
दृष्ट्वा खञ्जनचातुरी सुखरुचा सौधाकरी माधुरी
वाचा किञ्च सुधासमुद्रलहरी लावण्यमामन्त्रते ॥"*॥

अज्ञातयौवना यथा,—
"नीराक्षीरमुपागता श्रवणयोः सीम्नि स्फुरन्नेत्रयोः
श्रोत्रे लग्नमिदं किमुत्पलमिति ज्ञातुं करं न्यस्यति ।
शैवालाङ्कुरशङ्कया प्रशिथिलं रोमावलीं प्रोञ्छति
श्रोणीभारात् मुहुः सखीमविदितश्रोणीभरा पृच्छति ॥"

ज्ञातयौवना यथा,—
"स्वयम्भूः शम्भुरम्भोजलोचने त्वत्पयोधरः ।
नखेन कस्य धन्यस्य चन्द्रचूड़ो भविष्यति ॥"

नवोढ़ा यथा,—
"हस्ते धृतापि शयने विनिवेशितापि
क्रोड़े कृतापि यतते बहिरेव गन्तुम् ।
जानीमहे नववधूरथ तस्य वश्या
यः पारदं स्थिरयितुं क्षमते करेण ॥"

द्वितीया यथा,—
"बलान्नीता पार्श्वं सुखमसुखं नैव कुरुते
धुनाना मूर्द्धानं क्षिपति वदनं चुम्बनविधौ ।
हृदि न्यस्तं हस्तं क्षिपति गमनारोपितमना
नवोढ़ा वोढ़ारं रमयति च सन्तापयति च ॥"

विश्रब्धनवोढ़ा यथा,—

"दरनुकुलितनेत्रपालिनीवी-
नियमितबाहुकृतोरुयुग्मबन्धम् ।
करकलितकुचाम्बरं नवोढ़ा
स्वपिति समीपमुपेत्य कस्य यूनः ॥"
इति रसमञ्जरी ॥

मुच इ ङ
मुच ङ } कल्कने । दम्भे । शाठ्ये । इति कविकल्पद्रुमः ॥ ( भ्वा०-आत्म०-अक०-सेट् ।) द्वौ पञ्चमस्वरिणौ । इ मुञ्चते । ङ मुचते । इ मोचते । इति दुर्गादासः ॥

मुच ऌ श प ज औ मोचे । इति कविकल्पद्रुमः ॥ ( तुदा०-उभ०-सक०-बन्धनरहितीभावे अक०-अनिट् ।) मोक्षस्त्यागः । ऌ अमुचत् । श प ज मुञ्चति मुञ्चते धनं दाता । बन्धनरहितीभावे अकर्म्मकोऽयम् । आलानान्मुक्तो गजः कर्त्तरि क्तः । एवं पापान्मुक्त इत्यादौ पापबन्धनान्मुक्त इत्यर्थः । इति दुर्गादासः ॥

मुच क मोचे । इति कविकल्पद्रुमः ॥ ( चुरा०-पर० सक०-सेट् ।) क मोचयति । मोचस्त्यागः । इति दुर्गादासः ॥

मुचिरः, त्रि, ( मुञ्चति धनादिकं ददातीति । मुच् + "इषिमदिमुदिखिदिच्छिदिभिदिमन्दिचन्दितिमिमिहिमुहिमुचीति ।" उणा० १ । ५२ । इति किरच् ।) दाता । इति त्रिकाण्डशेषः ॥

मुचिरः, पुं, ( मुच् + किरच् ।) धर्म्मः । वायुः । देवता । इति संक्षिप्तसारोणादिवृत्तिः ॥

मुचुकुन्दः, पुं, ( मुच् + बाहुलकात् कुः । मुचुः कुन्द इवेति । राजदन्तादित्वात् पूर्व्वनिपातः ।) पुष्पवृक्षविशेषः । मेकचन्द इति हिन्दी भाषा । ( यथा, राजेन्द्रकर्णपूरे । १० ।
"आनन्दं मुचुकुन्दकन्दलि ! भज स्वस्यासि वासन्तिके ! ।")
तत्पर्य्यायः । छत्रवृक्षः २ चित्रकः ३ प्रतिविष्णुकः ४ । इति भावप्रकाशः ॥ बहुपुष्पः ५ सुदलः ६ हरिवल्लभः ७ सुपुष्पः ८ अर्घ्यार्हः ९ लक्षणकः १० रक्तप्रसवः ११ । अस्य गुणाः । कटुत्वम् । तिक्तत्वम् । कफवातनाशित्वम् । कण्ठकरत्वम् । त्वग्दोषशोफशमनत्वम् । जीर्णज्वरविनाशनत्वञ्च । इति राजनिर्घण्टः ॥ शिरःपीड़ापित्तास्रविषनाशित्वम् । इति भावप्रकाशः ॥ * ॥ मान्धातृराजपुत्त्रः । इति श्रीभागवतम् । ९ । ७ । ३८ ।
(यथा च देवीभागवते । ७ । १० । ४ ।
"तस्यामुत्पादयामास मान्धाता द्वौ सुतौ नृप ! ।
पुरुकुत्सं सुविख्यातं मुचुकुन्दं तथापरम् ॥")

मुचुटी, स्त्री, अङ्गुलिमोटनम् । आङ्गुलमट्कान इति भाषा । यथा,—
"मुचुटी मुकुटी चैव भवेदङ्गुलिमोटने ।"
इति शब्दरत्नावली ॥

मुष्टिः । मुठा इति भाषा । यथा,—
"सम्पिण्डिताङ्गुलिःपाणिर्मुष्टिर्मुस्तु मुचुट्यपि ।"
इति हेमचन्द्रः । ३ । २६१ ॥

मुज इ क
मुज क } ध्वन्यां । इति कविकल्पद्रुमः ॥ ( चुरा०-पर०-मार्ज्जने सक०-ध्वनौ अक०-सेट् ।) द्वौ पञ्चमस्वरिणौ । इ क मुञ्जयति । क मोजयति । इति दुर्गादासः ॥

मुञ्जकः, पुं, ( मुञ्चिङ् + ण्वुल् ।) मुष्ककवृक्षः । इति राजनिर्घण्टः ॥

मुञ्जः, पुं, (मुञ्जति ध्वन्यते अनेन । मुञ्ज + करणे अच् ।) तृणविशेषः । मुँज इति भाषा ॥ ( यथा, पञ्चदश्याम् । १ । ४२ ।
"यथा मुञ्जादीषिकैवमात्मा युक्त्या समुद्धृतः ।
शरीरत्रितयाद्धीरैः परं ब्रह्मैव जायते ॥")
तत्पर्य्यायः । मौञ्जीतृणाख्यः २ ब्राह्मण्यः ३ तेजनाह्वयः ४ वाणीरकः ५ मुञ्जनकः ६ शरी ७ दर्भाह्वयः ८ दूरमूलः ९ दृढ़तृणः १० दृढ़मूलः ११ बहुप्रजः १२ रञ्जनः १३ शत्रुभङ्गः १४ । अस्य गुणाः । मधुरत्वम् । शीतलत्वम् । कफपित्तजदोषनाशित्वम् । ग्रहरक्षासु दीक्षासु च पावनत्वम् । भूतनाशित्वञ्च । इति राजनिर्घण्टः ॥ अपि च ।
"मुञ्जो मुञ्जातको बाणः स्थूलदर्भः सुमेधसः ।
मुञ्जद्वयन्तु मधुरं तुवरं शिशिरं तथा ॥
दाहतृष्णाविसर्पास्रमूत्रवस्त्यक्षिरोगजित् ।
दोषत्रयहरं वृष्यं मेखलासूपयुज्यते ॥"
इति भावप्रकाशः ॥

शरः । इति रत्नमाला । उपनयनकाले मुञ्जमेखलाधारणविधिर्यथा । अथैनं माणवकमाचार्य्यस्त्रिःप्रदक्षिणं त्रिवृतं मुञ्जमेखलां परिधापयन् मन्त्रद्वयं वाचयति । इति भवदेवभट्टः ॥

मुञ्जकेशी, [ न् ] पुं, ( मुञ्जा इव केशाः सन्त्यस्य । इनिः ।) विष्णुः । इति हेमचन्द्रः । २ । १३१ ॥

मुञ्जरं, क्ली, ( मुञ्जति प्रक्षाल्यते इति । मुञ्ज + बाहुलकात् अरन् ।) शालूकम् । इति शब्दमाला ॥

मुञ्जातकः, पुं, ( मुञ्जं अतति तत्सादृश्यं प्राप्नोतीति । अत + अच् । ततः स्वार्थे कन् ।) पुष्पशाकभेदः । अस्य गुणाः । परं स्वादुत्वम्, वृष्यत्वम् । पित्तानिलापहत्वञ्च । इति राजवल्लभः ॥ (यथा, सुश्रुते सूत्रस्थाने ३९ अध्याये ।
"हस्तिकर्णमुञ्जातकलाम्पकप्रभृतीनि ।")

मुट इ मर्द्दे । इति कविकल्पद्रुमः ॥ ( भ्वा०-पर०-सक०-सेट् ।) पञ्चमस्वरी । इ मुण्टते । मर्द्दो मर्द्दनम् । इति दुर्गादासः ॥

मुट कि चुर्दि । इति कविकल्पद्रुमः ॥ ( चुरा० पक्षे भ्वा०-सक०-सेट् ।) चुर्दि चूर्णीकरणे । कि मोटयति तण्डुलं शिला । यस्तु दुर्गेष मोटतीति हलायुधः ॥

मुट शि व्याक्षेपे च । इति कविकल्पद्रुमः ॥ ( तुदा०-पर०-सक०-सेट् ।) पवर्गशेषादिः । शि मुटति अमुटीत् मुमोट । चकारात् चुर्दि च । मुटति द्विषां दर्पं य इति हलायुधः । इति दुर्गादासः ॥

मुट इ ङ प्रमर्दने। इति कविकल्पद्रुमः। (भ्वा० आत्म० अक० मतान्तरे सक० सेट्।) पवर्गशेषादिः। पञ्चमस्वरी। इ मुण्ट्यते। ङ मुण्टते चारः। इति दुर्गादासः॥

मुण्ड इ छिदि। मर्दे। इति कविकल्पद्रुमः। (भ्वा० पर० सक० सेट्।) पञ्चमस्वरी। इ मुण्ड्यात। छेद इह लोमच्छेदनम् एव। मुण्डति मुण्डं नापितः। लोमरहितं करोतीत्यर्थः। इति दुर्गादासः॥

मुड ङ मर्ज्जे। इति कविकल्पद्रुमः। (भ्वा० आत्म० अक० सेट्।) पवर्गशेषादिः पञ्चमस्वरी। मज्जमिति मस्जधातोः क्ते रूपं मज्जनमित्यर्थः। इ मुण्ड्यते ङ मुण्डते प्रस्तरो जले। चतुर्भुजस्तु मार्ज्जने इति पठित्वा मार्ज्जनं शुद्धिरिति व्याख्याय मुण्डते जलेन ग्रामः लोक इत्युदाहृतवान् इति दुर्गादासः॥

मुण श प्रतिज्ञाने इति कविकल्पद्रुमः। (तुदा० पर० सक० सेट्।) श मुणति ब्रतं लोकः। प्रतिजानातीत्यर्थः। मोणिता। इति दुर्गादासः॥

मुण्डं क्ली (मुण्ड्यते उच्यन्ते कचा अस्मात् यद्वा मुण्डते मज्जतीति मुण्ड+अच्।) शिरः। इति नपुंसकलिङ्गसंग्रहे अमरः।३।५।३४। (यथा मोहमुद्गरे।१५।

अङ्गं गलितं पलितं मुण्डं
दन्तविहीनं यातं तुण्डम्।
करधृतकम्पितशोभितदण्डं
तदपि न मुञ्चत्याशाभाण्डम्॥

उपनिषद्विशेषः। तदुक्तं यथा —
"ईशाकेनकठप्रश्नमुण्डमाण्डुक्यतित्तिरिः।
छान्दोग्यं बृहदारण्यमैतरेयं तथा दश॥")
बोलम्। मुण्डायसम्। इति राजनिर्घण्टः॥

मुण्ड पुं (मुण्डनं मुण्डः कचापनयनं मुडि खण्डने भावे घञ्। तत अर्श आद्यच् इत्यमरटीकायां रायमुकुटः।) बलिराजस्य सैनिकदैत्यविशेषः। (यथा हरिवंशे भविष्यपर्व्वणि।२३२।५।

एकाक्ष एकपान्मुण्डो विद्युत्पादश्चतुर्भुजः।
शुम्भनिशुम्भपतिर्दैत्यभेदः। यथा मार्कण्डेयपुराणे।
८७।२८।

'हे चण्ड! हे मुण्ड! बलैर्बहुलैः परिवारितौ।')
मुण्डमेवाश्रयत्वेनास्त्यस्य। अच्।) राहुग्रहः। इति मेदिनी। ड, २१। (मुण्ड मुण्डनमस्ति कालेनास्त्यस्य। अच्।) नापितः। इति जटाधरः। (मुण्डनं स्कन्धाच्छेदे खण्डनमस्त्यस्य। अच्।) स्थाणुवृक्षः। इति वाचस्पतिः।

मुण्ड, पुं क्ली (मुण्ड+अच्।) गन्धद्रव्यविशेषः। इति मेदिनी। डे, २२।

मुण्ड, त्रि मुण्डितः। इत्यमरः।२।६।४८। इ मुण्डितमुण्डे। मुडि खण्डने भावे घञि मुण्डो मुण्डनं केशापनयनं तदस्यास्ति अर्श आद्यच् मुण्डः पुमान् स्त्री मुण्डा। इत्यमरटीकायां भरतः। (यथा महाभारते।१।२१६।८।

चरन् भैक्षं मुनिर्मुण्डश्चरिष्यामि महीमिमाम्॥)

मुण्डक क्ली (मुण्डमेव मुण्ड+स्वार्थे कन्।) मस्तकम्। (उपनिषद्विशेषश्च॥)

मुण्डक पुं (मुण्डयतीति। मुडि+ण्वुल्।) नापितः। इति हेमचन्द्रः।३।५७०॥

मुण्डचणक पुं (मुण्डित इव चणकः।) कलायः। इति राजनिर्घण्टः॥

मुण्डन क्ली (मुण्ड+ल्युट्।) कचच्छेदनम्। तत्पर्य्यायः। भद्राकरणम् २ वपनम् ३ परिवापनम् ४ क्षौरम् ५। इति हेमचन्द्रः।३।५८७॥ (यथा महाभारते।१२।२३।४६।

आतुरस्य हितं वाक्यं शृणु धर्म्मज्ञसत्तम।
दण्ड एव हि राजेन्द्र क्षत्त्रधर्म्मो न मुण्डनम्॥)

मुण्डफल पुं (मुण्डवत् फलमस्य।) नारिकेलवृक्षः। यथा —

तथा मुण्डफलश्चापि विश्वामित्रप्रियोऽपि च।
इति शब्दरत्नावली॥

मुण्डशालि पुं (मुण्डो मुण्डित इव शालिः।) शालिभेदः। तत्पर्य्यायः। मुण्डकः २ निःशूकः ३ अशूककः ४। अस्य गुणाः। त्रिदोषनाशित्वम्। मधुराम्लत्वम्। बलप्रदत्वम्। रुचिकारित्वम्। दीपनत्वम्। पथ्यत्वम् सुखलाघवदायकत्वञ्च। इति राजनिर्घण्टः॥

मुण्डा स्त्री (मुण्ड+स्त्रियां टाप्।) मुण्डीरिका। इति मेदिनी। डे २२॥ मुण्डिता स्त्री। इत्यमरटीकायां भरतः॥

मुण्डाख्या स्त्री (मुण्डमाख्या यस्याः।) महाश्रावणिका। इति राजनिर्घण्टः॥

मुण्डायस क्ली (मुण्डश्च तत् अयश्चेति। मुण्ड+अयस्+अनोऽश्मायः सरसां जातिसंज्ञयोः। ५।४।९४। इति टच्।) लोहम्। इति राजनिर्घण्टः॥

मुण्डित क्ली (मुण्ड्यते खण्ड्यते इति। मुडि खण्डने+कर्म्मणि क्त।) लोहम्। इति राजनिर्घण्टः॥ वापितमुण्डे त्रि। इत्यमरः।३।१।८५।

मुण्डितिका स्त्री (मुण्डित+स्वार्थे कन्+स्त्रियां टाप् अत इत्वञ्च।) क्षुपविशेषः। मुण्डीरी इति भाषा। तत्पर्य्यायः। अलम्बुषा २ श्रावणी ३ पललम्बुषा ४ कदम्बपुष्पा ५ अरुणा ६ भूतघ्नी ७ कुम्भला ८ प्रव्रजिता ९। इति रत्नमाला।

मुण्डी [न्] पुं (मुण्डयति कचान् वपति इति। मुण्ड+णिनि।) नापितः। इत्यमरः।२।१०।१०॥ (योगाचार्य्यविशेषः। यथा शिवपुराणे वायुसंहितायाम्।२।१०।५—६।

महाकालश्च शूली च दण्डी मुण्डी सहिष्णुकः।

इत्यादावारभ्य।
अष्टाविंशतिसंख्याता योगाचार्य्या युगक्रमात्।
सन्त्यागतेऽष्टभेदेन। यथा महाभारते।१३।१४।१०७।
"दिनेऽष्टमे तु विप्रेण दीक्षितोऽहं यथाविधि।
दण्डी मुण्डी कुशी चीरी घृताक्तो मेखली तथा॥")

मुण्डीरिका स्त्री (मुडि+बाहुलकात् ईरच्। स्त्रियां ङीष् स्वार्थे कन्। स्त्रियां टाप् ङ्यापोः।७।४।१३। इति पूर्व्वस्य ह्रस्वः।) मुण्डितिका। इति जटाधरः॥

मुत् स्त्री (मोदतेऽनया इति। मुद्+क्विप्।) शृङ्गिनामौषधम्। इति राजनिर्घण्टः॥

मुद [द्] स्त्री (मोदनमिति। मुद्+भावे क्विप्।) हर्षः। इत्यमरः।१।४।२४। (यथा रघुवंशे।३।२५।

उवाच धात्र्या प्रथमोदितं वचो
ययौ तदीयामवलम्ब्य चाङ्गुलिम्।
अभूच्च नम्रः प्रणिपातशिक्षया
पितुर्मुदं तेन ततान सोऽर्भकः॥)

मुद क संसर्गे इति कविकल्पद्रुमः॥ (चुरा० पर० सक० सेट्।) क मोदयति घृतेनान्नं लोकः। इति दुर्गादासः॥

मुद षि ङ हर्षे। इति कविकल्पद्रुमः। (भ्वा० आत्म० अक० सेट्।) षि मुदितोऽस्ति। ङ मोदते धनी। इति दुर्गादासः॥

मुदा स्त्री (मुद्+घञर्थे क ततष्टाप्।) हर्षः। यथा। मुखमामन्द्रमुर्मुदा। इति शब्दरत्नावली॥ (यथा मार्कण्डेये।११६।३०।

तं मन्त्रं क्रियमाणं तु मन्त्रिभिस्तैश्च भूभृता।
ततपार्श्ववर्त्तिनी कन्या शुश्रावाथ मुदा वशी॥)

मुदित त्रि (मुद्+क्त। यद्वा मुत् अस्य जाता। मुत्+इतच्।) आनन्दितः। यथा —
आर्त्तार्त्ते मुदिता हृष्टे प्रोषिते मलिना कृशा।
मृते म्रियेत या पत्यौ साध्वी ज्ञेया पतिव्रता॥"
इति शुद्धितत्त्वम्॥

आलिङ्गनविशेषः। तस्य लक्षणं यथा। नायिका नायकस्य वामपार्श्वे उपविश्य वामपादं तस्योरुद्वयमध्ये स्थापयित्वा उभौ मिलित्वा यद्वसनम्। इति कामशास्त्रम्॥

मुदिता स्त्री (मोदते इति मुद्+सर्व्वधातुभ्य इन् संज्ञापूर्व्वकविधेरनित्यत्वात् गुणाभावः। मुदि तस्य भावः इति तल्+टाप्।) मुदा। हर्षः। इत्यमरटीकायां मथुरेशः। (यथा, पातञ्जलसूत्रम्।१।३३।
मैत्रीकरुणामुदितोपेक्षाणां सुखदुःखपुण्यापुण्यविषयाणां भावनातश्चित्तप्रसादनम्॥)

मुदिर पुं (मोदन्ते अनेन प्रजा इति। मुद्+"इषिमदिमुदिखिदि" उणा० १।५२। इति किरच्।) मेघः। इत्यमरः।१।३।७। (यथा,— गीतगोविन्दे।२।३।
"मधुरमुरन्दरमधुरजनितमेदुरमुदिरसुवेशम्।")
कामुकः। इति मेदिनी। रे २०५। भेकः। इति शब्दमालादिदर्शनम्॥

मृणाली, स्त्री, ( मृणाल+गौरादित्वात् ङीष् । ) मृणालम् । इति राजनिर्घण्टः ॥ (यथा, उत्तरचरिते । १ ।
"परिम्लदितमृणालीदुर्ब्बलान्यङ्गकानि
त्वमुरसि मम कृत्वा यत्र निद्रामवाप्ता ॥",
( अल्पं मृणालं इति । मृणाल+अल्पार्थे ङीष् । ) स्वल्पमृणालजातिः । यथा,—
"चान्द्रं चन्दनमङ्के वलयिता: माधौ मृणाली-लता: ।
इति राजशेखरः । इत्यमरटीकायां भरतः ॥
मृणाली, [न्] पुं, ( मृणालमस्यास्तीति । मृणाल+इनिः । ) पद्मः । इति केचित् ॥
मृत्,[द्] स्त्री, (मृद्नाति प्रलये चूर्णतया स्वकारणे लीयत इति । मृद्+कर्त्तरि क्विप् ।) मृत्तिका । इत्यमरः । २ । १ । ४ । ( यथा, मनुसंहितायाम् । ४ । ३९ ।
"मृदं गां दैवतं विप्रं घृतं मधु चतुष्पथम् ।
प्रदक्षिणानि कुर्व्वीत प्रज्ञातांश्च वनस्पतीन् ॥"
( यथास्या गुणाः ।
"कषाया मारुतं पित्तमूषरा मधुरा कफम् ॥
कोपयेन्मृद्रसादींश्च रौक्ष्याद्भुक्तञ्च रूक्षयेत् ।
पूरयत्यविपक्वैव स्रोतांसि निरुणद्ध्यपि ।
इन्द्रियाणां बलं हत्वा तेजोवीर्य्यौजसी तथा ।
पाण्डुरोगं करोत्याशु बलवर्णाग्निनाशनम् ॥"
इति माधवकरकृतरुग्विनिश्चये पाण्डुरोगाधिकारे । ) तुवरी । इति राजनिर्घण्टः ॥ * ॥
मृत्तिकाशौचं यथा,—
"दिवासन्ध्यासु कर्णस्थब्रह्मसूत्र उदङ्मुखः ।
कुर्य्यात् मूत्रपुरीषे तु रात्रौ वै दक्षिणामुखः ॥
गृहीतशिश्नश्चोत्थाय मृद्भिरभ्युद्धृतैर्जलैः ।
गन्धलेपक्षयकरं शौचं कुर्य्यादतन्द्रितः ॥"
इति गारुडे ६४ अध्यायः ॥
मृतं, क्ली, ( मृ+क्तः । ) याचितम् । इत्यमरः । २ । ९ । ३ ॥ याचनस्य मरणमिव दुःखजनकत्वात् मृतं भावे कर्म्मणि वा क्तः । इति भरतः ॥ मृत्युः । इति हेमचन्द्रः ॥
मृतं, त्रि, याचितवस्तु । गतप्राणः । मरा इति भाषा । तत्पर्य्यायः । परासुः २ प्राप्तपञ्चत्वः ३ परेतः ४ प्रेतः ५ संस्थितः ६ प्रमीतः ७ । इत्यमरः । २।८।११६ ॥ कलौ मृतस्य धन्यत्वं यथा,
"धर्म्मः प्रव्रजितस्तपः प्रचलितं सत्यञ्च दूरे गतं
पृथ्वी मन्दफला जनाः कपटिनो लौल्ये स्थिता ब्राह्मणाः ।
मर्त्त्याः स्त्रीवशगाः स्त्रियश्च चपला नीचा जना उन्नता
हा कष्टं खलु जीवितं कलियुगे धन्या नरा ये मृताः ॥"
इति गारुडे ११५ अध्यायः ॥
( कार्य्यवशाज्जीवितावस्थायामपि मृतत्वं तद्यथा,—
"चतुर्थे तु मदे मूढो भग्नदार्व्विव निष्क्रियः ।
कार्य्याकार्य्यविभागाज्ञो मृतादप्यपरो मृतः ॥"
इति माधवकरकृतरुग्विनिश्चये पानात्ययाद्यधिकारे । यथा च ।
"उत्तिष्ठोत्तिष्ठ गच्छ त्वं वद मौनं समाचर ।
ये पराधीनतां यान्ति तेऽपि जीवन्ति के मृताः ॥"
इत्युद्भटः ॥ )
मृतकं, क्ली, ( मृत+स्वार्थे कन् । ) शवः । इति हेमचन्द्रः । ३ । २२८ ॥ मरणाशौचम् । यथा,
"यदि स्यात् सूतके सूतिर्मृतके च मृतिस्तथा ।
शेषेणैव भवेच्छुद्धिरहःशेषे द्विरात्रकम् ॥"
इति शुद्धितत्त्वम् ॥
मृतकल्पः, त्रि, ( मृत+"ईषदसमाप्तौ कल्पप्-देश्यदेशीयरः ।"५ । ३ । ६७ । इति कल्पप् ॥) मृतप्रायः । ईषदूनो मृतः । इति मृतशब्दादीषदूनार्थे कल्पप्रत्ययेन निष्पन्नम् ॥
मृतकान्तकः, पुं, ( मृतकस्य अन्तकः नाशको भक्षकत्वात् ।) शृगालः । इति हारावली ॥
मृतजीवः, पुं, ( मृतश्चासौ जीवश्चेति नीललोहितादिवत् विशेषणसमासः ।) तिलकवृक्षः । इति राजनिर्घण्टः ॥ (विवरणमस्य तिलकशब्दे ज्ञातव्यम् ॥ )
मृतण्डः, पुं, ( मृतः अण्डः कारणत्वेन यस्य शकन्ध्वादित्वात् पररूपम् । ) सूर्य्यपिता । इति मार्त्तण्डशब्दटीकायां भरतः ॥
मृतमत्तः, पुं, (मृतेन शवेन मत्तः । भक्ष्यलाभात् ।) शृगालः । इति त्रिकाण्डशेषः ॥
मृतमत्तकः, पुं, (मृतमत्त+स्वार्थे कन् ।) शृगालः । इति शब्दरत्नावली ॥
मृतवत्सा, स्त्री, ( मृता वत्सा यस्याः । ) मृतापत्या । अजीवत्सन्ताना । गर्भावधिवर्षत्रयं यावत् पुनःपुनर्मृतसन्ताना । अस्या दोषशान्तिर्यथा,—
"सप्तमीस्नपनं वक्ष्ये सर्व्वलोकहिताय वै ।
जातस्य मृतवत्सायाः सप्तमे मासि नारद ! ।
अथवा शुक्लसप्तम्यामेतत् सर्व्वञ्च शस्यते ॥
ग्रहताराबलं लब्ध्वा कृत्वा वा विप्रवाचनम् ।
बालस्य जन्मनक्षत्रतिथिदेवान् यजेद्बुधः ॥
तद्वद्रुद्रहुताशाभ्यां सार्द्धं स्कन्दितदेश्च ।
गोमयेनानुलिप्तायां भूमावेकाग्निवत्तदा ॥
तण्डुले रक्तशालीयैश्चरुं गोक्षीरसंयुतम् ।
निर्व्वपेत् सूर्य्यरुद्राभ्यां तन्मन्त्राभ्यां विधानतः ॥
कीर्त्तयेत् सूर्य्यदेवत्यं समर्च्चेष्च घृताहुतीः ।
जुहुयाद्रुद्रसूक्तेन तद्वद्रुद्राय नारद ! ॥
होतव्याः समिधस्तद्वत्तथैवार्कपलाशयोः ।
यवकृष्णतिलैर्होमः कर्त्तव्योऽष्टशतं पुनः ॥
आहुतिभिरथाज्येन तथैवाष्टशतं द्विज ! ।
हुत्वा स्नानञ्च कर्त्तव्यमङ्गाङ्गेन च धीमता ॥
विप्रेण वेदविदुषा विधिवद्दर्भपाणिना ।
स्नापयित्वा तु चतुरः कुम्भान् कोणेषु शोभनान् ॥
पञ्चमञ्च पुनर्मध्ये दध्यक्षतविभूषितम् ।
स्थापयेदव्रणं कुम्भं सप्तर्द्धिभिरभिमन्त्रितम् ।
सौरेण तीर्थतोयेन पञ्चरत्नसमन्वितम् ॥
सर्व्वान् सर्व्वौषधैर्युक्तान् पञ्चगव्यसमन्वितान् ।
पञ्चरत्नफलैर्युक्तान् वासोभिरभिवेष्टयेत् ॥
गजाश्वरथ्यावल्मीकसङ्गमात् ह्रदगोकुलात् ।
राजद्वारप्रदेशाच्च मृदमानीय निःक्षिपेत् ॥
चतुर्ष्वपि च कुम्भेषु रत्नगर्भेषु मध्यमम् ।
गृहीत्वा ब्राह्मणस्तन्तु सौरान्मन्त्रानुदीरयेत् ॥
सप्तभिरपि नारीभिरव्यङ्गाभिरघाध्यलम् ।
पूजिताभिर्यथाशक्त्या माल्यवस्त्रविभूषणैः ।
सविप्राभिश्च कर्त्तव्यं मृतवत्साभिषेचनम् ।
दीर्घायुरस्तु बालोऽयं जीवपुत्त्रा च भामिनी ॥
आदित्यश्चन्द्रमाः सार्द्धं ग्रहनक्षत्रमण्डलैः ।
शक्रः सलोकपालो वै ब्रह्माविष्णुमहेश्वराः ।
एते चान्ये च देवौघाः सदा पान्तु कुमारकम् ॥
मित्रोऽथ शनिर्वा हुतभुग्या च बालग्रहाः क्वचित् ।
पीड़ां कुर्व्वन्तु बालस्य मा मातुर्जनकस्य वै ॥
ततः शुक्लाम्बरधरा कुमारी पतिसंयुता ।
सप्तकं पूजयेद्भक्त्या स्त्रीणामथ गुरुं पुनः ॥
काञ्चनीञ्च ततः कृत्वा तिलपात्रोपरिस्थिताम् ।
प्रतिमां कुम्भराजस्य गुरवे विनिवेदयेत् ॥
वस्त्रकाञ्चनरत्नौघैर्भक्ष्यैः सघृतपायसैः ।
पूजयेद्ब्राह्मणं तद्वद्वित्तशाठ्यविवर्ज्जितः ॥
भुक्ता च गुरुणा चैयमुच्चार्य्या मन्त्रसन्ततिः ।
दीर्घायुरस्तु बालोऽयं यावद्वर्षशतं समम् ।
यत्किञ्चिदस्य दुरितं निःक्षिप्तं वड़वानले ॥
ब्रह्मा रुद्रो वसु स्कन्दो विष्णुर्देवो हुताशनः ।
रक्षन्तु सर्व्वदुष्टेभ्यो वरदाः सन्तु सर्व्वदा ॥
एवमादीनि वाक्यानि वदन्तं पूजयेद्गुरुम् ।
शक्तितः कपिलां दद्यात् प्रणिपत्य विसर्ज्जयेत् ॥
गुरुश्च पुत्त्रसहिता प्रणम्य रविशङ्करौ ।
हुतशेषं तदाश्नीयादादित्याय नमोऽस्तु ते ॥
इदमेवाद्भुतोद्वेगदुःस्वप्नेषु प्रशस्यते ।
कर्णजन्मदिनर्क्षाणां देवान् संपूजयेत् सदा ॥
शान्त्यर्थं शुक्लसप्तम्यामेतत् कुर्व्वन् सीदति ॥
स चानेन विधानेन दीर्घायुरभवत्ततः ।
सप्ततुराणामयुतं शशास पृथिवीमिमाम् ॥"
इति मात्स्ये ६४ अध्यायः ॥
तद्दोषशान्त्यौषधानि यथा,—
"गर्भः संजातमात्राद्वा पश्चात् मासाच्च वत्सरात् ।
म्रियते हिमिवर्षाद्वा यस्याः सा मृतवत्सिका ॥
तत्र योगं प्रकर्त्तव्यं यथा शङ्करभाषितम् ॥
मार्गशीर्षे तथा ज्यैष्ठे पूर्णिमावेष्टिते गृहे ।
नूतनं कलसं पूर्णं पूजयेन्मातृकाः सुधीः ॥
शाखाफलसमायुक्तं नवरत्नसमन्वितम् ।
सुवर्णरुचिकायुक्तं षट्कोणमण्डले स्थितम् ।
तन्मध्ये पूजयेद्देवीं एकान्तीनामविश्रुताम् ॥
गन्धपुष्पाक्षतैर्धूपैर्दीपनैवेद्यसंयुतैः ।
पूजयेद्भक्तिभावेन मद्यमांसैः समत्स्यकैः ॥
ब्राह्मी माहेश्वरी चैव कौमारी वैष्णवी तथा ।
वाराही च तथा चैन्द्री षट्पत्रेषु च मातरः ॥
पूजयेन्मन्त्रपूतेन फेंकारे नाम विश्रुते ।

यो वैपरीत्यं श्रवणेन शब्दं
गृह्णाति वा नो शृणुते स शीघ्रं ।
स वै मृतिं पश्यति यो न पश्येत्
छायां स्वकीयां धरणीप्रपन्नाम् ॥”
इति हारीते द्वितीयेस्थाने तृतीयेऽध्याये ॥)

मृत्करः, पुं, (करोतीति कृ+अच् । मृदां करः । घटादिनिर्म्माणत्वादस्य तथात्वम् ।) कुम्भकारः । इति त्रिकाण्डशेषः ॥

मृत्कांस्यं, क्ली, शरावः । इति त्रिकाण्डशेषः ॥

मृत्किरा, स्त्री, (मृदं किरतीति । कॄ+“इगुपधज्ञाप्रीकिरः कः ।” ३।१।१३५ । इति कः । “ऋत इद्धातोः ।” ७ । १ । १०० ॥ इति इत् ।) घुर्घुरी । इति त्रिकाण्डशेषः । दुर्घुरिया इति भाषा ॥

मृत्खलिनी, स्त्री, चर्म्मकपात्रचः । इति शब्दचन्द्रिका ॥

मृत्तालं, क्ली, (मृदं तालयति प्रतिष्ठापयतीति । तल्+णिच्+“कर्म्मण्यण् ।” ३ । २ । १ । इति अण् ।) आढ़की । इति शब्दरत्नावली ॥

मृत्तालकं, क्ली, (मृत्ताल+संज्ञायां कन् ।) तुवरिका । तुवरिकलाय इति अड़र इति च ख्यातम् । इत्यमरटीकायां भरतः । सौराष्ट्रमृत्तिका । इति राजनिर्घण्टः ॥

मृत्तिका, स्त्री, (मृदेव इति । मृद्+“मृदस्तिकन् ।” ५।४।३९ । इति स्वार्थे तिकन् । स्त्रियां टाप् ।) तुवरी । इति राजनिर्घण्टः ॥ मृत् । इत्यमरः । २ । १ । ४ ॥ माटी । इति भाषा । तत्पर्य्यायः । मृदा २ मृत्तिः ३ । इति भरतः ॥ (अस्या भक्षणात् पाण्डुरोगोत्पत्तिः । तद्यथा,
“मृत्तिकादनशीलस्य कुप्यत्यन्यतमो मलः ॥
कषाया मारुतं पित्तं ऊषरा मधुरा कफम् ॥”
इति माधवकरसंगृहीतरुग्विनिश्चये पाण्डुरोगाधिकारे । अन्यत् मृत्शब्दे द्रष्टव्यम् ।)
स्नानकाले मृत्तिकालेपनविधिर्यथा,—
“मृदा प्रक्षाल्य लिङ्गन्तु द्वाभ्यां नाभेस्तथोपरि ।
अधश्च तिसृभिः कार्यं षड्भिः पादौ तदेव च ॥
कटिश्च तिसृभिश्चापि हस्तयोर्द्दिश मृत्तिकाः ।
प्रक्षाल्य कायं हस्तौ च द्विराचम्य यथाविधि ।
ततः संमार्ज्जनं कृत्वा मृदमेवाभिमन्त्रयेत् ॥
अश्वक्रान्ते रथक्रान्ते विष्णुक्रान्ते वसुन्धरे ! ।
उद्धृतासि वराहेण कृष्णेनामितबाहुना ॥
मृत्तिके हर मे पापं यन्मया पूर्व्वसञ्चितम् ।
मृत्तिके ब्रह्मदत्तासि प्रजया च धनेन च ॥
मृत्तिके त्वाञ्च गृह्णामि काश्यपेनाभिमन्त्रिताम् ।
मृत्तिके जहि मे पापं यन्मया दुष्कृतं कृतम् ।
त्वया हतेन पापेन ब्रह्मलोकं व्रजाम्यहम् ॥”
इति वह्निपुराणम् ॥*॥
शौचार्थमृत्तिकाग्रहणविधिर्यथा,—
“आहृत्य मृत्तिकां कूलात् लेपगन्धापकर्षणम् ।
कुर्य्यादतन्द्रितः शौचं विशुद्धैरुद्धृतोदकैः ॥
नाहरेत् मृत्तिकां विप्रः पांशुलान्न च कर्द्दमात् ।
न मार्गान्नोषराद्देशाच्छौचशिष्टां परस्य च ॥
न देवायतनात् कूपात् गेहान्न च जलात्तथा ।
उपस्पृशेत्ततो नित्यं पूर्व्वोक्तेन विधानतः ॥”
इति कौर्म्मे उपविभागे १२ अध्यायः ॥
तस्याः परीक्षा मन्दिरशब्दे द्रष्टव्या ॥

मृत्फली, स्त्री, (मृदि फलमस्याः । ङीप् ।) कुष्ठौषधम् । इति हारावली ॥

मृत्युः, पुं, (म्रियते यस्मादिति मृ+“भुजिमृङ्भ्यां युक् त्युकौ ।” उणा० । ३ । २१ । इति त्युक् ।) यमः । इति हेमचन्द्रः ॥ कंसः । यथा,—
“प्रत्यर्प्य मृत्यवे पुत्त्रान् मोचये कृपणामिमाम् ।
सुता मे यदि जायेरन् मृत्युर्वा न म्रियेत चेत् ॥”
इति श्रीभागवते १० स्कन्धे १ । ३९ ॥

मृत्युः, पुं, स्त्री, प्राणवियोगः । तत्पर्य्यायः । पञ्चता २ कालधर्म्मः ३ दिष्टान्तः ४ प्रलयः ५ अत्ययः ६ अन्तः ७ नाशः ८ मरणम् ९ निधनः १० । इत्यमरः ॥ पञ्चत्वम् ११ मृतम् १२ मृतिः १३ । इति तट्टीकायां रमानाथः ॥ नैधनम् १४ । इति तट्टीकासारसुन्दरी ॥ संस्था १५ कालः १६ परलोकगमः १७ दीर्घनिद्रा १८ निमीलनम् १९ अस्तम् २० अवसानम् २१ । इति हेमचन्द्रः ॥ भूमिलाभः २२ निपातः २३ विलयः २४ आत्ययिकम् २५ । इति शब्दरत्नावली ॥ अप्ययः २६ । (मरणार्थे यथा,—
“क्षीणस्य यस्य क्षुत्तृष्णे हृद्यैर्मिष्टैर्हितैस्तथा ।
न शाम्यतोऽन्नपानैश्च तस्य मृत्युरुपस्थितः ॥
प्रवाहिका शिरःशूलं कोष्ठशूलञ्च दारुणम् ।
पिपासा बलहानिश्च तस्य मृत्युरुपस्थितः ॥”
इति सुश्रुते सूत्रस्थाने ३१ अः ॥
“एकोत्तरं मृत्युशतमथर्व्वाणः प्रचक्षते ।
तत्रैकः कालसंज्ञस्तु शेषास्त्वागन्तवः स्मृताः ॥
दोषागन्तुजमृत्युभ्यो रसमन्त्रविशारदौ ।
रक्षेतां नृपतिं नित्यं यत्नाद्वैद्यपुरोहितौ ॥”
इति च तत्र तत्स्थाने । ३४ अः ॥)
तत्प्रमाणं यथा,—
“अहमात्मोद्भवामीषां भूतानां सुहृदीश्वरः ।
अहं सर्व्वाणि भूतानि तेषां स्थित्युद्भवाप्ययः ॥”
इति श्रीमद्भागवते ११ स्कन्धे । १६ । १० ॥
स तु ब्रह्मणो गुदतो जातः । यथा,—
“पायुर्यमस्य मित्रस्य परिमोक्षस्य नारद ! ।
हिंसाया निरृतेर्मृत्योर्निरयस्य गुदं स्मृतम् ॥”
इति श्रीभागवते २ स्कन्धे ५ अध्यायः ॥
कल्पान्तरे भयात् मायायां जातः । यथा,—
“हिंसा भार्य्या त्वधर्म्मस्य तयोर्जज्ञे तथानृतम् ।
कन्या च निकृतिस्ताभ्यां भयं नरकमेव च ॥
माया च वेदना चैव मिथुनं त्विदमेतयोः ।
भयाज्जज्ञेऽथ वै माया मृत्युं भूतापहारिणम् ।
वेदना च सुतञ्चापि दुःखं जज्ञेऽथ रौरवात् ॥*॥
अस्यापत्यादि यथा,—
“मृत्योर्व्याधिर्जराशोकतृष्णाक्रोधाश्च जज्ञिरे ।
दुःखोत्तराः स्मृता ह्येते सर्व्वे चाधर्म्मलक्षणाः ।
नैषां भार्य्यास्ति पुत्त्रो वा सर्व्वे ते ह्यूर्द्ध्वरेतसः ॥
निरृतिश्च तथा चान्या मृत्योर्भार्य्याभवन्मुने ! ।
अलक्ष्मीर्नाम तस्याश्च मृत्योः पुत्त्राश्चतुर्द्दश ॥
अलक्ष्मीसुतका ह्येते मृत्योरादेशकारिणः ।
विनाशकाले च नरान् भजन्त्येते शृणुष्व तान् ॥
इन्द्रियेषु दशस्वेते तथा मनसि च स्थिताः ।
स्वे स्वे नरं स्त्रियं वापि विषये योजयन्ति च ॥
तथेन्द्रियाणि चाक्रम्य रागलोभादिभिर्नरान् ।
योजयन्ति तथा हानिं यान्ति धर्म्मादिभिर्द्विज ! ॥
अहङ्कारगतास्त्वन्ये तथान्ये बुद्धिसंस्थिताः ।
विनाशाय नरस्त्रीणां यतन्ते मोहसंश्रयाः ।
एवं त्वधर्म्मगोत्पन्नाः सर्व्वे चापि भयङ्कराः ॥”
इति मार्कण्डेयपुराणे दुःसहानुशासनं नामाध्यायः ॥ विष्णुपुराणे प्रथमेऽंशे सप्तमोऽध्यायश्च ॥
मृत्युज्ञापकारिष्टानि यथा,—
दत्तात्रेय उवाच ।
“अरिष्टानि महाराज ! शृणु वक्ष्यामि तानि ते ।
येषामालोकनान्मृत्युं निजं जानाति योगवित् ॥
देवमार्गं ध्रुवं शुक्रं सोमच्छायामरुन्धतीम् ।
यो न पश्येन्न जीवेत् स नरः संवत्सरात् परम् ॥
अरश्मि बिम्बं सूर्य्यस्य वह्निञ्चैवांशुमालिनम् ।
दृष्ट्वैकादशमासेभ्यो नरो नोर्द्ध्वं स जीवति ॥
वान्तं मूत्रे पुरीषे वा सुवर्णं रजतं यथा ।
प्रत्यक्षमथवा स्वप्ने जीवितं दशमासिकम् ॥
दृष्ट्वा प्रेतपिशाचादीन् गन्धर्व्वनगराणि च ।
सुवर्णवर्णान् वृक्षांश्च नव मासान् स जीवति ॥
स्थूलः कृशः कृशः स्थूलो योऽकस्मादेव जायते ।
प्रकृतेश्च निवर्त्तेत तस्यायुश्चाष्टमासिकम् ॥
खण्डं यस्य पदं पार्ष्ण्योः पादस्याग्रेऽथवा भवेत् ।
पांशुकर्द्दमयोर्म्मध्ये सप्त मासान् स जीवति ॥
कपोतगृध्रकाकोला वायसो वापि मूर्द्धनि ।
क्रव्यादो वा खगो नीलः षण्मासायुःप्रदर्शकः ॥
हन्यते काकपङ्क्तीभिः पांशुवर्षेण वा पुनः ।
स्वच्छायाञ्चान्यथा दृष्ट्वा पञ्च मासान् स जीवति ॥
अनभ्रे विद्युतं दृष्ट्वा दक्षिणां दिशमाश्रिताम् ।
पयसीन्द्रधनुर्व्वापि जीवितं द्वित्रिमासिकम् ॥
घृते तैले तथादर्शे तोये वा चात्मनस्तनुम् ।
यः पश्येदशिरस्कां वा मासादूर्द्ध्वं न जीवति ॥
यस्य वस्तसमो गन्धो गात्रे शवसमोऽपि वा ।
तस्यार्द्धमासिकं ज्ञेयं योगिनो नृप ! जीवितम् ॥
यस्य वै स्नातमात्रस्य हृत्पादमवशुष्यति ।
पिबतश्च जलं शोषो दशाहं सोऽपि जीवति ॥
सम्भिन्नो मारुतो यस्य मर्म्मस्थानानि कृन्तति ।
न हृष्यत्यम्बुसंस्पर्शात्तस्य मृत्युरुपस्थितः ॥
ऋक्षवानरयुग्मस्थो गायन् यो दक्षिणां दिशम् ।
स्वप्ने प्रयाति तस्यापि न मृत्युः कालमिच्छति ॥
रक्तकृष्णाम्बरधरा गायन्ती हसती च यम् ।
दक्षिणाशां नयेन्नारी स्वप्ने सोऽपि न जीवति ॥
नग्नं क्षपणकं स्वप्ने हसमानं प्रहृष्ट वै ।
एणं वा वीक्ष्य वल्गन्तं विद्यान्मृत्युमुपस्थितम् ॥
आमस्तकतलाद्यस्तु निमग्नं पङ्कसागरे ।
स्वप्ने [illegible]शालागं नरः सद्यो म्रियेत सः ॥

रिंष्टाघत्वात् स्पर्शनं प्रणिधानञ्च अस्यार्थः। स्पर्शने। यथा, रघौ। ३। ६८।

"पराम्टशन् हर्षजडेन पाणिना
तदीयमङ्गं कुलिशव्रणाङ्कितम्।"

प्रणिधाने।

"रामप्रवासे व्यम्टशन्न दोषं
जनापवादं सनरेन्द्रम्टत्युम्।"

कैकयीति भट्टिः। ३। ७॥

विमर्शः परामर्शः। म्टशि इति न्टर्द्धन्यान्तपाठो ऽयः। तर्हि क्षमेवार्थः स्यात्। इति, दुर्गादासः॥

मृष, त् क } क्षान्तौ। इति कविकल्पद्रुमः॥
मृष, त् ञ } (अदन्त चुरा०-पर०-सक०-सेट्। अन्यत्र, अदन्त भ्वा०-उभ०-सक०-सेट्।) मूर्द्धन्योपधः। क, मृषयति। ञ, मृषति मृषते। इति दुर्गादासः॥

मृष, उ सेचने। इति कविकल्पद्रुमः॥ (भ्वा०-पर०-सक०-सेट्। क्त्वावेट्।) उ, मर्षित्वा मृष्ट्वा। इति दुर्गादासः॥

मृष, क क्षान्तौ। इति कविकल्पद्रुमः॥ (चुरा०-पर०-सक०-सेट्।) क, मर्षयति। अयमात्मनेपदीत्येके। इति दुर्गादासः॥

मृष, ञ ङ उ क्षान्तौ। इति कविकल्पद्रुमः॥ (भ्वा०-उभ०-आत्म०-च-सक०-सेट्। क्त्वावेट्।) ञ, मर्षति मर्षते। ङ, मर्षते। उ, मर्षित्वा मृष्ट्वा। अपि गुरुमपराधं मर्षति ब्राह्मणाना मिति हलायुधः। इति दुर्गादासः॥

मृष, य ञ क्षान्तौ। इति कविकल्पद्रुमः॥ (दिवा०-उभ०-सक०-सेट्।) य ञ, मृष्यति मृष्यते ममर्ष। इति दुर्गादासः॥

मृषा, व्य, (मृष्यत इति। मृष्+का।) मिथ्या। इत्यमरः। ३।४।१५॥ (यथा, नैषधचरिते। १।६८।

"मृषाऽर्द्धं सादित्रघे कुतूहला-
न्नलस्य नासीरगते वितेनतुः॥")

वृथा। इति तट्टीकासारसुन्दरी॥

मृषार्थकं, क्ली, (मृषा अर्थोऽस्य। बहुव्रीहौ कप्।) अत्यन्तासम्भवार्थवाक्यम्। तत्पर्य्यायः। आहतम् २। इत्यमरः। १। ६। २१। अत्यन्तासम्भवार्थे वचसि। आहन्यते स्म आहतं क्तः। मृषा मिथ्या अर्थोऽस्य मृषार्थकं इह मृषार्थं यत् सर्व्वथा न घटते। यथा,—

"एष वन्ध्यासुतो याति खपुष्पकृतशेखरः।
कूर्म्मक्षीरचयस्नातः शशशृङ्गधनुर्द्धरः इति॥
यावज्जीवमहं मौनी ब्रह्मचारी पिता ममेति।

अस्य चायं भेदः मौनित्वं ब्रह्मचारित्वं अन्यत्र सिद्धमेव वन्ध्यासुतत्वं खपुष्पत्वञ्चान्यत्रासिद्धमिति। इति भरतः॥

मृषाध्यायी, [न्] पुं, (मृषा ध्यायति चिन्तयतीति। ध्यै+णिनिः।) वकः। यथा,—

"कङ्को वको वकोटश्च तीर्थसेवी च तापसः।
मीनघाती मृषाध्यायी निश्चलाङ्गश्च दाम्भिकः॥"

इति राजनिर्घण्टः॥

मृषालकः, पुं, (मृषा मिथ्या अचिरस्थायित्वेन मुकुलोद्गमकाल एवेत्यर्थः। अलं अलङ्करणं कायति प्रकाशयतीति। कै+कः।) आम्रवृक्षः। इति शब्दचन्द्रिका॥

मृषावादः, पुं, (मृषा मिथ्या वादः कथनम्।) मिथ्यावाक्यम्। तत्पर्य्यायः। चटूरी २। इति जटाधरः॥ (यथा, महाभारते। ३। १८८। ३३।

"बहवो म्लेच्छराजानः पृथिव्यां मनुजाधिप!।
मृषानुशासिनः पापा मृषावादपरायणाः॥")

मृषावादी, [न्] त्रि, (मृषा वदतीति। वद्+णिनिः।) मिथ्यावादकः। तत्पर्य्यायः। मृषोद्यः। इति शब्दमाला॥ मिथ्याभियोक्ता, च॥

मृषोद्यं, क्ली, (मृषा+वद्+"राजसूयसूर्य्यमृषोद्यरुच्यकुप्यकृष्टपच्याव्यथ्याः।" ३। १। ११४। इति कर्म्मणि क्यप्। निपातितश्च।) मिथ्यावाक्यम्। इति मुग्धबोधव्याकरणम्॥ (यथा, भट्टिकाव्ये। ५। ६०।

"मृषोद्यं प्रवदन्तीं तां सत्यवद्यो रघूत्तमः॥")

मृषोद्यः, त्रि, मिथ्यावादी। इति शब्दमाला॥

मृष्टं, क्ली, (मृज+क्तः।) मरिचम्। इति राजनिर्घण्टः॥

मृष्टः, त्रि, (मृज+क्त।) शोधितम्। इत्यमरः। ३। ४। ५६॥ (यथा, वृहत्संहितायाम्। ८५। ८।

"अशुभकरमतोऽन्यथाप्रदिष्टं
स्थितपतितं च करोति मृष्टमन्नम्॥")

मृष्टेरुकः, पुं, वदान्यः। मिष्टाशी। अतिथिद्विट्। इति मेदिनी। के, २०६॥

मॄ, शि वधे। इति कविकल्पद्रुमः॥ (क्र्या०-पर०-सक०-सेट्।) शि, मृणाति। मूर्णः। मूर्त्तिः। इति दुर्गादासः॥

मे, ङ प्रतीदाने। इति कविकल्पद्रुमः॥ (भ्वा०-आत्म०-सक०-अनिट्।) प्रतीदानं परिवर्त्तः। ङ, मयते धान्येन मापं लोकः। इति दुर्गादासः॥

मे, त्रि, मह्यम्। आमाके इति भाषा। मम आमार इतिभाषा। एते अस्मच्छब्दस्य चतुर्थीषष्ठ्येकवचनाभ्यां निष्पन्ने। इति व्याकरणम्॥

मेकः, पुं, (मे इति कायति शब्दं करोतीति। कै शब्दे+कः।) छागः। इति राजनिर्घण्टः॥

मेक(ख)लकन्यका, स्त्री, (मेक(ख)लः मेखलायुक्तः विन्ध्यपर्व्वतः तस्य कन्यका। तस्य नितम्बदेशात् निःसृतेत्यर्थः।) नर्म्मदानदी। इत्यमरः। १। १०। ३२॥

मेक(ख)लाद्रिजा, स्त्री, (मेक(ख)लात् नितम्बदेशोपलक्षितात् अद्रेर्जाता। जन+डः+स्त्रियां टाप्।) नर्म्मदानदी। यथा,—

"रेवेन्दुजा पूर्व्वगङ्गा नर्म्मदा मेकलाद्रिजा।"

इति हेमचन्द्रः॥

मेक्षणं, क्ली, यज्ञीयपात्रविशेषः। (यथा, आश्वलायनश्रौतसूत्रे। २। ६। १२।

"मेक्षणेनादायावदानसम्पदा जुहुयात्॥")

यथा, मेक्षणादीनाञ्च छन्दोगपरिशिष्टम्।

"इध्मजातीयमिध्माद्धप्रमाणं मेक्षणं भवेत्।
वृत्तं चाङ्गुष्ठपृथ्वग्रमवदानक्रियाक्षमम्॥"

इध्मार्द्धप्रमाणम्।

प्रादेशद्वयमिध्मस्य प्रमाणं परिकल्पितमिति।

तदर्द्धम्। एषैव दर्व्वी। विशेषस्तु महासुवे

"दर्व्वी द्व्यङ्गुलपृथ्वग्रा तुरीयेण तु मेक्षणम्।
मुषलोदूखले वार्क्षे स्वायते सुदृढ़े तथा॥"

इति संस्कारतत्त्वम्॥

मेखला, स्त्री, (मीयते प्रक्षिप्यते कायमध्यभागे इति। मि+संज्ञायां खलः गुणश्च स्त्रियां टाप्। इत्यमरटीकायां भरतमतम्।) स्त्रीकट्याभरणम्। चन्द्रहार गोट् इत्यादि भाषा॥ (यथा, रघुवंशे। ८। ६४।

"असमाप्य विलासमेखलां
किमिदं किन्नरकण्ठि! सुप्यते॥")

तत्पर्य्यायः। काञ्ची २ सप्तकी ३ रसना ४ सारसनम् ५। इत्यमरः। २। ६। १०८॥ काञ्चिः ६ रशना ७ कक्षा ८ रसनम् ९ रशनम् १० कक्ष्या ११ सप्तका १२ सारशनम् १३। इति शब्दरत्नावली॥ कलापः १४। इति जटाधरः॥ सारसनं स्त्रीकट्यां वस्त्रग्रन्थनम्। इति स्वामी॥ केचित्तु।

"एकयष्टिर्भवेत् काञ्ची मेखला त्वष्टयष्टिका।
रसना षोड़श ज्ञेया कलापः पञ्चविंशकः॥"

इति पठन्ति। इह त्वभेदात् पर्य्यायता। इति भरतः॥ खड़्गादिनिबन्धनम्। इत्यमरः। २। ८। ९०॥ शिञ्जिनिका। चर्म्मरज्ज्वादि। मुष्टिदार्ढ्यार्थं उपर्य्यधो लौहबन्धः। इत्येके। इत्यपि भरतः॥ * ॥ शैलनितम्बः। इति मेदिनी। ले, १२५॥ नर्म्मदानदी। इति शब्दरत्नावली॥ पृश्निपर्णी। इति राजनिर्घण्टः॥ * ॥ उपनयनकाले धारणीयमुञ्जनिर्म्मितसूत्रत्रयम्। यथा। अथैनं माणवकमाचार्य्यस्त्रिः प्रदक्षिणं त्रिवृत्तमुञ्जमेखलां परिधापयन् मन्त्रद्वयं वाचयति। इति भवदेवभट्टः॥ अपि च। गोभिलः। मुञ्जकाशताम्बो रसनाः। मुञ्जः शरः। ताम्बनः शणस्तद्भवा ताम्बनी। रसना मेखला। तथा च मनुः।

"मौञ्जी त्रिवृत्समा श्लक्ष्णा कार्य्या विप्रस्य मेखला।
क्षत्त्रियस्य च मौर्व्वीया वैश्यस्य शणतान्तवी॥
मुञ्जालाभे तु कर्त्तव्या कुशाश्मन्तकवल्वजैः।
त्रिवृता ग्रन्थिनैकेन त्रिभिः पञ्चभिरेव वा॥"

इति संस्कारतत्त्वम्॥

अन्यच्च।

"गर्भाष्टमेऽष्टमे वाब्दे स्वसूत्रोक्तविधानतः।
दण्डी च मेखली सूत्री कृष्णाजिनधरो मुनिः॥
मौञ्जी त्रिवृत्समा श्लक्ष्णा कार्य्या विप्रस्य मेखला।
मौञ्ज्यभावे कुशेनाहुर्ग्रन्थिनैकेन च त्रिभिः॥"

इति कौर्म्मे उपविभागे ११ अध्यायः॥

होमकुण्डोपरिम्टद्घटितवेष्टनविशेषः। यथा, वशिष्ठपञ्चरात्रे।

केशाङ्गारांस्तथा भस्म भुजगान् निर्जलां महीम्।
दृष्ट्वा स्वप्ने दशाहन्तु मृत्युरेकादशेऽहनि॥
करालैर्विकटैः कृष्णैः पुरुषैरुद्यतायुधैः।
पाषाणैस्ताडितः स्वप्ने सद्यो मृत्युं समाप्नुयात्॥
सूर्य्योदये यस्य शिवा क्रोशन्ती याति सम्मुखम्।
विपरीतं परीतं वा स सद्यो मृत्युमृच्छति॥
यस्य वै भुक्तमात्रेऽपि हृदयं पीड्यते क्षुधा।
जायते दन्तसङ्घर्षः स गतायुरसंशयम्॥
दीपादिगन्धं नो वेत्ति त्रसत्यह्नि तथा निशि।
नात्मानं परनेत्रस्थं वीक्षते न स जीवति॥
शक्रायुधञ्चार्द्धरात्रे दिवा ग्रहगणं तथा।
दृष्ट्वा मन्येत सङ्क्षीणमात्मजीवितमात्मवान्॥
नासिका वक्रतामेति कर्णयोर्नम्रतोन्नती।
नेत्रञ्च वामं स्रवति यस्य तस्यायुरुद्गतम्॥
आरक्ततामेति मुखं जिह्वा वापि सिता तथा।
तदा प्राज्ञो विजानीयान्मृत्युमासन्नमात्मनः॥
उष्ट्ररासभयानेन यः स्वप्ने दक्षिणां दिशम्।
प्रयाति तं विजानीयात् सद्यो मृत्युं नरेश्वर॥
पिधाय कर्णौ निर्घोषं न शृणोत्यात्मसम्भवम्।
नश्यते चक्षुषोर्ज्योतिर्यस्य सोऽपि न जीवति॥
पततो यस्य वै गर्त्ते स्वप्ने द्वारं पिधीयते।
न चोत्तिष्ठति यः श्वभ्रात्तदन्तं तस्य जीवितम्॥
ऊर्द्ध्वा च दृष्टिर्न च सम्प्रतिष्ठा
रक्ता पुनः सम्परिवर्त्तमाना।
मुखस्य चोष्मा शुषिरा च नाभिः
शंसन्ति पुंसामपरं शरीरम्॥
स्वप्नेऽग्निं प्रविशेद्यस्तु न च निष्क्रमते नरः।
जलप्रवेशादपि वा तदन्तं तस्य जीवितम्॥
यश्चाभिहन्यते दुष्टैर्भूतै रात्रावथो दिवा।
स मृत्युं सप्तरात्रान्तात् पुमानाप्नोत्यसंशयम्॥
स्ववस्त्रममलं शुक्लं रक्तं पश्यत्यथोऽसितम्।
यः पुमान् मृत्युमापन्नं तस्यापि हि विनिर्द्दिशेत्॥
स्वभाववैपरीत्यन्तु प्रकृतेश्च विपर्य्ययः।
कथयन्ति मनुष्याणां समासन्नौ यमान्तकौ॥
येषां विनीतः सततं यस्य पूज्यतमा मताः।
तानेव योऽवजानाति तानेव च विनिन्दति॥
देवान्नार्च्चयेद्वृद्धान् गुरून् विप्रांश्च निन्दति।
मातापित्रोरसत्कारं जामातृणां करोति यः॥
योगिनां ज्ञानविदुषामन्येषाञ्च महात्मनाम्।
प्राप्ताकाले पुरुषस्तद्विज्ञेयं विचक्षणैः॥
योगिना सततं यत्नादरिष्टान्यवनीपते।
संवत्सरान्ते सञ्जाते फलदानि दिवानिशम्॥
विलोक्यानि सदा चैव फलपङ्क्तिश्च भीषणा।
इति मार्कण्डेयपुराणे अलर्कोपाख्याने ४३ अ॥
कर्म्मविशेषान्मृत्युविशेषो यथा —
"पैशाचानि गोत्राणि गौतमीयं हतो वध।
कार्त्तिकं यद्धनञ्च यः सुरां मृत्युमृच्छति॥
आगारदाहिनो दाहं क्षुधं चाश्ननायिनः।
यं पुरन्ति नरा काले तस्मिन् मृत्युमुपैष्यति॥
दम्भाचारपराणां ये तमाचारमेव च।
उदन्या बन्धा होमस्तौ नरा सुखमत्ययः॥
ये न खादन्ति जन्मान्ते देवाद्यर्म्मसमापयेत्।
यथोक्तकारी सौम्यश्च स सुखं मृत्युमृच्छति॥
शीतं जयन्तीन्मनदाःतापं चोपकदायिनः।
प्राणघ्नीं वेदनां कष्टां ये चान्ये द्वेषकारिणः॥
मोहाज्ञानप्रदातारः प्राप्नुवन्ति महद्भयम्।
कूटसाक्षी मृषावादी यश्चासम्यगुपास्ति वै।
ते मोहमृत्यवः सर्व्वे तथान्ये वेदनिन्दकाः॥"
इति मार्कण्डेयपुराणे पितापुत्रसम्वादे १० अध्यायः॥ *॥
मृत्युकालकर्त्तव्यक्षुद्रजन्तुवधप्रायश्चित्तं यथा —
"कोऽपि क्षुद्रजन्तूनां हिंसकानाञ्च पण्डित।
कायावधं समुत्तस्थ्य मृत्युकाले प्रमुच्यते॥
अहिंसकानां क्षुद्राणां वधे प्रसज्य ध्रुवम्।
प्रायश्चित्तं मृत्युकाले कथितं पद्मयोनिना॥'
इति ब्रह्मवैवर्त्ते श्रीकृष्णजन्मखण्डे ७ अध्यायः॥
मृत्युसमये गङ्गागमनमावश्यकं यथा —
"अहो सगरवंश्येभ्यो निर्व्वाणमुक्तिदायिनी।
वैकुण्ठगामिनां मार्गसोपानरूपिणी वरा॥
अतोऽपि मृत्युसमये सर्व्वा पुण्यस्वरूपिणाम्।
आदौ पादौ च विन्यस्य मुखे तोयं प्रदीयते॥
गङ्गासोपानमारुह्य सन्तो यान्ति ममालयम्॥'
इति तत्रैव ३४ अध्यायः॥ *॥
जन्मवतां मृत्योरपरिहार्य्यत्वं यथा,—
"मृत्युर्जन्मवतां वीर। देहेन सह जायते।
अद्य वाब्दशतान्ते वा मृत्युर्वै प्राणिनां ध्रुवः॥"
इति श्रीभागवते १० स्कन्धे १ अध्यायः॥
अपि च।
"जातस्य हि ध्रुवो मृत्युर्ध्रुवं जन्म मृतस्य च।
तस्मादपरिहार्य्येऽर्थे न त्वं शोचितुमर्हसि॥
इति श्रीभगवद्गीता॥ *॥
अकालमृत्युप्रशमनस्तोत्रं यथा,—
सूत उवाच।
"स्तोत्रं तत्र प्रवक्ष्यामि मार्कण्डेयेन भाषितम्।
नारायणं सहस्राक्षं पद्मनाभं पुरातनम्।
प्रणतोऽस्मि हृषीकेशं किं मे मृत्युः करिष्यति॥१॥
गोविन्दं पुण्डरीकाक्षमनन्तमजमव्ययम्।
केशवञ्च प्रपन्नोऽस्मि किं मे मृत्युः करिष्यति॥२॥
वासुदेवं जगद्योनिं भानुमन्तमतीन्द्रियम्।
दामोदरं प्रपन्नोऽस्मि किं मे मृत्युः करिष्यति॥३॥
शङ्खचक्रधरं देवं छन्नरूपिणमव्ययम्।
अधोक्षजं प्रपन्नोऽस्मि किं मे मृत्युः करिष्यति॥४॥
वाराहं वामनं विष्णुं नारसिंहं जनार्द्दनम्।
माधवञ्च प्रपन्नोऽस्मि किं मे मृत्युः करिष्यति॥५॥
पुरुषं पुष्करं पुण्यं क्षेमबीजं जगत्पतिम्।
लोकनाथं प्रपन्नोऽस्मि किं मे मृत्युः करिष्यति॥६॥
सहस्रशीर्षं देवेशं व्यक्ताव्यक्तं सनातनम्।
महायोगं प्रपन्नोऽस्मि किं मे मृत्युः करिष्यति॥७॥
भूतात्मानं महात्मानं यज्ञयोनिमयोनिजम्।
विश्वरूपं प्रपन्नोऽस्मि किं मे मृत्युः करिष्यति॥८॥
इत्युदीरितमाकर्ण्य स्तोत्रं तस्य महात्मनः।
अपयातस्ततो मृत्युर्विष्णुदूतैः प्रपीडितः॥
इति तेन जितो मृत्युर्मार्कण्डेयेन धीमता।
प्रसन्ने पुण्डरीकाक्षे नृसिंहे नास्ति दुर्लभम्॥
मृत्युञ्जयकमिदं पुण्यं मृत्युप्रशमनं शुभम्।
मार्कण्डेयहितार्थाय स्वयं विष्णुरुवाच ह॥
य इदं पठति स्तोत्रं त्रिकालं नियतः शुचिः।
नाकाले तस्य मृत्युः स्यान्नरस्याच्युतचेतसः॥
हृत्पद्ममध्ये पुरुषं पुराणं
नारायणं शाश्वतमादिदेवम्।
विचिन्त्य सूर्य्यादतिराजमानं
मृत्युं स योगी जितवांस्तदैव॥
इति गारुडे २९८ अध्यायः॥ *॥
शुभकर्म्मप्रतिबन्धकमृत्युदा योगा यथा,—
'आदित्यभौमयोर्नन्दा भद्रा शुक्रशशाङ्कयोः।
बुधे जया गुरौ रिक्ता शनौ पूर्णा च मृत्युदा॥"
अपि च।
"रव्यादिभिर्मघैर्युक्ता विशाखादिचतुष्टयं।
उत्पाटा मृत्युवः काला अन्दनानि यथाक्रमम्॥"
इति ज्योतिस्तत्त्वम्॥

मृत्युञ्जय पुं, (मृत्युं जितवान्। जि + खच् + मुम् च।) शिवः। इत्यमरः॥ तन्नामकारणं यथा —
सुयज्ञ उवाच।
'शिवो लीनो निर्गुणे च श्रीकृष्णे प्राकृते लये।
कथं तव गुरोर्नाम मृत्युञ्जय इति श्रुतौ॥'
सुतपा उवाच।
"ब्रह्मणोऽन्ते मृत्युकन्या प्रनष्टा जलबिन्दुवत्।
सहस्रौ सर्व्वलोकानां ब्रह्मादीनां नराधिप॥
कतिधा मृत्युकन्यानां ब्रह्मणां कोटिशो लये।
कालेन लीनः शम्भुश्च सत्त्वरूपी च निर्गुणे॥
मृत्युकन्या जिता शश्वत् शिवेन गुरुणा मम।
न मृत्युना जितः शम्भुः कल्पे कल्पे श्रुतौ
श्रुतम्॥"
इति ब्रह्मवैवर्त्ते प्रकृतिखण्डे ५१ अध्यायः॥
रोगशान्त्यर्थं तस्य पूजाविधिर्यथा —
"मृत्युञ्जयं समापूज्य लिङ्गं त्रिभुवनेश्वरम्।
रोगात्तो मुच्यते रोगाद्बद्धो मुच्येत बन्धनात्॥
यस्तु सम्पूजयेद्भक्त्या लिङ्गं मृत्युञ्जयाभिधम्।
यमोऽपि प्रणमेद्भक्त्या किं करिष्यति चामयः॥
तस्य पूजाविधिं वक्ष्ये शृणु सत्प्रायकार्म्मिणे।
जातिभद्र मृत्तिकान्तु गृहीत्वा शोतितोयकम्॥
निर्म्माय पार्थिवं लिङ्गं काष्ठाधारे निवेशयेत्।
पौराणिकेन मन्त्रेण कुर्य्याच गठनं बुधः॥
स्नापयेत् पञ्चगव्येन प्रत्यक्स्थाप्य तोलकम्।
स्वस्थमन्त्रेण प्रत्यक्षरेण स्नापयेत् सुधीः॥
रोमव्ययकामतया नामगोत्रादिपूर्व्वकम्।
उपविश्यासने विप्रो धृत्वा धौतं च वाससी॥
रुद्राक्षमालां कण्ठे वै धृत्वा भस्मत्रिपुण्ड्रकम्।
उपचारं षोडशकं दद्यात् भक्त्या प्रयत्नतः॥
सुवर्णस्थापनं दद्यात् तथैवाभरणानि च।
वस्त्रयुग्मं प्रदद्यात्तु परिधेयं यथा भवेत्॥
मधुपर्कं कांस्यपात्रे दद्याद्भोजनपेयकम्।
विल्वपत्रसहस्रञ्च अभयं विनिवेदयेत्॥
एवं सम्पूज्य लिङ्गेश जपेन्मन्त्रं सहस्रकम्।
ततो होमं प्रकुर्व्वीत दार्भ्यां साज्यं ददेत्॥

सुवर्णं वा तदर्द्धं वा देवि! विभवमानतः।
अङ्गहीना न कर्त्तव्या पूजा चाफलदा यतः॥
एकलिङ्गं समाराध्य फलं स्यादन्यके युगे।
तत् फलं लभते देवि! कलौ संख्या चतुर्गुणा॥
ताम्रपात्रे तु संस्थाप्य अशीतितोलकं जलम्।
तज्जलेनैव देवेशि! कुशैः संमार्ज्य रोगिणम्॥
त्रिपट्टीपशिखायाश्च मन्त्रमुच्चार्य्य मामकम्।
एवंविधिविधानेन पूजयेन्मम लिङ्गकम्॥
यादृग्यादृग्भवेद्रोगो नाशमेति मयोदितः।
साङ्गेन पूजयित्वा च लभते वाञ्छितं फलम्॥
अङ्गव्यतिक्रमेणैव वृथा भवति वासना।
रोगी प्रमुच्यते सद्यो भोगीव कञ्चुकोज्झितः।
यदि मद्वचने भक्तिस्तदा मुक्तो भवेन्नरः॥"

इति मृत्युञ्जयतन्त्रम्॥

(ज्वरनाशकौषधविशेषः। तद्यथा,—
"अयक्तः सिद्धिदः शुद्धो रोगघ्नः कीर्त्तिवर्द्धनः।
यशःप्रदः शिवः साक्षात् मृत्युञ्जयरसः स्मृतः॥
विषस्यैकस्तथा भागो मरीचं पिप्पली कणा।
गन्धकस्य तथा भागो भागः स्याट्टङ्गणस्य वै॥
सर्व्वत्र समभागः स्याद्धिङ्गुलन्तु द्विभागकम्।
चूर्णयेत् खल्लमध्ये तु मुद्गमानां वटीश्चरेत्॥
रसश्चेत् समभागः स्याद्धिङ्गुलं नेष्यते तदा।
मृत्युरूपं ज्वरं हन्ति मृत्युञ्जयरसः स्मृतः॥
मृत्युर्विनिर्जितो यस्मात्तस्मान्मृत्युञ्जयः स्मृतः।
मधुना लेहनं प्रोक्तं सर्व्वज्वरनिवृत्तये॥
दध्योदकानुपानेन वातज्वरनिवर्हणः।
आर्द्रकस्य रसैः पानं दारुणे सान्निपातिके॥
जम्बीररसयोगेन सर्व्वज्वरविनाशनः।
अजाजीगुड़संयुक्तो विषमज्वरनाशनः॥
तीव्रज्वरे महाघोरे पुरुषे यौवनान्विते।
पूर्णमात्रा प्रदातव्या पूर्णा वटीचतुष्टयम्॥
स्त्रीबालवृद्धक्षीणे च अर्द्धमात्राः प्रकीर्त्तिताः।
नवज्वरे महाघोरे यामैकान्नाशयेद्ध्रुवम्॥
मध्यज्वरे तथाजीर्णे त्रिरात्रान्नाशयेद्ध्रुवम्।
सप्ताहात् सन्निपातोत्थं ज्वराजीर्णकसंज्ञ-

कम्॥"

इति मृत्युञ्जयो रसः॥ इति वैद्यकरसेन्द्रसार-संग्रहे ज्वराधिकारे॥ क्ली, ज्ञानविशेषः। यथा, ब्रह्मवैवर्त्तपुराणे प्रकृतिखण्डे। ४६। ६५।

"शम्भुश्च चतुरो वेदान् वेदाङ्गानितरांस्तथा।
बालकं पाठयामास ज्ञानं मृत्युञ्जयं परम्॥")

**मृत्युनाशकः**, पुं, (नाशयतीति। नश् + णिच् + ण्वुल्। मृत्योर्नाशकः।) पारदः। इति राजनिर्घण्टः॥ मरणहारके, त्रि॥

**मृत्युपुष्पः**, पुं, (मृत्यवे निजनाशाय पुष्पमस्य। सति पुष्पोद्गमे अस्य नाशात्तथात्वम्।) इक्षुः। इति रत्नमाला॥

**मृत्युफलः**, पुं, (मृत्यवे स्वनाशाय फलमस्य।) महाकालफलम्। इति मेदिनी। ले, १६२॥

**मृत्युफला**, स्त्री, (मृत्यवे फलमस्याः।) कदली। इति मेदिनी। ले, १६२॥ (कदलीशब्देऽस्या विवरणं ज्ञातव्यम्॥)

**मृत्युबीजः**, पुं, (मृत्यवे स्वनाशाय बीजमस्य।) वंशः। इति त्रिकाण्डशेषः॥

**मृत्युभङ्गुरकः**, पुं, मरणकालवादनीयपटहः। यथा,

"भवरुत् प्रेतपटहो मृत्युभङ्गुरकश्च सः।"

इति त्रिकाण्डशेषः॥

**मृत्युभृत्यः**, पु, (मृत्योर्भृत्यः किङ्कर इव। मरणहेतुत्वात्।) रोगः। इति राजनिर्घण्टः॥

**मृत्युवञ्चनः**, पुं, (मृत्युं वञ्चयतीति। वञ्चि + ल्युः।) शिवः। बिल्ववृक्षः। द्रोणकाकः। इति मेदिनी। ने, २४५॥

**मृत्युसूतिः**, स्त्री, मृत्यवे सूतिः प्रसवो यस्याः सा। कर्कटी। यथा,—

"यथा कर्कटकी गर्भमाधत्ते मृत्युमात्मनः।"

इति महाभारते विराटपर्व्व॥

**मृत्स्ना**, स्त्री, (प्रशस्ता मृत् इति। मृत् + "सस्नौ प्रशंसायाम्।" ५। ४। ४०। इति सः। टाप्।) प्रशस्तमृत्तिका। इत्यमरः। २। १। ४॥

**मृत्स्ना**, स्त्री, (प्रशस्ता मृत् इति। मृत् + स्नः। टाप्।) प्रशस्तमृत्तिका। (यथा, श्रीमद्भागवते। ८। ६। १०।

"त्वमादिरन्तो जगतोऽस्य मध्यम्
घटस्य मृत्स्नेव परः परस्मात्॥")

काची। इत्यमरः। २।१।४॥ (अस्याः पर्य्यायो यथा,—

"सौराष्ट्री पार्व्वती मृत्स्ना काची च पङ्क-पर्पटी।"

इति वैद्यकरत्नमालायाम्॥)

**मृत्स्नाभाण्डकः**, पुं, (मृत्स्नानिर्म्मितं भाण्डम्। ततः कन्। अभिधानात् पुंस्त्वम्।) भाण्डविशेषः। तत्पर्य्यायः। मृच्छिका २। इति त्रिकाण्डशेषः॥

**मृद**, श क्षुदि। इति कविकल्पद्रुमः॥ (क्र्या०-पर०-सक०-सेट्।) श, मृद्नाति ममर्द। क्षुदि चूर्णीकरणे। इति दुर्गादासः॥

**मृद्**, [द्] स्त्री, (मृद्यते चूर्णीक्रियते इति। मृद् + कर्म्मणि क्विप्।) मृत्। मृत्तिका। इत्यमरः। २। १। ४॥ (यथा, मनौ। ४। ३९।

"मृदं गां दैवतं विप्रं घृतं मधुचतुष्पथम्॥")

**मृदङ्कुरः**, पुं, हारीतपक्षी। इति हेमचन्द्रः। ४। ४०७॥

**मृदङ्गः**, पुं, (मृद्यते आहन्यते असौ इति। मृद् + "विड़ादिभ्यः कित्।" उणा० १। १२०। इति अङ्गच्। सच कित्। यद्वा, मृत् अङ्गमस्येत्यमरटीकायां रघुनाथः।) स्वनामख्यातवाद्यम्। तत्पर्य्यायः। मुरजः २। इत्यमरः। १। ७। ५॥ (यथा, शिशुपालवधे। ११। २।

"रजनिविरतिशंसी कामिनीनां भविष्यद्-
विरहविहितनिद्राभङ्गमुच्चैर्मृदङ्गः॥")

पटहः। घोषः। इति मेदिनी। गे, ४७॥ वंशः। इति शब्दमाला॥ (मृदङ्गादेर्मङ्गलजनकत्वमाह स्मृतिः।

"रोचनं चन्दनं हेम मृदङ्गं दर्पणं मणिम्।
गुरुमग्निं तथा सूर्य्यं प्रातः पश्येत् सदा बुधः॥")

अथ मृदङ्गादिविवरणम्।

"मर्द्दलः खादिरः श्रेष्ठो हीनः स्यादन्यदारुणः।
रक्तचन्दनजो वाद्यो गभीरध्वनिरुच्चकैः॥
सार्द्धहस्तप्रमाणन्तु दैर्घ्यमस्य विधीयते।
त्रयोदशाङ्गुलं वाममथवा द्वादशाङ्गुलम्॥
दक्षिणञ्च भवेद्धीनमेकेनार्द्धाङ्गुलेन वा।
करणानद्धवदनो मध्ये चैव पृथुर्भवेत्॥
यत्स्थानीयो भवेद्यस्तत्तच्चर्म्मकरणं मतम्।
मृत्तिकानिर्म्मितश्चैव मृदङ्गः परिकीर्त्तितः॥
पातयेत् खरलिं वाद्यवादनार्थञ्च मर्द्दले।
विभूतिर्गैरिकं भक्तं केन्दुकेन च संयुतम्॥
यद्वा चिपीटकं देयं जीवनीसत्त्वमिश्रितम्।
सर्व्वमेकत्र पिष्टन्तल्लेपः खरलिरुच्यते॥
वामास्ये पूरिकां कृत्वा लेपं दद्याच्च दक्षिणे।
एवं मर्द्दलकः प्रोक्तः सर्व्ववाद्योत्तमो मतः॥
अस्य संयोगमासाद्य सर्व्वं वाद्यञ्च शोभते।
एतदङ्गे वीणकाष्ठे दशमर्द्धाङ्गुलं विदुः॥ * ॥
तधि धोतेमिति ज्ञेयाः पाठ्वर्णा मृदङ्गजाः।
थों दं टें धिक्कटस्तद्वौ ताकं दं दं थोगं धिधि॥
खर्म्मझिं नं गटं दं था झटपाटा मता अमी।
तथिं थोंटें तकधी दों दं दं धिग्ध्वां ततं तधि॥
तक्क तं घं धि दों ताधि पाठ्खण्डे त्वयं क्रमः।"

तथा च यतिमाने पाठ्खण्डः। द्रगतथेजां द्रगतथेजां धो धो धिकता धिका थोजां थोजां तक तता धिका थोता द्रग तता धि छि ग्धिधि कड़ ताकड़ नाथोधिक थोजां धोताद्रगत ताद्रगत ताद्रगत ताधि। इति यतिमाने पाठ्खण्डः॥ * ॥

"यतिरोढ़ोऽप्यवच्छेदो गजरो रूपकं ध्रुवम्।
गलपः सारिगोणी च नादश्च कथितं तथा।
प्रहरणं द्वन्दनश्च प्रबन्धा द्वादश स्मृताः॥"

यथा। दं थात इत्येकताल्यां यतिः॥ * ॥ ओढ़वाद्यं यथा। दां तथो तधिक तधिक दं थादं था घोधि घोधि तत्त तत्तथ धिध धिद्दिशां दिशां टटु नें कि टटु नकि तद टङ्ग तद टङ्ग स्ववटङ्ग स्ववटङ्ग तगि नगि तगि नगि दां दां दं दं दीं दीं दं ता तथा। इत्योढ़वाद्यम्॥ * ॥ अवच्छेदवाद्यं यथा। दं थातः दं थातः धिक्कि धिक्कि दिगणं दं थातः। इत्यवच्छेदवाद्यम्॥ * ॥ गजरवाद्यं यथा। थोक टेष नेष टें हें गथो गथोङ्क टेङ्क थोगतकि धिक तकि धिक टेङ्कन धि धि कट तक थोक तधिकट तक्कक तथोग तद्दीम्। इत्येकताल्यां गजरः॥ * ॥ रूपकवाद्यं यथा। तकधिक् तकधिक्क थवितकि थवितक्कि धिक्क दं थातः। इति रूपकवाद्यम्॥ * ॥ ध्रुवकवाद्यं यथा। तक्क तक्कट धिक्क धिक्कट। इति निःसारताले ध्रुवकः॥ * ॥ गलपो यथा। तधिद्धि धिक तक तधि गलगं था था दें तथा ढ्णन। इत्येकताल्यां गलपः॥ * ॥ सारिगोणी यथा। थोङ्गटेष तक्क धिक्क तकधिक् तकथो हटङ्गन हटङ्गन थोगक्क थोः। इति प्रथमखण्डः॥ * ॥ टेष थोः धि खोद्दः टेष टेष

दक्ष तगदक्ष धिक नदिदक्ष दं गदं गखो गखोक सक तक धिक तधिक तधो टेण घोटेण घटे गल खोगगल खोग खोदट गें टगें खोह टण। इत्यस्य छन्दनम्। इति शारिगोखो। नादो यथा,—

"दांकारश्चितय पूर्ब्बं दा धिगिति ततस्त्रयम्।
दां दां धिकत्रय यत्र इति नाद ग्रचीप्रिय ॥"

इति नाद ॥

"हुतं मानममारभ्य शुद्ध कूटविनिर्म्मितम्।
सप्तपञ्चमय वाद्य कथित तद्दिहोच्यते ॥" * ॥

हुतमानत्वात प्रतिमाले यथा। ततत ततत तक्कि तक्कि ट्नि घिगनथो घिगनथो धिक्क धिक धिक्क धिक्क धिक नगि नगमि थो थो धि धि धि दां दा धिक्क थो थो थो हथो हननि थो नमिथो थोह थोह डेढ डेढि थोह थोह सटि तटि तटुक गों गों धगि धगि तत तधे तत तधे ततत गिडो जडो थोग थोग थों थोगग थोगथो ससतो।

"इति सप्तपदान्याहु कथित वाद्यपण्डिता।
प्रतिताडेन ताडेन पादवर्णसमाश्रित ॥
गन्धर्ब्बपतिना पूर्ब्बमुत्वशीलासनर्त्तने।
सुधर्म्मारञ्जनार्थञ्च कथित प्रकटीकृतम् ॥"

प्रहरण यथा। थोगक्का नह्विका थाग कट गगों द थोग दिह्विक धिक्क धिकटेण। इत्येक ताल्या प्रहरणम् ॥ * ॥

"वाद्य विसृज्यते येन छन्दन तन्निगद्यते।"

यथा तह्निथो दिम टेण नन्न। इति छन्दनम् ॥ * ॥ मर्द्दलस्थयोरष्टाङ्गुलवामसुखो द्वादशाङ्गुलदक्षिणमुख। मुरजस्य द्वादशाङ्गुलवाममुख सप्तदशाङ्गुलदक्षिणमुख मर्द्दलमुरजयोरय भेद। इति सङ्गीतदामोदर ॥

मृदङ्गफल, पु (मृदङ्गस्तदाकृति फलमस्य।) पनसवृक्ष। इति शब्दरत्नावली ॥

मृदङ्गफलिनी स्त्री,(मृदङ्गवत फलमस्त्यस्या। इनि ङीप च।) कोषातकी। इति राजनिर्घण्ट ॥ (विषयोऽस्या कोषातकीशब्दे ज्ञेय ॥)

मृदङ्गी, स्त्री, (मृदङ्ग तदाकारफलमस्त्यस्या इति। मृदङ्ग+अर्शआद्यच ङीष च।) घोषातकी। इति रत्नमाला ॥ श्वेतघोषा इति भाषा ॥

मृदा, स्त्री, (मृद्+टाप।) मृत्तिका। इति द्विरूपकोष ॥

मृदाकर, पुं वज्रम्। इति शब्दमाला ॥

मृदित, त्रि मृदधातो. कर्म्मणि क्त। चूर्णीकृत। (यथा,—

"विमृद्यजलतोये मृदित पाण्ड इत्यभिधीयते।"

इति वैद्यकपरिभाषायाम्।)

मृदिनी स्त्री, (मृद्+भावे क। मृद चूर्णीकरणमस्त्यस्या। मृद+इनि। स्त्रियां ङीप।) प्रशस्तमृत्तिका। इति शब्दचन्द्रिका ॥

मृदु, त्रि (म्रदते मर्द्दितु शक्यते इति। मृद्+"प्रथिम्रदिभ्रस्जां सम्प्रसारणं सलोपश्च।" उणा० १। २८। इति कु।) अतीक्ष्ण। कोमल। इत्यमर। ३। १। ७८। (यथा,—

'मृदौ ज्वरे लघौ देहे प्रचलेषु मलेषु च।"

इति वैद्यकचक्रपाणिसंग्रहे ज्वराधिकारे।) गृहकन्यायां स्त्री। इति राजनिर्घण्ट। (पु नृपञ्जयराजपुत्र। इति विष्णुपुराणे। ४। २१। ३।)

मृदुकृष्णायस, स्त्री (मृदु च तत् कृष्णायसं चेति।) सीसकम्। इति राजनिर्घण्ट ॥

मृदुगण, पुं (मृदूनां गण।) चित्रानुराधामृगशिरोरेवतीनक्षत्राणि। यथा। चित्रामित्रान्त्यभं मृदुगण। इति ज्योतिस्तत्त्वम् ॥

मृदुगमना स्त्री (मृदु गमनमस्या।) हंसी। इति राजनिर्घण्ट ॥ मन्दगमना स्त्री च ॥

मृदुचर्म्मी, [न्] पु, (मृदु कोमल चर्म्म त्वक। तदस्त्यस्य। चर्म्म+'व्रीह्यादिभ्यश्च।' ५।२।१२। इति इनि।) भूर्ज्जवृक्ष। इति राजनिर्घण्ट ॥ कोमलत्वग्विशिष्टे त्रि ॥

मृदुच्छद, पु, (मृदु छद पत्रमस्य।) भूर्जवृक्ष। इति हेमचन्द्र। ४।२१०। गिरिजपीलुवृक्ष। इति जटाधर ॥ कुकुरद्रु। श्रीताल। इति राजनिर्घण्ट ॥

मृदुता, स्त्री (मृदु+तल+टाप।) मृदुत्वम्। मृदोर्भाव। इति व्याकरणम् ॥ (यथा रघौ। ५। ५४ ॥

'स चानुनीत प्रणतेन पश्चात्
मया महर्षिर्मृदुतामगच्छत् ॥')

मृदुताल पु (मृदूनि तालफलान्यस्य।) श्रीतालवृक्ष। इति राजनिर्घण्ट ॥ कोमलतालश्च ॥

मृदुत्वक, [च] } पुं, भूर्ज्जवृक्ष। इत्यमर। २।४।४६।
मृदुत्वच, } मृदवस्त्वचोऽस्य मृदुत्वक चान्त। भूर्ज्जोऽथ भूर्जपत्र' स्यात मृदुत्वक पत्रपुष्पक। इति कोषान्तरमिति मधु। अदन्तनपुंसकत्वच शब्देन चापन्तत्वचाशब्देन वा विग्रहे मृदुत्वचोऽदन्तोऽपि भूर्जो भुर्जो बहुपटो बहुत्वको मृदुत्वच। इति स्वामी। इत्यमरटीकायां भरत ॥

मृदुत्थक, स्त्री, (मृदा मृत्परिणामेन उत ऊर्द्ध नीयते यत् इति। उत्+नी+अपकरणे "अन्येष्वपि दृश्यते।" ३। २। ४८। इत्यच काशिकोक्त्या ड। तत स्वार्थे कन्।) सुवर्णम्। इति शब्दचन्द्रिका ॥

मृदुपत्र पुं, (मृदूनि पत्राण्यस्य।) नल। इति राजनिर्घण्ट ॥ कोमलपर्णे स्त्री। तद्वति, त्रि ॥

मृदुपत्री, स्त्री (मृदूनि पत्राणि यस्या।) चिल्ली-शाकम्। इति राजनिर्घण्ट ॥

मृदुपर्व्वक, पुं, (मृदूनि पर्व्वाण्यस्य कप।) वेत्र। इति राजनिर्घण्ट ॥ कोमलपर्व्वविशिष्टे त्रि ॥

मृदुपुष्प, पुं, (मृदूनि कोमलानि पुष्पाण्यस्य।) शिरीषवृक्ष। इति रत्नमाला ॥ कोमलकुसुमयुक्ते, त्रि ॥

मृदुफल, पुं (मृदूनि फलान्यस्य।) विकङ्कत। मधुनारिकेरिक। विकण्टकवृक्ष। इति राजनिर्घण्ट ॥ कोमलफलवति, त्रि ॥

मृदुल, क्ली, (मृदु मृदुत्वमस्त्यस्य। मृदु+"सिध्मादिभ्यश्च।" ५। २। ९७। इति लच।) जलम्। इति शब्दचन्द्रिका ॥ कोमले, त्रि। इत्यमर। २। १। ७८ ॥ (यथा शिशुपालवधे। ६। २।

"मृदुलतान्तलतान्तमलोकयत
स सुरभिं सुरभिं सुमनोभरै ॥")

मृदुलोमक, पु, (मृदूनि सर्व्वसुलभानि लोमानि यस्य स। स्वार्थे कन्।) शशक। इति हेमचन्द्र। ४। ३६१ ॥ कोमलरोमविशिष्टे, त्रि ॥

मृदूत्पल, क्ली, (मृदु कोमल उत्पलम्।) नीलपद्मम्। इति शब्दचन्द्रिका ॥

मृद्गु, पु, (मृद पङ्क गच्छति कारणत्वेन प्राप्नोतीति। गम्+ड।) मत्स्यभेद। इति सक्षिप्तसारोणादिवृत्ति ॥

मृद्वङ्ग, क्ली, (मृदु कोमल अङ्ग यस्य।) वङ्गम्। इति हेमचन्द्र ॥ (मृदु च तदङ्गञ्चेति।) कोमलावयवश्च ॥

मृद्वी, स्त्री (मृदु+'वोतोगुणवचनात।' ४।१।४४। इति ङीष।) कोमलाङ्गी। इति मुग्धबोधव्याकरणम् ॥ अपि च।

'सद्य पुरीपरिसरेषु शिरीषमृद्वी
सीता जवात्त्रिचतुराणि पदानि गत्वा।
गन्तव्यमस्ति कियदित्यसकृद्‌ब्रुवाणा
रामाश्रुण कृतवती प्रथमावतारम् ॥'

इति महानाटकम् ॥

कपिलद्राक्षा। इति राजनिर्घण्ट ॥

मृद्वीका स्त्री, (मृदु+बाहुलकात ईकन् टाप च।) द्राक्षा। इत्यमर। २।४।१०७ ॥ (यथा, बृहत्संहितायाम्। ५५। १०।

"जम्बूवेतसवानीरकदम्बोदुम्बरार्ज्जुना।
बीजपूरकमृद्वीकालकुचाश्च सदाडिमा ॥")

कपिलद्राक्षा। इति राजनिर्घण्ट ॥

मृध उ ञ क्लिदि। इति कविकल्पद्रुम ॥ (भ्वा०-उभ०-अक०-सेट। क्त्वावेट।) उ, मर्द्धित्वा मृद्ध्वा। ञ, मर्धति मर्धते। क्लिदि आर्द्रीभावे। इति दुर्गादास ॥

मृध, क्ली, (मर्धन्ते क्लिद्यन्तीति। मृध+क।) युद्धम्। इत्यमर। २। ८। १०४ ॥ (यथा हरिवंशे। १८२। १।

"अपयाते ततो देवे हर्य्ये चैव महात्मनि।
पुनश्चावर्त्तत मृध परेषां लोमहर्षणम् ॥")

मृधा अ, मृषा। इत्यमरटीकासारसुन्दरी ॥

मृध्मर, पु, (मृतस्य मल।) पापाण। इति त्रिकाण्डशेष ॥

मृश, श औ मृशि। इति कविकल्पद्रुम ॥ (तुदा० पर० सक० अनिट।) श, मृशति। औ, अमार्क्षीत् अम्राक्षीत् अमृक्षत्। मृशि इति तालव्यान्तस्यैव क्रिपि रूपम्। तेन आनि

द्विष्टाधत्वात् सम्मर्शनं प्रणिधानञ्च अस्यार्थः । सम्मर्शने । यथा, रघौ । ३ । ६८ ।

"परामृशन् हर्षजडेन पाणिना
तदीयमङ्गं कुलिशव्रणाङ्कितम् ।"

प्रणिधाने ।

"रामप्रवासे व्यमृशन्न दोषं
जनापवादं सनरेन्द्रमृत्युम् ।"

कैकेयीति भट्टिः ।३।७॥

विमर्शः परामर्शः । मृषि इति मूर्द्धन्यान्तपाठो देयः । तर्हि चमैवार्थः स्यात् । इति दुर्गादासः ॥

मृष, तृ क } क्षान्तौ । इति कविकल्पद्रुमः ॥
मृष, तृ ष } (अदन्त चुरा०-पर०-सक०-सेट् । अन्यत्र, अदन्त भ्वा०-उभ०-सक०-सेट् । ) मूर्द्धन्योपधौ । क, मृषयति । ष, मृषति मृषते । इति दुर्गादासः ॥

मृष, उ सेचने । इति कविकल्पद्रुमः ॥ (भ्वा०-पर०-सक०-सेट् । क्त्वावेट् । ) उ, मर्षित्वा मृष्ट्वा । इति दुर्गादासः ॥

मृष, क क्षान्तौ । इति कविकल्पद्रुमः ॥ (चुरा०-पर०-सक०-सेट् । ) क, मर्षयति । अयमात्मनेपदीत्येके । इति दुर्गादासः ॥

मृष, ष ङ उ क्षान्तौ । इति कविकल्पद्रुमः ॥ (भ्वा०-उभ०-आत्म०-च-सक०-सेट् । क्त्वावेट् । ) ष, मर्षति मर्षते । ङ, मर्षते । उ, मर्षित्वा मृष्ट्वा । अपि गुरुमपराधं मर्षति ब्राह्मणानामिति हलायुधः । इति दुर्गादासः ॥

मृष, य ष क्षान्तौ । इति कविकल्पद्रुमः ॥ (दिवा०-उभ०-सक०-सेट् ।) य ष, मृष्यति मृष्यते समर्थः । इति दुर्गादासः ॥

मृषा, व्य, (मृष्यत इति । मृष् + का ।) मिथ्या । इत्यमरः ।३।४।१५॥ (यथा, नैषधचरिते ।१।६८ ।

"मृषान्वयं सादिवधे कुतूहला-
न्नलस्य नासीरगते वितेनतुः ॥")

वृथा । इति तट्टीकासारसुन्दरी ॥

मृषार्थकं, क्ली, (मृषा अर्थोऽस्य । बहुव्रीहौ कप् ।) अत्यन्तासम्भवार्थवाक्यम् । तत्पर्य्यायः । आश्चर्य्यम् २ । इत्यमरः । १ । ६ । २१ । अत्यन्तासम्भवार्थे वचसि । आङ्चते स्म आश्चर्यं क्तः । मृषा मिथ्या अर्थोऽस्य मृषार्थकं इह मृषार्थं यत् सर्व्वथा न घटते । यथा,—

"एष वन्ध्यासुतो याति खपुष्पकृतशेखरः ।
कूर्म्मलोमतनूत्राणः शशशृङ्गधनुर्द्धर इति ॥
यावज्जीवमहं मौनी ब्रह्मचारी पिता ममेति ।
अस्य चायं भेदः मौनित्वं ब्रह्मचारित्वं अन्यत्र सिद्धमेव वन्ध्यासुतत्वं खपुष्पत्वञ्चान्यत्रासिद्धमिति । इति भरतः ॥

मृषाध्यायी, [न्] पुं, (मृषा ध्यायति चिन्तयतीति । ध्यै + णिनिः । ) बकः । यथा,—

"कङ्की बकी बकोटश्च तीर्थसेवी च तापसः ।
मीनघाती मृषाध्यायी निश्चलाङ्गश्च दाम्भिकः ॥"

इति राजनिर्घण्टः ॥

मृषालकः, पुं, (मृषा मिथ्या अचिरस्थायित्वेन सकृत्मुकुलितमकाल एवेत्यर्थः । अलं अलङ्करणं कायति प्रकाशयतीति । कै + कः । ) आम्रवृक्षः । इति शब्दचन्द्रिका ॥

मृषावादः, पुं, ( मृषा मिथ्या वादः कथनम् । ) मिथ्यावाक्यम् । तत्पर्य्यायः । चाटू २ । इति जटाधरः ॥ ( यथा, महाभारते ।३।१८८।३३।

"बहवो म्लेच्छराजानः पृथिव्यां मनुजाधिप ! ।
मृषानुशासिनः पापाः मृषावादपरायणाः ॥")

मृषावादी, [न्] त्रि, ( मृषा वदतीति । वद + णिनिः ।) मिथ्यावादकः । तत्पर्य्यायः । मृषोद्यः । इति शब्दमाला ॥ मिथ्याभियोक्ता, च ॥

मृषोद्यं, क्ली,(मृषा + वद् + "राजसूयसूर्य्यमृषोद्यरुच्यकुप्यकृष्टपच्याव्यथ्याः ।"३ । १ । ११४ । इति कर्म्मणि क्यप् । निपातितश्च । ) मिथ्यावाक्यम् । इति मुग्धबोधव्याकरणम् ॥ (यथा, भट्टिकाव्ये । ५ । ६० ।

"मृषोद्यं प्रवदन्तीं त्वां सत्यवन्धो रघूत्तमः ॥")

मृषोद्यः, त्रि, मिथ्यावादी । इति शब्दमाला ॥

मृष्टं, क्ली, (मृश + क्तः ।) मरिचम् । इति राजनिर्घण्टः ॥

मृष्टः, त्रि, ( मृश + क्त । ) शोधितम् । इत्यमरः । ३।१।५६ ॥ ( यथा, बृहत्संहितायाम् ।८५।८।

"अशुभकरमतोऽन्यथाप्रदिष्टं
स्थितपतितं च करोति मृष्टमन्नम् ॥")

मृष्टेरुकः, पुं, वदान्यः । मिष्टाशी । अतिथिद्विट् । इति मेदिनी । के, २०६ ॥

मॄ, शि वधे । इति कविकल्पद्रुमः ॥ (क्र्या०-पर०-सक०-सेट् । ) शि, मृणाति । मूर्णः । मूर्त्तिः । इति दुर्गादासः ॥

मे, ङ प्रतीदाने । इति कविकल्पद्रुमः ॥ ( भ्वा०-आत्म०-सक०-अनिट् । ) प्रतीदानं परिवर्त्तः । ङ, मयते धान्येन सार्थं लोकः । इति दुर्गादासः ॥

मे, त्रि, मह्यम् । आमाके इति भाषा । मम आमार इतिभाषा । एते अस्मच्छब्दस्य चतुर्थीषष्ठ्येकवचनाभ्यां निष्पन्ने । इति व्याकरणम् ॥

मेकः, पुं, ( मे इति कायति शब्दं करोतीति । कै शब्दे + कः ।) छागः । इति राजनिर्घण्टः ॥

मेक(ख)लकन्यका, स्त्री, (मेक(ख)लः मेखलायुक्तः विन्ध्यपर्व्वतः तस्य कन्यका । तस्य नितम्बदेशात् निःसृतेत्यर्थः । ) नर्म्मदानदी । इत्यमरः । १ । १० । ३२ ॥

मेक(ख)लाद्रिजा, स्त्री,(मेक(ख)लात् नितम्बदेशोपलक्षितात् अद्रेर्जाता । जन + डः + स्त्रियां टाप् । ) नर्म्मदानदी । यथा,—

"रेवेन्दुजा पूर्व्वगङ्गा नर्म्मदा मेकलाद्रिजा ।"

इति हेमचन्द्रः ॥

मेचकं, क्ली, यज्ञीयपात्रविशेषः । ( यथा, आश्वलायनश्रौतसूत्रे । २ । ६ । १२ ।

"मेचकेनादायावदानसम्पदा जुहुयात् ॥")

यथा, मेचकादीनाञ्च छन्दोगपरिशिष्टम् ।

"इभजातीयमिषार्द्धप्रमाणं मेचकं भवेत् ।
वृत्तं चार्द्धञ्च पृथ्वग्रमवदानक्रियाक्षमम् ॥"

इषार्द्धप्रमाणम् ।

प्रादेशद्वयमिषास्य प्रमाणं परिकल्पितमिति । तदर्द्धम् । एषैव दर्व्वी । विशेषस्तु मत्स्यसूक्ते

"दर्व्वी द्व्यङ्गुलपृथ्वग्रा तुरीयेण तु मेचकम् ।
मुषलोदूखले वार्क्षे स्वायते सुदृढे तथा ॥"

इति संस्कारतत्त्वम् ॥

मेखला, स्त्री, ( मीयते प्रक्षिप्यते कायमध्यभागे इति । मि + संज्ञायां खलः गुणश्च स्त्रियां टाप् इत्यमरटीकायां भरतमतम् । ) स्त्रीकट्याभरणम् । चन्द्रहार गोट् इत्यादि भाषा ( यथा, रघुवंशे । ८ । ६४ ।

"असमाप्य विलासमेखलां
किमिदं किन्नरकण्ठि ! सुप्यते ॥")

तत्पर्य्यायः । काञ्ची २ सप्तकी ३ रशना ४ सारसनम् ५ । इत्यमरः ।२।६।१०८॥ काञ्चिः ६ रशना ७ कक्षा ८ रसनम् ९ रशनम् १० कक्ष्या ११ सप्तका १२ सारशनम् १३ । इति शब्दरत्नावली ॥ कलापः १४ । इति जटाधरः सारसनं स्त्रीकट्यां वस्त्रबन्धनम् । इति स्वामी केचित्तु ।

"एकयष्टिर्भवेत् काञ्ची मेखला त्वष्टयष्टिका ।
रसना षोडश ज्ञेया कलापः पञ्चविंशकः ॥"

इति पठन्ति । इह त्वभेदात् पर्य्यायता । इति भरतः ॥ खड्गादिनियन्धनम् । इत्यमरः । २ । ८ । ९० ॥ शिञ्जिनिका । चर्म्मरज्ज्वादि । मुष्टिदार्ढ्यार्थं उपर्य्यधो लौहबन्धः । इत्येके । इति भरतः ॥ * ॥ शैलनितम्बः । इति मेदिनी । ले, १२५ ॥ नर्म्मदानदी । इति शब्दरत्नावली पृश्निपर्णी । इति राजनिर्घण्टः ॥ * ॥ उपनयनकाले धारणीयमुञ्जनिर्म्मितसूत्रत्रयम् । यथा अथैनं माणवकमाचार्य्यस्त्रिः प्रदक्षिणं त्रिवृत्तमुञ्जमेखलां परिधापयन् मन्त्रद्वयं वाचयति इति भवदेवभट्टः ॥ अपि च । गोभिलः । मुञ्जकाशतास्न्यो रशनाः । मुञ्जः शरः । ताम्रनशणसम्भवा तास्नी । रशना मेखला । तथा च मनुः ।

"मौञ्जी त्रिवृत्समा श्लक्ष्णा कार्य्या विप्रस्य मेखला ।
क्षत्त्रियस्य च मौर्व्वीया वैश्यस्य शणतान्तवी ॥
मुञ्जालाभे तु कर्त्तव्या कुशाश्मन्तकवल्वजैः ।
त्रिवृता ग्रन्थिनैकेन त्रिभिः पञ्चभिरेव वा ॥"

इति संस्कारतत्त्वम् ॥

अन्यच्च ।

"गर्भाष्टमेऽष्टमे वाब्दे स्वसूत्रोक्तविधानतः ।
दण्डी च मेखली सूत्री कृष्णाजिनधरो मुनिः ॥
मौञ्जी त्रिवृत्समा श्लक्ष्णा कार्य्या विप्रस्य मेखला ।
मौञ्ज्यभावे कुशेनाहुर्ग्रन्थिनैकेन च त्रिभिः ॥"

इति कौर्म्मे उपविभागे ११ अध्यायः ॥

होमकुण्डोपरिस्थघटितवेष्टनविशेषः । यथा, वशिष्ठपञ्चरात्रे ।

"यावान् कुण्डस्य विस्तारः खननं तावदिष्यते ।
हस्तैके मेखलास्तिस्रो वेदाग्निनयनाङ्गुलाः ॥
कुण्डे द्विहस्ते ता ज्ञेया रसवेदगुणाङ्गुलाः ।
चतुर्हस्ते तु कुण्डे ता वसुतर्कगुणाङ्गुलाः ॥"
मेखला अर्थात् वारिमेखलावत् कुण्डवेष्टिता इष्ट-घटिता ताश्च खातदण्डाग्रात् एकाङ्गुलिरूपं कण्ठं परित्यज्य उच्छ्रायेण विस्तारेण चैवादि क्रमेण वेदाद्यङ्गुला एतद्विपरीतास्त्वशास्त्रीया व्यवहारविरुद्धाः । वेदाश्चत्वारः अग्नयस्त्रयः नयने द्वे रसाः षट् गुणास्त्रयः । वसुतर्कगुणानि अष्टषट्चत्वारि । पिङ्गलामतेऽपि । खाता देकाङ्गुलं त्यक्त्वा मेखलानां विधिर्भवेत् । इति तिथ्यादितत्त्वे दुर्गोत्सवतत्त्वम् ॥ ( यज्ञवेदिन सूत्रम् । यथा, श्रीमद्भागवते । ४ । ५ । १५ ।
"ऋत्विक्सदस्याः पाचार्यैस्तथैकस्योनिनाशयन् ।
कुण्डेष्वमूत्रयन् केचिद्दिभिदुर्वेदिमेखलाः ॥"
'मेखलाः सीमासूत्राणि ।' इति तट्टीकायां श्रीधरस्वामी ॥ )

मेखलकन्यका, स्त्री, (मेखलस्य मेखलोपलक्षितस्य विन्ध्यगिरेः कन्यकेव प्रसूता । ) नर्म्मदानदी । इत्यमरटीकायां भरतः ॥

मेघ, पुं, ( मेहतीति । मिह + अच् । 'न्यङ्क्वादीनाञ्च ।' ७ । ३ । ५३ । इति कुत्वम् । ) मुस्तकः । राक्षसः । इति शब्दरत्नावली ॥ स्वनामख्यातद्रव्यपदार्थः । मेहति सिञ्चति यः । तत्पर्य्यायः । अभ्रम् २ वारिवाहः ३ स्तनयित्नुः ४ बलाहकः ५ धाराधरः ६ जलधरः ७ तडित्वान् ८ वारिदः ९ अम्बुभृत् १० घनः ११ जीमूतः १२ मुदिरः १३ जलमुक् १४ धूमयोनिः १५ । इत्यमरः । १ । ३ । ७ ॥ अभ्रम् १६ पयोधरः १७ अम्भोधरः १८ व्योमधूमः १९ घनाघनः २० वायुदारः २१ नभश्चरः २२ कम्बरः २३ कन्धः २४ नीरदः २५ गगनध्वजः २६ वारिमुक् २७ वार्मुक् २८ वनमुक् २९ अब्दः ३० पर्ज्जन्यः ३१ नभोगजः ३२ मदयित्नुः ३३ कः ३४ कन्दः ३५ गवेडुः ३६ गदामरः ३७ खतमालः ३८ वातरथः ३९ श्वेतनीलः ४० नागः ४१ जलकरङ्कः ४२ पेचकः ४३ भेकः ४४ दर्दुरः ४५ । इति शब्दरत्नावली ॥ अम्बुदः ४६ तोयदः ४७ अम्बुवाहः ४८ । इति रत्नमाला ॥ पाथोदः ४९ गदाम्बरः ५० गाडवः ५१ वारिमसिः ५२ । इति त्रिकाण्डशेषः ॥ सवैदिकपर्य्यायाः । अद्रिः १ ग्रावा २ गोत्रः ३ बलः ४ अश्नः ५ पुरुभोजाः ६ वलिशानः ७ अश्मा ८ पर्व्वतः ९ गिरिः १० व्रजः ११ चरुः १२ वराहः १३ शम्बरः १४ रौहिणः १५ रैवतः १६ फलिगः १७ उपरः १८ उपलः १९ चमसः २० अहिः २१ अभ्रम् २२ बलाहकः २३ मेघः २४ दृतिः २५ ओदनः २६ वृषन्धिः २७ वृत्रः २८ असुरः २९ कोशः ३० । इति त्रिंशन्मेघनामानि । इति वेदनिघण्टौ ॥ १ । १० ॥ ( यथा उत्तररामचरिते । २

'मेघमालेव यश्चायमारादपि विभाव्यते ॥")
मेघनायका यथा —
"नियुते शाकवर्षे तु चतुर्भिः शोधिते क्रमात् ।
आवर्त्तं विद्धि संवर्त्तं पुष्करं द्रोणमम्बुदम् ॥"
एषां फलानि ।
'आवर्त्तो निर्जलो मेघः संवर्त्तश्च बहूदकः ।
पुष्करो दुष्करजलो द्रोणः शस्यप्रपूरकः ॥'
इति ज्योतिस्तत्त्वम् ॥ ० ॥
त्रेतायुगे तस्योत्पत्तिर्यथा,—
'अपां सिद्धिं प्रतिगते तदा मेघात्मना तु वै ।
मेघैश्च स्तनयित्नुभ्यः प्रवृत्तं वृष्टिसर्ज्जनम् ॥
सकृदेव तया दृष्ट्या संयुक्ते पृथिवीतले ।
प्रादुरासंस्तदा तासां वृक्षा वै गृहसंज्ञिताः ॥
सर्व्वप्रत्युपभोगस्तु तासां तेभ्यः प्रजायते ।
वर्त्तयिष्यन्ति ते तस्मात् त्रेतायुगमुखे प्रजाः ॥"
इति कौर्म्मे २९ अध्यायः ॥ ० ॥
प्रलयकालीनमेघा यथा —
"ततो गजकुलोन्नादास्तडिन्तो समलङ्कृताः ।
उत्तिष्ठन्ति तदा व्योम्नि घोराः संवर्त्तका घनाः ॥
केचिन्नीलोत्पलश्यामाः केचित् कुमुदसन्निभाः ।
धूम्रवर्णास्तथा केचित् केचित् पीताः पयोधराः ॥
केचिद्रासभवर्णाश्च लाक्षारसनिभास्तथा ।
शङ्खकुन्दनिभाश्चान्ये जात्यञ्जननिभाः परे ॥
मनःशिलाभास्त्वन्ये कपोतसदृशाः परे ।
केचिद्धरितालाभास्तथान्ये चौरसन्निभाः ॥
तथा कर्व्वुरवर्णाभा भिन्नाञ्जननिभास्तथा ।
इन्द्रगोपनिभाः केचित् हरितालनिभास्तथा ॥
काकाण्डकनिभाः केचिदुत्तिष्ठन्ति घना दिवि ।
केचित् पर्व्वतसङ्काशाः केचिद्गजकुलोपमाः ॥
कूटागारनिभाश्चान्ये केचिन्मीनकुलोद्वहाः ।
बहुरूपा घोररूपा घोरस्वरनिनादिनः ॥
तदा जलधराः सर्व्वे पूरयन्ति नभस्तलम् ॥
ततस्ते जलदा घोरा वारिणा भास्करात्मजाः ।
सप्तधा संवृतात्मानस्तमग्निं शमयन्त्युत ॥
ततस्ते जलदा वर्षं मुञ्चन्तीह महौघवत् ।
सुघोरमशिवं सर्व्वं नाशयन्ति च पावकम् ॥
प्रवृत्तैस्तदात्यर्थमम्भसा पूर्य्यते जगत् ।
अद्भिस्तेजोऽभिभूतत्वात्तदाग्निः प्रविशत्यपः ॥
नष्टे चाग्नौ वर्षशतैः पयोदाः क्षयसम्भवाः ।
प्लावयन्तोऽथ भुवनं महाजलपरिस्रवैः ॥
धाराभिः पूरयन्तीदं चोद्यमानाः स्वयम्भुवा ।
धर्षयन्तः सलिलौघैर्वेला इव महोदधेः ॥
साद्रिद्वीपा तथा पृथ्वी जलैः सञ्छाद्यते शनैः ।
आदित्यरश्मिभिः पीतं जलमभ्रेषु तिष्ठति ।
पुनः पतति तद्भूमौ पूर्य्यन्ते तेन चार्णवाः ॥"
इति कौर्म्मे उपविभागे ४२ अध्यायः ॥ * ॥
मेघस्य उत्पत्तिर्यथा —
"तेजो हि सर्व्वभूतस्य आदत्ते रश्मिभिर्जलम् ।
समुद्रात्स्रवभसा योगादन्नस्य प्रवहन्त्यपः ॥
ततोऽयनवशात् काले परिवर्त्ती दिवाकरः ।
नियच्छति पयो मेघे शुक्लाशुक्लैर्गभस्तिभिः ॥
अभ्रस्थाः प्रपतन्त्यापो वायुना समुदीरिताः ।
सर्व्वभूतहितार्थाय वायुभिश्च समन्ततः ॥
ततो वर्षति षण्मासान् सर्व्वभूतविवृद्धये ।
वायव्यं स्तनितञ्चैव विद्युदग्निसमुद्भवम् ॥
मेहनाच्च मिहेर्धातोर्मेघत्वं व्यञ्जयन्ति च ।
अभिव्यक्ति यथा चापस्त्वन्नं कवयो विदुः ॥"
अपि च ।
"मेघानां पुनरुत्पत्तौ त्रिविधा योनिरुच्यते ।
अग्निजा ब्रह्मजाश्चैव पक्षजाश्च पृथग्विधाः ।
त्रिधा विघायनास्तेषां वक्ष्यामि विततम्भवम् ॥
आग्नेया स्वग्नजाः प्रोक्तास्तेषां धूमः प्रवर्त्तनम् ।
शीतदुर्दिनवाताद्ये सगुणास्ते व्यवस्थिताः ॥
महिषाश्च वराहाश्च मत्तमातङ्गरूपिणः ।
भूत्वा धरणिमभ्येत्य रमन्ते विचरन्ति च ॥
जीमूता नाम ते मेघा ये तेभ्यो जीवसम्भवाः ।
विद्युद्गुणविहीनाश्च जलधारावलम्बिनः ॥
मृदुसका महाकाया आवहस्य च सानुगाः ।
क्रोशमात्राच्च वर्षन्ति क्रोशाद्धादपि वा पुनः ।
पर्व्वताग्रनितम्बेषु वर्षन्ति विपिनेषु च ॥
बलाका गर्भभाश्चैव बलाकागर्भधारिणः ।
ब्रह्मजा नाम ते मेघा ब्रह्मनिश्वाससम्भवाः ॥
द्वितीयं प्रवहं वायुं मेघास्ते तु समाश्रिताः ।
इतो योजनमात्राश्च सार्द्धाद्धात विकृतादपि ।
वृष्टिसर्गाद्धि तेषां धारासारा प्रकीर्त्तिताः ॥
पक्षेण पक्षाः पक्षिन्नाः पर्व्वतानां महौजसाम् ।
कामगानां प्रवृत्तानां प्रजानां शिवमिच्छता ।
पुष्करावर्त्तकास्तेन कारणेनेह विश्रुताः ॥
नानारूपधराश्चैव महाघोरस्वनाश्च ते ।
कल्पान्तवृष्टेः स्रष्टारः संवर्त्ताग्नेर्नियामकाः ।
वर्षन्ति ते युगान्तेषु तृतीयास्ते प्रकीर्त्तिताः ॥
अनेकरूपसंस्थानाः पूरयन्तो महीं जलैः ।
वायुं परिवहन्ते स्युराश्रिताः कल्पसाधकाः ॥
योऽन्यस्याण्डस्य भिन्नस्य प्राकृतस्याभवत्तदा ।
यस्माद्ब्रह्मा समुत्पन्नश्चतुर्व्वक्त्रः स्वयम्भुवः ।
तस्यैवाण्डस्य पाला हि सर्व्वे मेघाः प्रकीर्त्तिताः ॥
तेषामध्यायनं धूमः सर्व्वेषामविशेषतः ।
तेषां श्रेष्ठस्तु पर्ज्जन्यश्चत्वारश्चैव दिग्गजाः ॥
गजानां पर्व्वतानाञ्च मेघानां भोगिभिः सह ।
कुलमेकं पृथग्भूतं योनिरेका जलं स्मृतम् ॥
पर्ज्जन्यो दिग्गजाश्चैव हेमन्ते शीतसम्भवाम् ।
तुषारवृष्टिं वर्षन्ति हिमसस्यविवृद्धये ॥"
इति मत्स्ये ५८ अध्यायः ॥ * ॥
षड्रागान्तर्गतरागविशेषः । यथा —
"भैरवोऽथ वसन्तश्च नटो नारायणस्तथा ।
श्रीरागो मेघरागश्च षडेते पुरुषाह्वयाः ॥"
तस्य रागिण्यो यथा —
'ललिता मालवी गौडी नाटी देवकिरी तथा ।
मेघरागस्य रागिण्यो भवन्तीमाः सुमध्यमाः ॥"
अयं हनूमन्मते षड्रागो ब्रह्मणो मस्तकात् निर्गतः । आकाशाज्जात इति च वदन्ति । अस्य जातिः औडवः । अयात ध न स ऋ ग इति पञ्चस्वरमिलितः । अस्य ग्रहः धैवतस्वरः ।

वर्षर्त्तौ रात्रिशेषे गानसमयः । अस्याकारः । सुन्दरपुरुषः । श्यामवर्णः । उष्णीषवद्बद्धकेशः । प्राप्तितखड्गहस्तः । हनूमन्मते अस्य पञ्च रागिण्यो यथा । टङ्का १ मल्लारी २ गुर्ज्जरी ३ भूपाली ४ देशकारी च ५ । अस्याष्टपुत्त्रा यथा । जालन्धरः १ सारः २ नटनारायणः ३ शङ्कराभरणः ४ कल्याणः ५ गजधरः ६ गान्धारः ७ सहाना ८ ॥ कल्लिनाथमते । अस्य रागिण्यः षट् यथा । वङ्गाली १ मधुरा २ कामोदा ३ धनाश्री ४ तीर्थकी ५ देवाली ६ । एतन्मतेऽपि अष्टौ पुत्त्राः किन्तु नटनारायणशङ्कराभरणकल्याणस्थाने केदारामारुजलभरता ज्ञेयाः ॥ सोमेश्वरमते अस्य षड्रागिण्यो यथा । मल्लारी १ सौरटी २ सावेरी ३ कौशिकी ४ गान्धारी ५ हरशृङ्गारी ६ । एतन्मतेऽपि पुत्त्राः पूर्व्ववत् । रागिणीसहितस्यैतद्रागस्य वर्षर्त्तौ गानसमयः ॥ भरतमते तस्य पञ्च रागिण्यो यथा । मल्लारः १ मूलतानी २ देशी ३ रतिवल्लभा ४ कावेरी ५ । तन्मते अष्टौ पुत्त्रा यथा । कलायरः १ वागेश्वरी २ सहाना ३ पुरीया ४ कानरा ५ तिलकः ६ स्तम्भः ७ शङ्कराभरणः ८ । तन्मते अष्टपुत्त्राणां भार्य्या यथा । कर्णाटी १ कादवी २ कदमनाटः ३ पाहारी ४ माँझः ५ परजः ६ नटमञ्जरी ७ शुद्धनटः ८ । इति सङ्गीतशास्त्रम् ॥

मेघकफः, पुं, ( मेघानां कफ इव । ) करका । इति हारावली । ५८ ॥

मेघकालः, पुं, ( मेघानां कालः समयः । ) वर्षर्त्तुः । इति जटाधरः ॥ ( यथा, बृहत्संहितायाम् । ६५ । ५८ ।
"स्थलसलिलचराणां व्यत्ययो मेघकाले ।
प्रचुरसलिलवृष्ट्यै शोषकाले भयाय ॥")

मेघचिन्तकः, पुं, ( चिन्तयतीति । चिन्ति + ण्वुल् । मेघानां चिन्तकः तस्यैव जलपायित्वात् । ) चातकपक्षी । इति शब्दचन्द्रिका ॥ ( मेघचिन्तनविशिष्टे, त्रि ॥ )

मेघजं, त्रि, मेघभववस्तु । मेघाज्जायते इति व्युत्पत्त्या जनधातोः डप्रत्ययेन निष्पन्नम् ॥

मेघजालं, क्ली, ( मेघानां जालम् । ) अभ्रियम् । इति शब्दचन्द्रिका ॥

मेघजीवनः, पुं, (मेघो जीवनं जीवनोपायो यस्य ।) चातकपक्षी । इति राजनिर्घण्टः ॥

मेघज्योतिः, [स्] पुं, ( मेघस्य ज्योतिरर्च्चिर्मेघाद्वतुपमो ज्योतिर्वा ।) वज्राग्निः । तत्पर्य्यायः । इरम्मदः २ । इत्यमरः ।१।३।१०॥ मेघस्य ज्योतिरर्च्चिर्मेघज्योतिः । ज्योतिरग्नौ समाख्यातं ज्योतिश्चन्द्रो निगद्यते । इति रन्तिः ॥ इरया जलेन माद्यति दीप्यते इति इरम्मदः । मेघाग्निर्हि जलेनैव दीप्यते । मदीभिर्येन्धि हर्षे दृ भृ दृ दृ जीति खः खिल्यथाजिति मनुस्वौ । अन्योन्यसंघट्टेन मेघाग्निःस्य यज्ज्योतिर्वृष्ट्यादौ पतति स इरम्मदः । मेघ इत्युपलक्षणं तेन वातजो-ऽपीरम्मदः सोऽपि हि इरया जलेन माद्यतीति कौमुदी । मेघाग्न्यादिरिरम्मद इति शब्दार्णवः । इति तट्टीकायां भरतः ॥

मेघडम्बरः, पुं, मेघस्याडम्बरः । मेघगर्ज्जनम् । यथा,—
"अजायुद्धे ऋषिश्राद्धे प्रभाते मेघडम्बरे ।
दम्पत्योः कलहे चैव बह्वारम्भे लघुक्रिया ॥"
इत्युद्भटः ॥

मेघतिमिरं, क्ली, (मेघेन तिमिरं अन्धकारो यत्र ।) मेघाच्छन्नदिनम् । इति हलायुधः ॥

मेघदीपः, पुं, ( मेघजनितो दीप इव । ) विद्युत् । इति शब्दमाला ॥

मेघनादः, पुं, ( मेघं नादयतीति । नद + णिच् + अण् ।) वरुणः । (मेघस्य नाद इव नादो यस्य ।) रावणपुत्त्रः । इति मेदिनी । दे, ५२ ॥ ( यथा, रघौ । १२ । ७६ ।
"शरड़ापातविश्लिष्टमेघनादास्त्रबन्धनः ॥"
मेघस्य नादः ।) मेघशब्दः । इति हेमचन्द्रः ॥ ( यथा, महाभारते । ३ । ७३ । ७ ।
"ते श्रुत्वा रथनिर्घोषं वारणाः शिखिनस्तथा ।
प्रणेदुरुन्मुखा राजन् ! मेघनाद इवोन्मुखाः ॥")
पलाशवृक्षः । इति शब्दचन्द्रिका ॥ तण्डुलीयशाकः । इति राजनिर्घण्टः ॥ ( यथा, भावप्रकाशे ।
"तण्डुलीयो मेघनादः काण्डेरस्तण्डुलेरकः ॥"
अस्य गुणादिकं तण्डुलीयशब्दे द्रष्टव्यम् ॥ दानवभेदः । यथा, हरिवंशे । ३३२ । ३० ।
"सुवाहुर्मेघनादश्च भीमगर्भश्च वीर्य्यवान् ॥"
मेघसदृशशब्दविशिष्टे, त्रि । यथा, रामायणे । २ । १६ । २६ ।
"मेघनादमसम्बाधं मणिहेमविभूषितम् ॥")

मेघनादजित्, पुं, ( मेघनादं जितवानिति । जि + क्विप् ।) लक्ष्मणः । इति त्रिकाण्डशेषः ॥

मेघनादानुलासकः, पुं, (मेघनादं अनु लक्षीकृत्य लसति क्रीडतीति । लस + ण्वुल् । ) मयूरः । इति राजनिर्घण्टः ॥

मेघनादानुलासी, [न्] पुं, ( मेघनादमनुलसतीति । लस + णिनिः ।) मयूरः । इत्यमरः ।२।५।३०॥

मेघनामा, [न्] पुं, ( मेघस्य नाम नाम यस्य । ) मुस्तकः । इत्यमरः । २ । ४ । १५६ ॥ (पर्य्यायोऽस्य यथा,—
"मुस्तको मेघनामा स्यात् ।"
इति गारुड़े २०८ अध्यायः ॥ )

मेघनिर्घोषः, पुं, ( मेघस्य निर्घोषः । ) मेघशब्दः । तत्पर्य्यायः । स्तनितम् २ गर्जितम् ३ रसितम् ४ । इत्यमरः । १।३।८ ॥ ध्वनितम् ५ ह्रादितम् ६ । इति भरतः ॥ (मेघस्य निर्घोष इव निर्घोषो यस्य । मेघतुल्यशब्दविशिष्टे, त्रि । यथा, महाभारते । ३ । ७३ । ११ ।
"यदि मां मेघनिर्घोषो नोपगच्छति नैषधः ।
अद्य चामीकरप्रख्यं प्रवेक्ष्यामि हुताशनम् ॥")

मेघपुष्पं, क्ली, ( मेघस्य पुष्पमिव । ) जलम् । इत्यमरः । १ । १० । ५ ॥ पिण्डाभ्रम् । नदीजलम् । इति मेदिनी । पे, २८ ॥

मेघपुष्पः, पुं, (मेघ इव पुष्यति प्रकाशते इति । पुष्य विकाशने + अच् ।) शक्राश्वः । इति शब्दरत्नावली ॥ श्रीकृष्णाश्वश्च ॥ (यथा, महाभारते । ४ । ४३ । २१ ।
"तं मन्ये मेघपुष्पस्य जवेन सदृशं हयम् ॥")

मेघप्रभवः, पुं. ( मेघः प्रभवः उत्पत्तिस्थानमस्य इति । ) जलम् । इति राजनिर्घण्टः ॥ मेघजाते, त्रि ॥

मेघभूतिः, पुं. ( मेघात् भूतिर्जन्मास्य । ) वज्रम् । इति शब्दरत्नावली ॥

मेघमालः, पुं, (मेघमाला वर्णसादृश्येन अस्त्यस्य । अर्श आद्यच् । ) रमागर्भजातकल्किदेवपुत्त्रः । यथा । "तथा रमा सिते पक्षे ।" इत्युपक्रम्य ।
"सा पुत्त्रं सुषुवे साध्वी मेघमालबलाहकौ ।
महोत्साहौ महावीर्य्यौ सुभगौ कल्किसम्मतौ ॥"
इति कल्किपुराणे ३१ अध्यायः ॥
(कुशद्वीपस्थपर्व्वतविशेषः । यथा, भागवते ।५। २०।४। "सुवर्णो हिरण्यष्ठीवो मेघमाल इति सेतुशैलाः ॥" राक्षसविशेषः । इति रामायणे । ३ । २६ । ३१ ॥ )

मेघमाला, स्त्री, ( मेघानां माला । ) मेघश्रेणी । तत्पर्य्यायः । कादम्बिनी २ । इत्यमरः ।१।३।८॥ ( यथा, उत्तररामचरिते । ३ ।
"मेघमालेव यश्चायमारादपि विभाव्यते ।"
स्कन्दमातृगणान्यतमा । यथा, महाभारते । ९ । ४६ । २९ ।
"एकवक्त्रा मेघरवा मेघमाला विरोचना ॥")

मेघयोनिः, पुं, ( मेघस्य योनिः उत्पत्तिकारणम् ।) धूमः । इति शब्दरत्नावली ॥

मेघरागः, पुं. (मेघनामको रागः ।) षड्रागान्तर्गतरागविशेषः । इति हलायुधः ॥ ( यथा, संगीतदर्पणे रागाध्याये । ३१ ।
"भैरवः कौशिकश्चैव हिन्दोलो दीपकस्तथा ।
श्रीरागो मेघरागश्च षडेते पुरुषाह्वयाः ॥")
अस्य विवरणं मेघशब्दे द्रष्टव्यम् ॥

मेघवर्णा, स्त्री, ( मेघस्येव वर्णोऽस्याः । स्त्रियां टाप् । ) नीलीवृक्षः । इति शब्दचन्द्रिका ॥ ( मेघतुल्यवर्णे, त्रि । यथा, महाभारते । ३ । ४६ । १५ ।
"शुक्लचीरोत्तरीयेण मेघवर्णेन राजता ॥")

मेघवर्त्म, [न्] क्ली, (मेघानां वर्त्म पन्थाः ।) आकाशम् । इति त्रिकाण्डशेषः ॥

मेघवह्निः, पुं, (मेघस्य मेघजन्यो वा वह्निः ।) वज्राग्निः । तत्पर्य्यायः । इरम्मदः २ । इति हेमचन्द्रः । ४ । १६७ ॥

मेघवाहनः, पुं, (मेघो वाहनमस्य ।) इन्द्रः । इत्यमरः ।१।१।४७॥ (यथा, शिशुपालवधे ।१३।१८।
"अविलम्बितैजविलम्बाशिपल्लवः
स्पृशति स्म मेघमिव मेघवाहनः ॥")

असुन् ।) मांसप्रभवधातुविशेषः । तत्पर्य्यायः । वपा २ वसा ३ । इत्यमरः ।२।६।६४॥ मेदः ४ । अकारान्त इति भरतः ॥ अस्य गुणाः । वातनाशित्वम् । श्लपित्तकफदाहत्वञ्च । इति राजवल्लभः ॥ अथ मेदसः स्वरूपमाह ।

"यन्मांसं स्वाग्निना पक्वं तन्मेद इति कथ्यते ।
तदतीव गुरु स्निग्धं बलकार्य्यतिबृंहणम् ॥"

अथ मेदसः स्थानमाह ।

"मेदो हि सर्व्वभूतानामुदरेष्वस्थिषु स्थितम् ।
अतएवोदरे वृद्धिः प्रायो मेदस्विनो भवेत् ॥"

इति भावप्रकाशः ॥

रोगविशेषः । तत्र मेदसो विप्रकृष्टं निदानमाह ।

"अव्यायामदिवास्वप्नश्लेष्मलाहारसेविनः ।
मधुरोऽन्नरसः प्रायः स्नेहान्मेदो विवर्द्धयेत् ॥"

अन्नरसः आमद्रवः । तथा च सुश्रुतः । आमद्रवान्नरसो मधुरश्च भवतीति । मेदसोऽतिप्रवृद्धौ वैगुण्यमाह ।

"मेदसावृतमार्गत्वात् पुष्यन्त्यन्ये न धातवः ।
मेदस्तु चीयते तस्मादशक्तः सर्व्वकर्म्मसु ॥"

अन्ये धातवः अस्थ्यादयः शुक्रान्ताः । न पुष्यन्ति न पुष्टा भवन्ति । चीयते सञ्चितं भवति वर्द्धत इति यावत् । तस्मात् मेदस्वी सर्व्वकर्म्मसु अशक्तः स्यात् । मेदसः सौकुमार्य्यात् । अपरानपि दोषानाह ।

"क्षुद्रश्वासतृषामोहस्वप्नक्रथनसादनैः ।
युक्तः क्षुत्स्वेददौर्गन्ध्यैरल्पप्राणोऽल्पमैथुनः ।
मेदसः स्वेददौर्गन्ध्याच्छाद्यन्ते जन्तवो नरः ॥"

क्रथनं उच्छ्वासावरोधः । कण्ठेन घुर्घुर इत्यन्ये । जन्तवः क्रिमयः । मेदसः स्थानमाह ।

"मेदस्तु सर्व्वभूतानामुदरेष्वस्थिषु स्थितम् ।
अतएवोदरं वृद्धिः प्रायो मेदस्विनो भवेत् ॥"

मेदस्विनोऽपि वृद्धौ हेतुमाह ।

"मेदसावृतमार्गत्वाद्वायुः कोष्ठे विशेषतः ।
चरन् सन्धुक्षयत्यग्निमाहारं शोषयत्यपि ॥
तस्मात् शीघ्रन्तु जरयत्याहारञ्चापि काङ्क्षति ।
विकारान् सोऽश्नुते घोरान् कांश्चित् कालव्यतिक्रमात् ॥"

सन्धुक्षयति प्रदीपयति । स मेदस्वी चाहारं शीघ्रं जरयति पुनर्भोक्तुं काङ्क्षति च दीप्ताग्निः कालव्यतिक्रमात् भोजनकालातिक्रमात् । कांश्चिद्विकारान् वातपित्तकरान् घोरान् अश्नुते प्राप्नोति । एते वातपित्ते मेदसावरुद्धे विशेषादुपद्रवकरे इत्याह ।

"एतावुपद्रवकरौ विशेषात् पित्तमारुतौ ।
एतौ हि दहतः स्थूलं वनं दावानलो यथा ॥"

एतौ पित्तमारुतौ मेदसा रुद्धमार्गत्वात् कोष्ठमध्ये प्रवृद्धौ सन्तौ विशेषादुपद्रवकरौ दहतः नाशयेताम् । मेदसोऽतिवृद्धेर्विनाशहेतुत्वमाह ।

"मेदस्यतीवसंवृद्धे सहसेवानिलादयः ।
विकारान् दारुणान् कृत्वा नाशयन्त्याशु जीवितम् ॥"

विकारान् प्रमेहपिड़काज्वरभगन्दरविद्रधिवातरोगाणामन्यतमान् । अतिस्थूलतया वैगुण्यमाह ।

"अतिस्थूलेषु संदृष्टा विसर्पाः सभगन्दराः ।
ज्वरातीसारमेहार्शःश्लीपदा यपिकादयः ॥"

अतिस्थूलस्य लक्षणमाह ।

"मेदो मांसातिवृद्धत्वाच्चलस्फिगुदरस्तनः ।
अयथोपचयोत्साहो नरोऽतिस्थूल उच्यते ॥"

अयथोपचयोत्साहः न यथा उपचयो मांसोपचयः उत्साहो बलञ्च यस्य सः ॥*॥ अथ मेदस्य चिकित्सा ।

"पुराणाः शालयो मुद्गाः कुलत्थोद्दालकोद्रवाः ।
लेखना वस्तयश्चापि सेव्या मेदस्विना सदा ॥
श्रमचिन्ताव्यवायाध्वक्षौद्रजागरणप्रियः ।
हन्त्यवश्यमतिस्थौल्यं यवश्यामाकभोजनः ॥
क्षारं वातारिपत्रस्य हिङ्गुयुक्तं पिबेन्नरः ।
सञ्चितं भक्तमण्डेन मेदोवृद्धिनिवृत्तये ॥
गुड़ूचीत्रिफलाक्काथः पीतो मेदोहरः स्मृतः
गुड़ूचीत्रिफलाक्काथस्तथा लौहरजोयुतम् ।
चोद्रेण त्रिफलाक्काथः पीतो मेदहरः परः ॥
प्रातर्मधुयुतं वारि सेवितं स्थौल्यनाशनम् ।
उष्णमन्नस्य मण्डं वा पिबेत् कृशतनुर्भवेत् ॥
व्योषाग्नित्रिफलामुस्तविड़ङ्गैर्गुग्गुलुं समम् ।
खादेन् सर्व्वान् जयेद्रोगान्मेदःश्लेष्मामवातजान् ॥
पिप्पली मधुना सेव्या मेदःकफविनाशिनी ॥
धत्तूरपत्रस्वरसेन गाढ़-
मुद्वर्त्तनं स्थौल्यहरं प्रदिष्टम् ॥
वासादलरसो लेपाच्छङ्खचूर्णेन संयुतः ।
विल्वपत्ररसो वापि देहदौर्गन्ध्यनाशनः ॥
निम्बपत्रस्वरसः प्रचितकवादियोजितं जयति ।
दग्धहरिद्रोद्वर्त्तनमचिराचिरदेहदौर्गन्ध्यम् ॥
शिरीषलामज्जकहेमलोध्रै-
स्त्वग्दोषसंस्वेदहरः प्रघर्षः ।
शरीरदौर्गन्ध्यहरः प्रदेहः
पत्राम्बुलोधाभयचन्दनानाम् ॥"

शिरीषस्यात्र पत्रं ग्राह्यं व्यवहारात् । लामज्जकं सुगन्धितृणविशेषस्तदलाभे उशीरं ग्राह्यम् । हेम नागकेशरम् । अम्बु वालकम् । अभयं उशीरम् ।

"हरीतकीं तु संपिष्य देहमुद्वर्त्तनं नरः ।
पश्चात् स्नानं प्रकुर्व्वीत देहखेदोपशान्तये ॥
वकुलस्य दलैः सम्यग्वारिणा परिपेषितैः ।
देहमुद्वर्त्तयेत् पश्चाद्धरीतक्या सुपिष्टया ॥
भूय उद्वर्त्तनं कुर्य्यात् पश्चात् स्नानं समाचरेत् ।
प्रस्वेदान् मुच्यते शीघ्रं मेदोवृद्धिसमुद्भवात् ॥"

इति मेदोऽधिकारः ॥ इति भावप्रकाशः ॥

(तद्यास्य विशेषः । यथा,—

"मेदः स्निग्धस्वेदौ दृढ़त्वं पुष्टिमस्थ्नाञ्च ॥"

अस्य चीणलक्षणं यथा,—

"मेदः क्षये श्लीहाभिवृद्धिः सन्धिशून्यता रौक्ष्यं मेदुरमांसप्रार्थना च ।" अस्यातिवृद्धिलक्षणं यथा,—

"मेदः स्निग्धाङ्गतामुदरपार्श्ववृद्धिं कासश्वासादीन् दौर्गन्ध्यञ्च ।"

"पूर्व्वः पूर्व्वोऽतिवृद्धत्वाद्वर्द्धयेद्धि परं परम् ।
तस्मादतिप्रवृद्धानां धातूनां ह्रासनं हितम् ॥"

"चपयेद्बृंहयेचापि दोषधातुमलान् भिषक् ।
तावद्यावदरोगः स्यान्नरो रोगसमन्वितः ॥"

इति सुश्रुते सूत्रस्थाने १५ अध्यायः ॥

"तृतीया मेदोधरा नाम मेदो हि सर्व्वभूतानामुदरस्थमन्वस्थिषु च महत्सु च मज्जा भवति ॥"

इति तत्रैव शारीरस्थाने ४ अध्याये ॥)

मेदः, पुं, ( मेद्यति स्निह्यतीति । मिद् + अच् । वपा । इति शब्दचन्द्रिका ॥

'तृष्णाकण्डूक्रमिहरो मलघ्नो मेदकृच्छहा ॥"

इति भरतधृतशालिहोत्रः ॥)

म्लेच्छजातिविशेषः । इति जटाधरः ॥ अलम्बुषा । इति राजनिर्घण्टः ॥ ( ऐरावतकुलजो नागविशेषः । यथा, महाभारते ।१।५७।११।

"विहङ्गः शरभो मेदः प्रमोदः संहतापनः ।
ऐरावतकुलादेते प्रविष्टा हव्यवाहनम् ॥")

मेदकः, पुं, ( मिद् + ण्वुल् । ) जगलः । इत्यमरः २ । १० । ४२ ॥ मेथा इति भाषा ॥

मेदजः, पुं, ( मेदात् जायते इति । जन् + डः । ) भूमिजगुग्गुलुः । इति राजनिर्घण्टः ॥ मेदोभवश्च ॥

मेदःसारा, स्त्री, ( मेदः सारोऽस्याः । ) मेदा । इति राजनिर्घण्टः ॥ ( विवृतिरस्या मेदाशब्दे द्रष्टव्या ॥)

मेदस्कृत्, क्ली, ( मेदः करोतीति । मेदस् + कृ + क्विप् । ) मांसम् । इति हेमचन्द्रः ॥

मेदा, स्त्री, ( मेदो अस्याः अस्तीति । मेद + अच् । टाप् । ) अष्टवर्गप्रसिद्धौषधिविशेषः । तत्पर्य्यायः । मेदोद्भवा २ जीवनी ३ श्रेष्ठा ४ मणिच्छिद्रा ५ विभावरी ६ । इति रत्नमाला ॥ वसा ७ स्वल्पपर्णिका ८ मेदःसारा ९ स्नेहवती १० मेदिनी ११ मधुरा १२ स्निग्धा १३ मेधा १४ द्रवा १५ साध्वी १६ शल्यदा १७ बहुरन्ध्रिका १८ पुरुषदन्तिका १९ । अस्या गुणाः । मधुरत्वम् । शीतलत्वम् । पित्तदाहार्त्तिकाशराजयक्ष्मज्वरनाशित्वम् । वातदोषकारित्वञ्च । इति राजनिर्घण्टः ॥ तस्य लक्षणं यथा,

"शुक्लकन्दो नखच्छेद्यो मेदो धातुमिव स्रवेत् ।
यः स मेदेति विज्ञेयो जिज्ञासातत्परैर्जनैः ॥"

मेदामहामेदास्थाने शतावरी मूली । इति भावप्रकाशः ॥ अस्या विवरणं महामेदाशब्दे द्रष्टव्यम् ॥ (अनुकल्पोऽस्या यथा । "मेदाभावे चाश्वगन्धा ।" इति वैद्यकपरिभाषायाम् ॥ )

मेदिनी, स्त्री, ( मेदोऽस्या अस्तीति । मेद + इनिः । ङीप् ।) मेदा । काश्मरी । इति राजनिर्घण्टः ॥ पृथिवी । इत्यमरः । २ । १ । ३ ॥ मेदो विद्यतेऽस्यां मेदिनी शान्ताम्मेदःशब्दादिन् सलोपश्च निपात्यते इति परे । स्वमते मेदः समानार्थोऽदन्तो मेदशब्दोऽस्ति । तृष्णाकण्डु-

विनि:) शुक्लपर्णी। इति मेदिनी। ने, २०४॥ मदिरा। इति राजनिर्घण्ट:॥ पण्डित:। इति हेमचन्द्र:।३।६॥ शार्ङ्ग:। इति त्रिकाण्डशेष:॥ (कस्यचित् ब्राह्मणस्य पुत्त्र:। यथा, महाभारते, १२।१७५।३।
"द्विजाति: कस्यचित् पार्थ! स्वाध्यायनिरतस्य हि।
बभूव पुत्त्रो मेधावी मेधावी नाम नामत:॥")
मेधायुक्ते, त्रि। इति मेदिनी। ने, २०४॥ (यथा, रामायणे।१।४।६।
"स तु मेधाविनौ दृष्ट्वा वेदेषु परिनिष्ठितौ।
वेदोपबृंहणार्थाय तावग्राहयत प्रभु:॥")
तद्वैदिकपर्य्याय:। विप्र: १ विग्र: २ गृत्स: ३ धीर: ४ वेन: ५ वेधा: ६ कण्व: ७ ऋभु: ८ नवेदा: ९ कवि: १० मनीषी ११ मन्धाता १२ विधाता १३ विप: १४ मनश्चित् १५ विपश्चित् १६ विपन्यव: १७ आकेनिप: १८ उशिज: १९ कीनास: २० अद्धातय: २१ मतय: २२ मतुथा: २३ वाघत: २४। इति चतुर्व्विंशतिर्मेधाविनामानि। इति वेदनिघण्टौ।३।१५॥

मेधि:, पुं, (मेध्यते खले स्थाप्यते इति। मेध + "सर्व्वधातुभ्य इन्।" उणा० ४।११३। इति इन्।) खले पशुबन्धनार्थस्तम्भदारु। इत्यमर:।२।९।१५॥ खले धान्यमर्द्दनस्थानमध्ये पशुबन्धननिमित्तं निहितं यद्दारु स मेधि:। मेढ इति ख्याति। इति भरत:॥ तत्पर्य्याय:। मेथि: १ खलेवाली २। इति हेमचन्द्र:॥ अस्य स्थापनदिनं तत्र वारौ शुक्रहस्पती। नक्षत्राणि रेवती स्वाती हस्ता मघा मृगशिरश्च। तत्र लग्नं स्थिरम्। इति ज्योतिस्तत्त्वम्॥

मेधिर:, त्रि, (मेधास्यास्तीति। मेधा + "मेधारथाभ्यामिरन्निरचौ वक्तव्यौ।" ५।२।१०९। इति काशिकोक्त्या इरन्।) मेधावी। इति त्रिकाण्डशेष:॥ (यथा, ऋग्वेदे।१।२५।२०।
"त्वं विश्वस्य मेधिर! दिवश्च ग्मश्च राजसि।"
"हे मेधिर! मेधाविन्! वरुण।" इति तद्भाष्ये सायण:॥ यज्ञवान्। पण्डित:। यथा, ऋग्वेदे।१०।१००।६।
"इन्द्रस्य नु सुकृतं दैव्यं सहोऽग्निर्गृहे जरिता मेधिर: कवि:।"
"मेधो यज्ञ: तद्वान्।" इति तद्भाष्ये सायण:।)

मेधिष्ठ:, त्रि, (अयमेषामतिशयेन मेधावीति। मेधाविन् + "अतिशायने तमबिष्ठनौ।" ५।३।५५। इति इष्ठन्। "विन्मतोर्लुक्।" ५।३।६५। इति विनो लुक्।) अतिशयमेधायुक्त:। इति व्याकरणम्॥

मेध्यं, त्रि, (मेध्यते इति। मेध + "ऋहलोर्ण्यत्।" ३।१।१२४। इति ण्यत्। यद्वा, मेधामर्हतीति। मेधा + दण्डादित्वात् यत्।) पवित्रम्। इत्यमर:।३।१।५५॥ (यथा,—
"ज्ञानेन मेध्यमखिलममेध्यं ज्ञानतो भवेत्।
ब्रह्मज्ञाने समुत्पन्ने मेध्यामेध्यं न विद्यते॥"
इति चिन्तामणिधृतवचनम्॥)
"पवित्र: प्रयत: पूत इति सप्तवर्गे प्राप्तिविषयमात्र उक्तं इह त्वप्राणिविषये।" इति भरत:॥
"पूतं मेध्यं पवित्रं स्यात् शौचं प्रयतनिर्म्मलम्।
निरुद्धं शोधितं मृष्टं निर्णिक्तमनवस्करम्॥"
इति शब्दरत्नावली॥
(नित्यमेध्यम्। यथा, मनु:।५।१२९।
"नित्यं शुद्ध: कारुहस्त: पण्ये यच्च प्रसारितम्।
ब्रह्मचारिगतं भैक्ष्यं नित्यमेध्यमिति स्थिति:॥")
शुचि:। इति मेदिनी। ये, ४७॥ (यथा, अनर्घराघवे।२।१४।
"तत्तादृक्ष्लवपूतकोपनयनक्लेशाधिरूढैरिभि-
र्मेध्या वल्कतरी विरच्य वटुभि: शोलुष्ठमालम्ब्यते॥"
मेधाजनक:। यथा,—
"मण्डूकपर्ण्या: स्वरस: प्रयोज्य:
क्षीरेण यष्टीमधुकस्य चूर्णम्।
रसो गुडूच्यास्तु समूलपुष्प्या:
कल्क: प्रयोज्य: खलु शङ्खपुष्प्या:॥
आयु: प्रदान्यामयनाशनानि
बलाग्निवर्णस्वरवर्द्धनानि।
मेध्या विशेषेण च शङ्खपुष्पी॥"
इति चरके चिकित्सास्थाने प्रथमेऽध्याये॥)

मेध्य:, पुं, (मेधायै हित:। मेधा + "उगवादिभ्यो यत्।" ५।१।२। इति यत्।) खदिर:। यव:। छाग:। इति राजनिर्घण्ट:॥

मेध्या, स्त्री, (मेधायै हिता। मेधा + यत्। टाप्।) रक्तवचा। रोचना। इति मेदिनी। ये, ४७॥ केतकी। ज्योतिष्मती। शङ्खपुष्पी। ब्राह्मी। श्वेतवचा। शमी। मण्डूकी। इति राजनिर्घण्ट:॥ (नदीविशेष:। यथा, महाभारते। ३।२२१।२३।
"चर्म्मण्वती मही चैव मेध्या मेधातिथिस्तथा।")

मेनका, स्त्री, (मन्यते इति। मन् + "मनेराशिषि च।" इति वुन्। तत: "नञ्जिमन्योरलिङ्गत्वं वक्तव्यम्।" ६।४।१२०। इत्यत्र काशिकोक्त्या अकारस्य एत्वम्।) स्वर्व्वेश्या। इति शब्दरत्नावली॥ तस्या: कन्या शकुन्तला। यथा,—
"विश्वामित्रात्मजैवाहं त्यक्ता मेनकया वने।
वेदैतद्भगवान् कण्वो वीर! किं करवाम ते॥"
इति श्रीभागवते।९।२०।१३॥
(मेनैव। मेना + स्वार्थे कन्।) उमामाता। यथा,
"तत: प्रीतास्तु पितरस्तां ददुस्तनयां निजाम्।
मेनां देवाश्च शैलाय हिमयुक्ताय वै ददु:॥
तां मेनां हिमवाँल्लब्ध्वा प्रसादाद्दैवतेभ्यश्च।
प्रीतिमागमदव्यग्रो रराम च यथेच्छया॥
ततो हिमाद्रि: पितृकन्यया समं
सुखं सिषेवे विषयं यथेप्सितम्।
अजीजनत् सा तनयास्तु मेना
रूपाभियुक्ता: सुरयोषितोपमा:॥
पुलस्त्य उवाच।
मेनायां कन्यकास्तिस्रो जाता रूपगुणान्विता:।
सुनाभ इति विख्यातश्चतुर्थस्तनयोऽभवत्॥
नीलाञ्जनचयप्रख्या नीलेन्दीवरलोचना।
रूपेणानुपमा काली जघन्या मेनकासुता॥
जातास्ता: कन्यकास्तिस्र: षडब्दात् परतो मुने!।
कर्त्तुं तप: प्रयातास्ता देवास्ता ददृशु: शुभा:॥
ततो गते कन्यके द्वे ज्ञात्वा मेना तपस्विनी।
तपसो वारयामास उमे त्येवाब्रवीच्च सा॥
तदेव माता नामास्याश्चक्रे पितृसुता शुभा।
उमेत्येव हि कन्याया: सा जगाम तपोवनम्॥"
इति वामने ७४—७५ अध्याय:॥ ७॥
अपि च।
"कथं गिरिसुता काली बभूव जगतां प्रसू:।
दाक्षायणी महातन्त्र: कथमाप हरं पतिम्॥"
मार्कण्डेय उवाच।
यदाऽत्यजत्तनुं देवी पूर्व्वं दाक्षायणी सती।
तदैव मनसागच्छन्मेनकां हिमवद्गिरिम्।
त्यक्तप्राणा तदा देवी भूता हिमवत: सुता॥
शिवाविन्यस्तमनसा सप्तविंशतिवत्सरान्।
निनाय मेनका देवी परमार्त्तिमिच्छती॥
सप्तविंशतिवर्षान्ते जगन्माता जगन्मयी।
सुप्रीता भवदत्यर्थं प्राह प्रत्यक्षतां गता॥
श्रीदेव्युवाच।
यत् प्रार्थितं त्वया देवि! मत्तस्तत् प्रार्थयाधुना
तत: सा प्रथमं पुत्त्रशतं वव्रे यशस्विनी॥
पश्चात्तु तनयामेकां स्वरूपगुणशालिनीम्।
कुलद्वयानन्दकरीं भुवनत्रयदुर्लभाम्॥
ततो भगवती प्राह मेनकां मुनिसन्निभाम्॥
श्रीदेव्युवाच।
शतं पुत्त्रा: सम्भवन्तु भवत्या वीर्य्यसंयुता:।
सुता च तव देवानां मानुषाणाञ्च रक्षसाम्॥
हिताय सर्व्वजगतां भविष्याम्यहमेव ते।
एवमुक्त्वा जगद्धात्री तत्रैवान्तरधीयत॥
तत: सा कालिका देवी योगनिद्रा जगत्प्रसू:।
पूर्व्वत्यक्तसतीरूपा धन्यार्थं मेनकां ययौ॥
समयस्यानुरूपेण मेनकाजठरे शिवा।
संभूय समुत्पन्ना सा लक्ष्मीरिव सागरात्॥
वसन्तसमये देवी नवम्यां मृगयोगत:।
अर्द्धरात्रे समुत्पन्ना गङ्गेव शशिमण्डलात्॥"
इति कालिकापुराणे ४० अध्याय:॥

मेनकात्मजा, स्त्री, (मेनकाया आत्मजा।) दुर्गा। इति हलायुध:॥ (शकुन्तला। यथा, महाभारते।१।७२।११।
"नेमां हिंस्युर्व्वने बालां क्रव्यादा मांसगृद्धिन:।
पर्य्यरक्षन्त तां तत्र शकुन्ता मेनकात्मजाम्॥")

मेनकाप्राणेश:, पुं, (मेनकाया: प्राणेश: पति:।) हिमालय:। इति हेमचन्द्र:।४।९३॥

मेना, स्त्री, (मान्यते पूज्यते इति। मान पूजायाम् "वहुलमन्यत्रापि।" उणा० २।८६। इति इनच् प्रत्ययेन निपातनात् साधु:।) मेनका। इति भरतद्विरूपकोष:॥ सा पितृकन्या। यथा,

"तां मानसीं मेरुसखः पितॄणां
कन्यां कुलस्य स्थितये स्थितिज्ञः ।
मेनां मुनीनामपि माननीया-
मात्मानुरूपां विधिनोपयेमे ॥"

इति कुमारसम्भवे । १ । १८ ॥ * ॥

यथा च कौर्म्मे १२ अध्याये ।

"अग्निष्वात्ता बर्हिषदो द्विधा तेषां व्यवस्थितिः ।
तेभ्यः स्वाहा स्वधा जज्ञे मेना वैतरणी तथा ।"

( स्त्री । यथा, ऋग्वेदे । १ । ६२ । ७ ।

"भगो न मेने परमे व्योमन्नधारयद्रोदसी सुद
सा ।"

मेनेति स्त्रीनाम । मेने स्त्रीरूपमापन्ने रोदसी ।"
इति तद्भाष्ये सायणः । * । वृषणश्वकन्या ।
यथा, ऋग्वेदे । १ । ५१ । १३ ।

"मेना भवो वृषणश्वस्य ।"

"हे इन्द्र । त्वं वृषणश्वस्य एतदाख्यस्य राज्ञो
मेना भवः मेनानाम कन्यका भूः ।" इति तद्भाष्ये
सायणः । * । वाक् । इति निघण्टुः । १ । ११ ।
"मानपूज्यायाम् इत्यस्मात् 'बहुलमन्यत्रापि' इत्यप्
भवति । इति वचनादिनप् । बहुलग्रहणात्
नलोपः । पूज्यतेऽनया गुर्व्वादिरुपदेशवाक्येन
पूज्या वा देवतात्वात् ।" इति तट्टीकायां देव
राजयज्वा । * । नदीविशेषः । यथा, महा
भारते । ६ । ९ । २३ ।

"कारीषिणीमसिक्नीञ्च कुशचीरां महानदीम् ।
मरुद्वां प्रवरां मेनां हेमां घृतवतीं तथा ॥")

मेनाजा, स्त्री, (मेनाया जायते इति । जन् + ड ।
स्त्रियां टाप् । ) पार्व्वती । इति हेमचन्द्रः ॥

मेनादः पुं, ( मे इति नादोऽस्य । ) विडालः ।
छागः । मयूरः । इति मेदिनी । द, ३९ ॥

मेनाधवः पुं, (मेनाया धवः स्वामी ।) हिमालयः ।
इति त्रिकाण्डशेषः ॥

मेन्धिका, स्त्री, (मां शोभामिन्धयति प्रकाशयतीति ।
इन्ध + णिच् + ण्वुल् । टापि अत इत्वम् । )
क्षुपविशेषः । इति कश्चित् । मेहदी इति
भाषा ॥

मेन्धी, स्त्री, ( मां शोभामिन्धयतीति । इन्ध +
णिच् + अण् । गौरादित्वात् ङीष् । ) क्षुप
विशेषः । इति कश्चित् । मेहदी इति भाषा ।

मेप, ऋ ङ गत्याम् । इति कविकल्पद्रुमः ॥ (भ्वा०
आ० सक० सेट् । ) ङ, मेपते । ऋ, अमि
मेपत् । इति दुर्गादासः ॥

मेरकः, पुं दैत्यशत्रुभेदः । इति हेमचन्द्रः ॥

मेरुः, पुं, ( मि + "मिपीभ्यां रुः ।" उणा० ४ ।
१०१ । इति रुः । ) पर्व्वतविशेषः । तत्पर्य्यायः ।
सुमेरुः २ हेमाद्रिः ३ रत्नसानुः ४ सुरा
लयः ५ । इत्यमरः । मिनोति क्षिपति ज्योतींषि
उच्चत्वात् मेरुः । डुमि ञ् क्षेपे नाम्नीति
रुः । इति भरतः ॥ * ॥ (यथा मात्स्ये । १२१ । ८ ।
'इलावृतं त्वंशेयुतं प्रथमो मेरुरुच्यते ।
प्राग्भायतः सर्वौवर्षे उदयो नाम पर्व्वतः ॥")
जपमालायामध्यग्रन्थिका माला । यथा —

"मालामेकैकमादाय स्त्रञ्चे समानयेत् सुधीः ।
मुखे मुखन्तु संयोज्य पुच्छे पुच्छन्तु योजयेत् ।
गोपुच्छसदृशी कार्य्याथवा सर्पाकृतिर्भवेत् ।
ततस्तज्जातीयमेकाच मेरुत्वेनाग्रतो न्यसेत् ।"

इत्युत्पत्तितन्त्रे ६० पटलः । * ।

करमालायां मेरुर्यथा —

"निम्बोऽङ्गुलाग्निपर्व्वाग्री मध्यमा चैकपर्व्विका ।
पर्व्वद्वयं मध्यमाया मेरुत्वे नोपकल्पयेत् ।"

इदन्तु शक्तिभिन्नविषयम् । * ।

शक्तिविषये मेरुर्यथा,—

"पर्व्वद्वयमनामाया परिवर्त्तेन वै क्रमात् ।
पर्व्वत्रयं मध्यमायास्तर्ज्जन्यैक समाहरेत् ।
पञ्चदशं तर्ज्जन्या मेरुं तद्विद्धि पार्व्वति । ।'

श्रीविद्याविषये मेरुर्यथा,—

'अनामामध्यमायाश्च मूलाग्रन्तु द्वयं द्वयम् ।
कनिष्ठायाश्च तर्ज्जन्याश्चैव पञ्च सुरेश्वरि । ।
अनामामध्यमायाश्च मेरुः स्यादिदन्तु शुभम् ।"

तल्लङ्घनजो दोषो यथा,—

"अङ्गुल्यग्रे च यज्जप्तं यज्जप्तं मेरुलङ्घने ।
पर्व्वसन्धिषु यज्जप्तं तत् सर्व्वं निष्फलं भवेत् ।"

इति तन्त्रसारः ॥

मेरुकः, पुं (मिनोति क्षिपति गन्धानिति । मि +
रुः । स्वार्थे कन् । ) यक्षधूपः । इति शब्द
चन्द्रिका । धुना इति भाषा । ( मध्यदेशस्य
प्रदेशभेदः । यथा, वृहत्संहितायाम् । १४ । २९ ।
'रैवान्तं मेरुकनष्टराज्यपशुपालकीरकाश्मी
राः ।
अभिसारदरदतङ्गणकुलूतसैरिन्ध्रवनराष्ट्राः ॥")

मेरुसावर्णः, पुं, एकादशमनुः । यथा —

"ततस्तु मेरुसावर्णो ब्रह्मसूनुर्मनुः स्मृतः ।
ऋतुश्च ऋतुधामा च विश्वक्सेनो मनुस्तथा ।'

इति मात्स्ये ९ अध्यायः ॥

मेलकः, पुं ( मिल + भावे घञ् । स्वार्थे कन् । )
सङ्गः । इत्यमरः । ३ । २ । २९ ॥ ("बहुमान्य
मेलके बलाबलमुक्तम् ।" इति । २ । १३६ ।
मनुटीकायां कुल्लूकभट्टः ॥ )

मेलकलवणं, क्ली, ( मिलतीति । मिल + ण्वुल् ।)
मेलकं लवणम् । ) चौषरलवणम् । इति राज
निर्घण्टः ॥

मेला, स्त्री, ( मिल + णिच् + अङ् । टाप् । )
मेलकः । मषिः । इति मेदिनी । ले ४६ ॥
अञ्जनम् । इति हेमचन्द्रः । महानीली । इति
राजनिर्घण्टः ॥

मेलानन्दा, स्त्री, (मेलया मस्या आनन्दो यस्याः ।)
मस्याधारः । इति हारावली ॥

मेलान्धुः, स्त्री, ( मेलायाः अन्धुः कूपिका ।) मस्या
धारः । इति जटाधरः ।

मेलाम्बुः पुं, ( मेलैव अम्बु अत्र । ) मस्याधारः ।
इति शब्दरत्नावली ॥

मेव ऋ ङ सेवने । इति कविकल्पद्रुमः ॥ ( भ्वा०
आत्म० सक० सेट् । ) ऋ, अमिमेवत् । ङ,
मेवते । इति दुर्गादासः ॥

मेषः, पुं ( मिषति अन्योन्यं स्पर्द्धते इति । मिष
स्पर्द्धायाम् + अच् । ) पशुविशेषः । मेढा इति
भेडा इति च भाषा । (यथा, पञ्चतन्त्रे । ५ । ६२ ।
'मेषेण सूपकाराणां कलहो यत्र वर्त्तते ।
स भविष्यत्यसन्दिग्धं वानराणां भयावहः ॥")
तत्पर्य्यायः । मेढ्रः २ उरभ्रः ३ उरणः ४
ऊर्णायुः ५ वृष्णिः ६ एडकः ७ । इत्यमरः । २ ।
९ । ७६ ॥ मेढ़ः ८ हुडः ९ मर्द्धिरः १०
अविः ११ लोमशः १२ बली १३ रोमशः १४
मेडुः १५ भेडकः १६ मेण्टः १७ हुडुः १८ ।
इति शब्दरत्नावली । मेण्टकः १९ हुडः २०
संफलः २१ । इति हेमचन्द्रः । ४ । ३४१ ॥
अस्य मांसगुणाः । मधुरत्वम् । शीतलत्वम् ।
गुरुत्वम् । विष्टम्भित्वम् । वृंहणत्वञ्च । इति
राजनिर्घण्टः । अपि च । पित्तश्लेष्मकरत्वम् ।
वृहणत्वम् । मधुरत्वञ्च । इति राज
वल्लभः ॥ * ॥ लग्नविशेषः । औषधविशेषः ।
इति मेदिनी । षे, १२१ ॥ ( यथा, सुश्रुते
उत्तरतन्त्रे । १७ अध्याये ।

'मेषस्य पुष्पैर्मधुकेन सयुतं
नरस्तु सर्व्वकृते प्रयोजयेत् ।
क्रियाञ्च सर्व्वां घृतजोद्भवे हिता
क्रमं परिम्लायिनि चापि पित्तजे ॥")

राशिविशेषः । तत्पर्य्यायः । क्रियः २ । (यथा,
श्रीमद्भागवते । ५ । २१ । ४ । "यदा मेषतुलयोर्वर्त्तते
तदाहोरात्राणि समानानि भवन्ति । यदा
वृषभादिषु पञ्चसु च राशिषु चरति तदाहा
न्येव वर्द्धन्ते ह्रसति च मासि मासि एकैका
घटिका रात्रिषु ।") अस्याधिष्ठात्री देवता
पुमेषः । अश्विनीभरणीकृत्तिकापादैकेन मेष
राशिर्भवति । अत्र जातः दृष्टश्चो भवति ।
मेषदशाया नेत्ररुक् स्त्री दयालुः धनी मानसुखी
धार्म्मिकः धीरः सत्यभाषाशी च । स तु
पृष्ठोदयः । अस्य वर्णः । आरक्तपीतश्च ।
चयः क्रूरः । पित्तोष्णस्वभावः । कान्तिरहितः ।
समानाङ्गः । पञ्चचारी । पूर्व्वदिगधिपतिः ।
वैश्यवर्णः । अल्पस्त्रीसङ्गः । अल्पसन्तानः ।
सुहृत् । अतिरवश्च । इति ज्योतिषम् ॥ * ॥
रव्याश्रिततद्राशिजातफलं यथा,—

'मेषे दिनेशे पुरुषः सुवर्ण-
सत्साहसः स्यान्नृपतेः समानः ।
रुजा युतः पित्तकृता च पीडा
वक्रोऽथवा वा सततं महौजाः ।" * ॥

चन्द्राश्रिततद्राशिजातफलं यथा —

'स्थिरमना रहितः स्वजनैर्नरः
सुतयुतः प्रमदाविजितो भवेत् ।
अजगतः द्विजराज इतीरितः
विधुतयाद्भुतया सहितः श्रिया ।" * ॥

तल्लग्नजातफलं यथा,—

'मेषलग्ने समुत्पन्नश्चण्डो मानी धनी शुभः ।
क्रोधी स्वजनहन्ता च विक्रमी परवत्सलः ॥"

इति कोष्ठीप्रदीपः ॥

तल्लग्नस्य स्थूलमानम् । ३ । ४१ । इति ज्योतिस्तत्त्वम् ॥ *॥ चित्रारकशराकृतिश्रवणानक्षत्रस्य गगनमध्योदये मेषलग्नस्य अष्टादशपलाधिकदण्डैको गतो भवेत् । यथा,—

"तारकात्रयमिते शराकृतौ
केशवे गगनमध्यवर्त्तिनि ।
मत्तवारणगतेऽवलग्नतो
निर्य्ययुर्गजमहीपलिप्तिकाः ॥"

मर्द्दलाकृतिधनतारकधनिष्ठानक्षत्रस्य मस्तकोपर्य्युदये मेषलग्नस्य षट्त्रिंशत्पलाधिकदण्डद्वयं गतं स्यात् । यथा,—

"मस्तकोपरि समागते धने
मर्द्दलाकृतिनि पञ्चतारके ।
यान्ति कान्तिमति मेषलग्नतः
सायकाब्धि रसपक्षलिप्तिकाः ॥"

इति कालिदासकृतरात्रिलग्ननिरूपणम् ॥

मेषकः, पुं, ( मिषतीति । मिष् + अच् । संज्ञायां कन् । ) जीवशाकः । राजनिर्घण्टः ॥

मेषकम्बलः, पुं, ( मेषलोमनिर्म्मितः कम्बलः । मध्यपदलोपी कर्म्मधारयः । ) मेषलोमनिर्म्मितवस्त्रम् । तत्पर्य्यायः । ऊर्णायुः २ । इत्यमरः । २ । ६ । १०७ ॥

मेषलोचनः, पुं, ( मेषस्य लोचनमिव पुष्पमस्य । ) चक्रमर्द्दः । इति भावप्रकाशः ॥ मेषचक्षुस्तुल्यचक्षुषि, त्रि ॥

मेषवल्ली, स्त्री, ( मेषप्रिया वल्ली । ) अजशृङ्गी । इति भावप्रकाशः ॥

मेषविषाणिका, स्त्री, ( मेषस्य विषाणं शृङ्गमिव प्रतिकृतिरस्याः । विषाण + प्रतिकृतौ कन् । टापि अत इत्वम् । ) मेषशृङ्गी । इति रत्नमाला ॥

मेषशृङ्गः, पुं, (मेषस्य शृङ्गमिव । तदाकृतित्वात् ।) स्थावरविषभेदः । इति हेमचन्द्रः । ४ । २६३ ॥ ( यथा, सुश्रुते उत्तरतन्त्रे । १७ अध्याये ।
"मेषशृङ्गस्य पुष्पाणि शिरीषधवयोरपि ॥")

मेषशृङ्गी, स्त्री, (मेषशृङ्ग + गौरादित्वात् ङीष् ।) अजशृङ्गीवृक्षः । मेढ़ाशृङ्गी इति भाषा । (यथा, सुश्रुते । १ । ३८ ।
"मेषशृङ्गी मातुलुङ्गी सुवर्णीत्यादि ॥")
तत्पर्य्यायः । नन्दीवृक्षः २ मेषविषाणिका ३ चक्षुः ४ चक्षुर्बन्धनम् ५ मेढ़्रशृङ्गी ६ सर्पदमा ७ । इति रत्नमाला ॥ (तथास्याः पर्य्यायो गुणाश्च ।
"मेषशृङ्गी विषाणी स्यान्मेषवल्ल्यजशृङ्गिका ॥
मेषशृङ्गी रसे तिक्ता वातला श्वासकासहृत् ।
रूक्षा पाके कटुस्तिक्ता व्रणश्लेष्माक्षिशूलहृत् ॥
मेषशृङ्गीफलं तिक्तं कुष्ठमेहकफप्रणुत् ।
दीपनं स्रंसनं कासकृमिव्रणविषापहम् ॥"
इति भावप्रकाशस्य पूर्व्वखण्डे प्रथमे भागे ॥)

मेषा, स्त्री, (मिष्यतेऽसौ । मिष् + कर्म्मणि घञ् । टाप् । ) त्रुटिः । इति शब्दचन्द्रिका । गुजराटी एलाइच इति भाषा ॥

मेषाक्षिकुसुमः, पुं, ( मेषाया अक्षिवत् कुसुमान्यस्य । ) चक्रमर्द्दः । इति रत्नमाला ॥

मेषाण्डः, पुं, ( मेषस्याण्डमिवाण्डमस्य । ) इन्द्रः । इति पुराणम् ॥

मेषान्त्री, स्त्री, ( मेषस्य अन्त्रमिव अन्त्रं फलावरणं यस्याः । ) वज्रान्त्रीवृक्षः । इति राजनिर्घण्टः ॥

मेषालुः, पुं, ( मेषप्रियः आलुः । ) वर्व्वरावृक्षः । इति शब्दचन्द्रिका ॥

मेषाह्वयः, पुं, (मेषस्याह्वयः आख्यास्य ।) चक्रमर्द्दः । इति राजनिर्घण्टः ॥ ( विवरणमस्य चक्रमर्द्दशब्दे ज्ञातव्यम् ॥ )

मेषिका, स्त्री, ( मेषी + स्वार्थे कन् । टाप् । ह्रस्वः । ) मेषी । इति शब्दरत्नावली ॥

मेषी, स्त्री, ( मिष्यते गच्छति स्वर्गं इति । मिष + घञ् । ङीष् । ) तिनिशवृक्षः । जटामांसी । इति राजनिर्घण्टः ॥ मेषस्त्रीजातिः । भेंड़ी । ( यथा, वाजसनेयसंहितायाम् । ३ । ५८ ।
"भेषजमसि भेषजं गवेऽश्वाय पुरुषाय भेषजं सुखं मेषाय मेष्यै ॥")
तत्पर्य्यायः । जालकिनी २ अविः ३ । इति त्रिकाण्डशेषः ॥ एडका ४ मेषिका ५ इति शब्दरत्नावली । कुररी ६ रजा ७ अविला ८ वेणी ९ । इति हेमचन्द्रः । ४ । ३४३ । अस्या दुग्धगुणाः । मधुरत्वम् । गाढ़त्वम् । स्निग्धत्वम् । कफापहत्वम् । वातामयकरत्वम् । स्थौल्यत्वम् । लोमशायाश्चेत् गुरुत्वम् । वृद्धिदत्वञ्च । इति राजनिर्घण्टः ॥ *॥ अपि च ।
"आविकं लवणं स्वादु स्निग्धोष्णं चाश्मरीप्रणुत् ।
अहृद्यं तर्पणं केश्यं शुक्रपित्तकफप्रदम् ।
गुरुकासेऽनिलोद्भूते केवले वानिले वरम् ॥"
इति भावप्रकाशः ॥
अस्या दधिगुणाः । सुस्निग्धत्वम् । कफपित्तकरत्वम् । गुरुत्वम् । वाते रक्तवाते च पथ्यत्वम् । शोफव्रणनाशित्वञ्च ॥ *॥ अस्या नवनीतगुणाः । क्लिष्टगन्धत्वम् । शीतलत्वम् । मेधाहरत्वम् । पुष्टिदत्वम् । स्थौल्यत्वम् । मन्दाग्निदीपनत्वम् । सारकत्वम् । पाके हिमत्वम् । लघुत्वम् । योनिशूले कफे वाते दुर्नाम्नि च हितत्वञ्च । दुर्नाम्नि स्थाने गुदशूले इति पुस्तकान्तरे पाठः ॥ *॥ तस्या घृतगुणाः । अतीवगौरवात् सुकुमारदेहिनां वर्ज्ज्यत्वम् । बुद्धिपाटवहरत्वम् । बलावहत्वम् । वपुषां विसगन्धिकारित्वञ्च । इति राजनिर्घण्टः ॥ तन्मांसगुणाः । यथा, भावप्रकाशे ।
"छागमेषवृषाश्वाद्याः ग्राम्याः प्रोक्ता महर्षिभिः ।
ग्राम्या वातहराः सर्व्वे दीपनाः कफपित्तलाः ।
मधुरा रसपाकाभ्यां वृंहणा बलवर्द्धनाः ॥"

मेषूरणं, क्ली, दशमलग्नम् । यथा,—
"कर्म्मस्थानञ्च दशमं खं मेषूरणमास्पदम् ।"
इति ज्योतिस्तत्त्वम् ॥

मेहः, पुं, (मेहति क्षरति शुक्रादिरनेनेति । मिह् + घञ् ।) प्रमेहरोगः । इत्यमरः । २।६।५६ ॥ (अस्यौषधं यथा,—
"वङ्गभस्म द्विवल्लञ्च लेहयेन्मधुना सह ।
ततो गुड़समं गन्धं भक्षयेत् कर्षमात्रकम् ॥
गुडूचीसत्त्वमथवा शर्करासहितन्तथा ।
सर्व्वमेहहरो ज्ञेयो वङ्गावलेह उत्तमः ॥"
इति वङ्गावलेहः ॥
"भस्मसूतं समं कान्तमभ्रकन्तु शिलाजतु ।
शुद्धताप्यं शिलाव्योषं त्रिफलाङ्कोटबीजकम् ॥
कार्पासमज्जारजनी समं भावञ्च भृङ्गिणा ।
विंशद्वारं विशोष्याथ मधुयुक्तं लिहेत् सदा ॥
माषमात्रं हरेन्मेहं मेघनादरसो महान् ॥"
इति मेघनादरसः ॥
"रसभस्म समायुक्तं वङ्गभस्म प्रकल्पयेत् ।
अस्य माषद्वयं हन्ति मेहान् पौढ़समन्वितम् ॥"
इति वङ्गेश्वररसः ॥
इति वैद्यकरसेन्द्रसारसंग्रहे प्रमेहाधिकारे ॥
अन्यत् प्रमेहशब्दे द्रष्टव्यम् ॥ * ॥ मिहतीति । मिह + अच् । ) मेषः । इति शब्दचन्द्रिका ॥ प्रस्रावः । इति हेमचन्द्रः । ३।२८७ । (अस्याग्न्यादिमुखं तत्करणे दोषो यथा, मनौ । ४।५२ ।
"प्रत्यग्निं प्रतिसूर्य्यञ्च प्रतिसोमोदकद्विजान् ।
प्रतिगां प्रतिवातञ्च प्रज्ञा नश्यति मेहतः ॥"
"अग्निसूर्य्यचन्द्रजलब्राह्मणगोवाताभिमुखं मूत्रपुरीषे कुर्व्वतः प्रज्ञा नश्यति ।" इति तट्टीकायां कुल्लूकभट्टः ॥ )

मेहघ्नी, स्त्री, (मेहं हन्तीति । हन् + टक् । ङीप् ।) हरिद्रा । इति रत्नमाला ॥

मेहनं, क्ली, (मेहति सिञ्चति मूत्ररेतसीति । मिह सेचने + ल्युट् । ) शिश्नः । इत्यमरः । २।६।७६ ॥ ( यथा, ऋग्वेदे । १० । १६३ । ५ ।
"मेहनाद्वंकरणाल्लोम ।"
"मेहनात् मेढ्रात् ।" इति तद्भाष्ये सायणः ॥ यथा, च सुश्रुते । १ । ३५ ।
"ह्रस्वानि यस्य पर्व्वाणि सुमहच्चापि मेहनम् ।
तथोरस्यवलीढ़ानि न च स्यात् पृष्ठमायतम् ॥
ऊर्द्ध्वञ्च श्रवणौ स्थानान्नासा चोच्चा शरीरिणः ।
हसतो जल्पतो वापि दन्तमांसं प्रदृश्यते ।
प्रेक्षते यश्च विभ्रान्तं स जीवेत् पञ्चविंशतिम् ॥")
मूत्रम् । इति मेदिनी । ने, ११० ॥ ( यथा, सुश्रुते । १ । ३२ ।
"वस्तवद्विलपन् यश्च भूमौ पतति सस्तमुष्कस्तब्धमेढ्रो भग्नग्रीवः प्रणष्टमेहनश्च मनुष्यः ॥")
भावेऽनट् प्रलये मूत्रोत्सर्गे च ॥

मेहनः, पुं, ( मेहति क्षिपति रसमिति । मिह + ल्युः । ) मुष्ककवृक्षः । इति राजनिर्घण्टः ॥

मेहना, स्त्री, ( मेह्यते धार्य्यते शुक्रमस्यामिति । मिह धारणे + णिच् + अधिकरणे युच् । स्त्रियां टाप् ।) महिला । इति केचित् ॥ (मेहनीयम् । यथा, ऋग्वेदे । ५ । ३९ । १ ।
"यदिन्द्र चित्र मेहनास्ति त्वादातमद्रिवः ॥")

मैत्रं क्ली, ( मित्रादागतमिति । यद्वा, मित्रस्येदमिति । मित्र+"तस्येदम् ।" ४।३।१२० । इति अण् ।) अनुराधानक्षत्रम् १७ । यथा,—

"मैत्राद्यपादे स्वपितीह विष्णु-
र्वैष्णव्यमध्ये परिवर्त्तते च ।
पौष्णावसाने च सुरारिहन्ता
प्रबुध्यते मासचतुष्टयेन ॥"

इति तिथ्यादितत्त्वम् ॥ * ॥

(मित्र सूर्य्यो देवतास्येति । आदित्यलोकः । यथा, महाभारते । १२ । ३१७ । ३ ।
'पायुनोत्क्रममाणस्तु मैत्रं स्थानमवाप्नुयात् ।
पृथिवीं जघनेनाथ ऊरुभ्याञ्च प्रजापतिम् ॥"
यद्वा, मनुः । १२ । ७२ ।
'मैत्राक्षज्योतिकः प्रेतो वैश्यो भवति पूयभुक् ॥') पुरीषोत्सर्गः । यथा,—
"तत्र कल्ये समुत्थाय कुर्य्यान्मैत्रं नरेश्वर ।
मैत्र्यत्याग्निविक्षेपमतोयाभ्यधिकं भुवः ।
कल्य उषःकालम् । मैत्रं मित्रदेवताकपायुस्थत्वात् पुरीषोत्सर्गः ।" इत्याह्निकाचारतत्त्वम् ।
अपि च ।
"ब्राह्मे मुहूर्त्ते चोत्तिष्ठेत् सुस्थो रक्षार्थमायुषः ।
शरीरचिन्तां निर्व्वर्त्त्य मैत्रं कर्म्म समाचरेत् ॥'
मैत्रं मलमूत्रोत्सर्गः । इति राजवल्लभः ॥ * ॥
तत्र निषिद्धस्थानादि यथा,—
'छायाकूपनदीगोष्ठचैत्याम्भःपथिभस्मसु ।
अग्नौ चैव श्मशाने च विण्मूत्रे न समाचरेत् ।
न गोमये न कृष्टे वा महावृक्षे च शाड्वले ।
न तिष्ठन् वा न निर्व्वासा न च पर्व्वतमस्तके ।
न जीर्णदेवायतने न वल्मीके कदाचन ।
न ससत्त्वेषु गर्त्तेषु न गच्छन् वा समाचरेत् ।
तुषाङ्गारकपालेषु राजमार्गे तथैव च ।
न क्षेत्रे न विले वापि न तीर्थे न चतुष्पथे ।
नद्यां नदसमीपे वा नोषरे न पराशुचौ ।
न सोपानत्पादुको वा छत्री वा नान्तरीक्षके ।
न चैवाभिमुखे स्त्रीणां गुरुब्राह्मणयोर्गवाम् ।
न देवदेवालययोरपामपि कदाचन ।
न ज्योतींषि निरीक्षन् वा न वायुभिमुखोऽथवा ।
प्रत्यादित्यं प्रत्यनलं प्रतिसोमं तथैव च ।'

इति कौर्म्मे उपविभागे १२ अध्यायः ।

अस्य विस्तारस्तु पाद्मे उत्तरखण्डे १८० अध्याये द्रष्टव्यः ॥ * ॥ (मित्रस्य भावः । मित्र+ष्यञ् । मित्रता । यथा, मनुः । ८ । ११८ ।
"लोभान्मोहाद्भयान्मैत्रात् कामात् क्रोधात्तथैव च ।
अज्ञानाद्बालभावाच्च साक्ष्यं वितथमुच्यते ॥")
त्रि, मित्रसम्बन्धी । (यथा, महाभारते । १२ । १३३ । २१ ।
"पिशुनां पि न भाषन्ते मित्रभिन्करीं गिरम् ।
अत मैत्रञ्च भाषन्ते नैव नरा स्वर्गगामिनः ॥"
मित्रताप्राप्तः । यथा, श्रीमद्भगवद्गीतायाम् । १२ । १३ ।
"अद्वेष्टा सर्व्वभूतानां मैत्रः करुण एव च ।
निर्म्ममो निरहङ्कारः समदुःखसुखः क्षमी ॥"
"मित्रभावो मैत्री मित्रतया वर्त्तते ।" इति श्रीशङ्करभाष्यम् । "मैत्रः स्निग्धः दीनेषु कृपालुः ।" इति श्रीधरस्वामी । "मैत्री मित्रता तद्वान् मैत्रः ।" इति श्रीमधुसूदनसरस्वती ॥ )

मैत्रः, पुं ब्राह्मणः । इति त्रिकाण्डशेषः ॥ (यथा, मनुसंहितायाम् । २ । ८७ ।
"जप्येनैव तु संसिध्येद् ब्राह्मणो नात्र संशयः ।
कुर्य्यादन्यन्न वा कुर्य्यान् मैत्रो ब्राह्मण उच्यते ॥"
'मित्रमेव मैत्रः स्वार्थे अण् ।" इति तट्टीकायां मेधातिथिकुल्लूकौ ॥ (उन्मुहूर्त्तात् तृतीयमुहूर्त्तः । तथा च बृहस्पतिः ।
"आर्द्रं सार्पस्तथा मैत्रः शुभो वायव एव च ॥"
यथा, कुमारे । ७ । ६ ।
'मैत्रे मुहूर्त्ते शशलाञ्छनेन
योगं गतासूत्तरफल्गुनीषु ॥'
वर्णसङ्करविशेषः । यथा मनुः । १० । २३ ।
"वैश्यात्तु जायते व्रात्यात् सुधन्वाचार्य्य एव च ।
कारुषश्च विजन्मा च मैत्रः सात्वत एव च ॥")

मैत्रभ, क्ली, ( मैत्रञ्च तत् भञ्चेति ।) अनुराधानक्षत्रम् । इति जटाधरः ॥

मैत्रावरुण, पुं, (मित्रश्च वरुणश्चेति । "देवताद्वन्द्वे च ।" ६।३।२६ । इत्यानङ् । तत 'देवताद्वन्द्वे च ।"७ । ३ । २१ । इति मित्रस्य वृद्धिः । 'दीर्घाच्च वरुणस्य ।" ७ । ३ । २३ । इति वरुणस्य न वृद्धिः । तयोरपत्यमिति । मित्रावरुण+अण् ।) अगस्त्यः । इति शब्दरत्नावली ॥ (यथा, अथर्व्ववेदे । ५ । १९ । १५ ।
'न वर्षं मैत्रावरुणं ब्रह्मज्यमभिवर्षति ॥'
अस्य विवरणं यथा, ऋग्वेदे । ७ । ३३ । ११ ।
"उतासि मैत्रावरुणो वसिष्ठोर्व्वश्या ब्रह्मन् मनसोऽधिजातः ।
द्रप्सं स्कन्नं ब्रह्मणा दैव्येन विश्वे देवाः पुष्करे त्वाददन्त ॥"
'उतापि च हे वसिष्ठ ! मैत्रावरुणः मित्रावरुणयोः पुत्रोऽसि ब्रह्मन् वसिष्ठ । उर्व्वश्या अप्सरसा मनसो ममायं पुत्रः स्यादिति ईदृशात् सङ्कल्पात् द्रप्सं रेतः मित्रावरुणयोरुर्व्वशीदर्शनात् स्कन्नमासीत् । तस्मादधिजातोऽसि । तथा च वक्ष्यते । सत्रे ह जाताविषिता । एवं जातं त्वां दैव्येन देवसम्बन्धिना ब्रह्मणा मदराशिना अहङ्कारेण युक्तं पुष्करे विश्वेदेवा अददन्त अधारयन्त । तथाचादितर्मित्रावरुणौ लभेते इति प्रसङ्गं वक्ष्यते ।
तयारादित्ययोः सत्रे दृष्ट्वाप्सरसमुर्व्वशीम् ।
रेतश्चस्कन्द तत्कुम्भे न्यपतद्वासतीवरे ।
तत्रैव तु मुहूर्त्तेन वीर्य्यवन्तौ तपस्विनौ ।
अगस्त्यश्च वसिष्ठश्च तत्रर्षी सम्बभूवतुः ।
बहुधा पतितं रेतः कलशे च जले स्थले ।
स्थले वसिष्ठस्तु मुनिः सम्भूत ऋषिसत्तमः ।
कुम्भे त्वगस्त्यः सम्भूतो जले मत्स्यो महाद्युतिः ।
उदियाय ततोऽगस्त्यः शम्यामात्रो महातपाः ।
मानेन सम्मितो यस्मात्तस्मान्मान्य इहोच्यते ।
यद्वा कुम्भादृषिर्जातः कुम्भेनापि हि मीयते ।
कुम्भ इत्यभिधानञ्च परिमाणस्य लक्ष्यते ।
ततोऽप्सु गृह्यमाणासु वसिष्ठः पुष्करे स्थितः ।
सर्व्वतः पुष्करे तं हि विश्वे देवा अधारयन् ॥'

इति तद्भाष्ये सायणः ॥)

मैत्रावरुणि पुं (मैत्रावरुणयोरपत्यमिति । मैत्रावरुण+"अत इञ् ।" ४ । १ । ९५ । इति इञ् ।) अगस्त्यः । इत्यमरः । १ । ३ । २० ( यथा, महाभारते । ३ । १०३ । १४ ।
'तेऽभिगम्य महात्मानं मैत्रावरुणिमच्युतम् ।
आश्रमस्थं तपोराशिं कर्म्मभिः स्वैरभिष्टुवन् ॥")

मैत्री, स्त्री ( मैत्र+ङीप् । यद्वा, मित्र+भावे ष्यञ्+ङीष् । तत "हलस्तद्धितस्य ।" ६ । ४ । १५० ।" इति यलोपः ।) मित्रस्य भावः । मित्रस्य कर्म्म । इत्यमरभरतौ । चतुर्विंशे मैत्रीकरणनिषेधो यथा,—
"विद्विष्टपतितोन्मत्तबहुवैरातिकीटकैः ।
बन्धकीबन्धकीभर्तृक्षुद्रानृतकथैः सह ।
तथातिव्ययशीलैश्च परीवादरतैः शठैः ।
बुधो मैत्रीं न कुर्व्वीत नैकः पन्थानमाश्रयेत् ॥"
इति विष्णुपुराणे तृतीयेऽंशे ११ अध्यायः ।
"विद्विष्टादिभिर्मैत्रीं न कुर्व्वीत । बहुभिर्वैरं यस्य । अतिकीटकः अत्यन्तं कीटवत् पीडकः । कण्टकैरिति पाठेऽपि स एवार्थः । बन्धकी असती ।" इति तट्टीका ॥

मैत्रीबल, पुं, (मैत्री मित्रता बलमस्य ।) बुद्धः । इति त्रिकाण्डशेषः ॥

मैत्रेय, पुं, (मैत्रे मित्रतायां साधुरिति । मैत्र+ढञ् ।) बुद्धभेदः । इति त्रिकाण्डशेषः ॥ ( मित्रयोः अपत्यमिति । मित्रयु+'गृष्ट्यादिभ्यश्च ।" ४ । १ । १३६ । इति ढञ् । तत 'केकयमित्रयुप्रलयानां यादेरियः ।"७ । ३ । २ । इति युस्थाने इयादेशे प्राप्ते । "दाक्षिणायनशालिनायन । ६ । ४ । १७४ । इति युलोपो निपातितः ।) मुनिविशेषः । यथा,—
'एवं ब्रुवाणं मैत्रेयं द्वैपायनसुतो बुधः ।
प्रीणयन्निव भारत्या विदुरः प्रत्यभाषत ॥'

इति श्रीभागवते । ३ । ७ । १ ॥

( सूर्य्यः । यथा, महाभारते । ३ । ३ । २० ।
'दृढकर्म्मा प्रशान्तात्मा विश्वात्मा विश्वतोमुखः ।
चराचरात्मा सूक्ष्मात्मा मैत्रेयः करुणान्वितः ॥'
वर्णसङ्करजातिविशेषः । यथा, मनुसंहितायाम् । १० । ३३ ।
"मैत्रेयकन्तु वैदेहो माधूकं सम्प्रसूयते ।
नॄन् प्रशंसत्यजस्रं यो घण्टाताडोऽरुणोदये ॥"
"मैत्रेयकनाम्ना वर्णम् । इति तत्र मेधातिथिः । स्त्री । मैत्रेयेन उच्चारिता मैत्रेयी उपनिषद् । याज्ञवल्क्यस्य पत्नी च ।) मित्रसम्बन्धिनि, त्रि ॥

(मित्रयुवंशोद्भवादौ च । यथा, हरिवंशे । ३२ । ७१—७८ ।
"अत ऊर्द्ध्वं प्रवक्ष्यामि दिवोदासस्य सन्ततिम् ।
दिवोदासस्य दायादो ब्रह्मर्षिर्मित्रयुर्नृप: ।
मैत्रायणी तत: शाखा मैत्रेयास्तु तत: स्मृता: ॥")

मैत्रेयिका, स्त्री, मित्रयुद्धम् । इति त्रिकाण्डशेष: ॥ ( मित्रयूनां भाव: कर्म्म वा । मित्रयु+"गोत्रचरणाच्छ्लाघात्याकारतदवेतेषु ।" ५।१।१३४ । इति वुञ् । तत: "केकयमित्रयुप्रलयानां यादेरिय: ।" ७ । ३ । २ । इति इयादेश: । यथा, "मैत्रेयिकया श्लाघते ।" इति काशिका । ७ । ३ । २ ॥ )

मैत्रं, क्ली, स्त्री, (मित्र+ष्यञ् ।) मित्रस्य भाव: । मित्रस्य कर्म्म । इत्यमरभरतौ । ३ । ५ । ३६ ॥ (यथा, पञ्चतन्त्रे । ४ । ७० ।
"प्राहु: साप्तपदं मैत्र्यं जना: शास्त्रविचक्षणा: ।
मित्रताञ्च पुरस्कृत्य किञ्चिद्वक्ष्यामि तच्छृणु ॥")

मैथिली, स्त्री, (मिथिला निवासोऽस्येति । मिथिला+"सोऽस्य निवास: ।" ४ । ३ । ८९ । इति अण् । मैथिलस्तन्नामा राजा तस्यापत्यं स्त्री । मैथिल+इञ् । ङीष् ।) सीता । इति हेमचन्द्र: ॥ ( यथा, भट्टिकाव्ये । २ । ४७ ।
"हिरण्मयी शाललतेव जङ्गमा
च्युतादिव: स्थास्नुरिवाचिरप्रभा ।
शशाङ्ककान्तेरधिदेवताकृति:
सुता ददे तस्य सुताय मैथिली ॥"
मिथिलापतिमात्रे, पुं । यथा, महाभारते । १२ । ६६ । ३ ।
"जनको मैथिलो राजा महात्मा सर्व्वतत्त्ववित् ।
योधान् स्वान् दर्शयामास स्वर्गं नरकमेव च ॥")

मैथुनं, क्ली, ( मिथुने सम्भवतीति । मिथुन+"संभूते ।" ४।३।४१ । इति अण् । मिथुनस्येदमित्यण् वा ।) अग्न्याधानम् । यथा, मनुशातातपौ ।
"असपिण्डा च या मातुरसगोत्रा च या पितु: ।
सा प्रशस्ता द्विजातीनां दारकर्म्मणि मैथुने ।
मैथुने मिथुनशब्दवाच्ये स्त्रीपुंसाध्ये अग्न्याधानप्रयोगमत्तादौ ।"इत्युद्वाहतत्त्वम् ॥ * ॥ सङ्गतम् । रतम् । इत्यमर: ।३।३।१२१॥ "सङ्गति: सङ्गमो दारसंयोग: विवाह इति कलिङ्ग: ॥ रतं सुरतम् । अनयोर्मैथुनम् । मिथुनात् सङ्गमे इदमर्थे स्वार्थे रतौ निष्पाद्यार्थे वा ष्ण: । सम्बन्धे सुरते युग्मे राशौ मिथुनमिष्यते । इति याडि: ।" इति तट्टीकायां भरत: ॥ * ॥ शेषस्य पर्य्याय: । सुरतम् २ अभिमानितम् ३ घर्षितम् ४ संप्रयोग: ५ अनारतम् ६ अब्रह्मचर्य्यकम् ७ उपसृष्टम् ८ त्रिमद्रम् ९ क्रीडारत्नम् १० महासुखम् ११ । इति त्रिकाण्डशेष: ॥ व्यवाय: १२ ग्राम्यधर्म्म: १३ रतम् १४ निधुवनम् १५ । इत्यमर: । २ । ७ । ५७ ॥ अस्य गुणा: । धातुक्षयकारित्वम् । रतिसन्तानदातृत्वञ्च । अतिशयमैथुनस्य श्वासकासज्वरकारित्वम् । अमैथुनस्य प्रमेहमेदग्रन्थिरोगाग्निमान्द्यकारित्वम् । स्त्रीसंसर्गरहितस्य आयुरजराशरीरबलवर्णस्थिरोपचितमांसानि भवन्ति । पूज्यस्थानाशुचिस्थानसेकस्थानलोकसमीपप्रात:कालसन्ध्याकालपर्व्वकालेषु तस्य त्याज्यत्वम् । एतत्कर्म्मणि रजस्वलाकामा मलिना वन्ध्या वर्णज्येष्ठा वयोज्येष्ठा व्याधियुक्ताङ्गहीनासती वेश्या योनिदोषयुक्ता सगोत्रा गुरुपत्नी भिक्षुकी कपटव्रतधारिणी वृद्धा च त्याज्या ॥ रजस्वलागमने दृष्ट्यायुस्तेज:क्षयोऽधर्म्मश्च भवति । कपटव्रतयुक्तागुरुपत्नी सगोत्रावृद्धागमने एवं पर्व्वकाले सन्ध्याकाले च स्त्रीमैथुने पापमायु:क्षयश्च भवति । वयोरूपगुणोपेतां कुलशीलसमन्विताम् । अधिकामां हृष्टामलङ्कृतां वाजीकरणपीडिताञ्च प्रमदां हृष्टोऽधिकामश्च पुरुष: सेवेत । शुक्रवर्द्धकद्रव्यं सशर्करं शीतलजलं वा पीत्वा कामवागचपलां सुरूपामनिन्द्यां हृष्टां प्रमदामाद्यप्रहरे हृष्ट: कामुको गत्वा तदनु सुखं स्वपेत् । असकृद्गमने तु नरो धातुवैषम्यमेति । रतान्ते स्नानं सशर्करक्षीरपानं निद्रा गौडिकरसभोजनञ्च हितम् । इति राजवल्लभ: ॥ * ॥ ( "तत्र प्रथमे दिवसे ऋतुमत्यां मैथुनगमनमनायुष्यं पुंसां भवति । यश्च तत्राधीयते गर्भ: स प्रसवमानो विमुच्यते । द्वितीयेऽप्येवं सूतिकागृहे वा । तृतीयेऽप्येवमसम्पूर्णाङ्गोऽल्पायुर्वा भवति । न च प्रवर्त्तमाने रक्ते वीजं प्रविष्टं गुणकरं भवति यथा नद्यां प्रतिस्रोत: प्लाविद्रव्यं प्रक्षिप्तं प्रतिनिवर्त्तते नोर्द्ध्वं गच्छति तद्वदेव द्रष्टव्यम् । तस्मान्नियमवतीं त्रिरात्रं परिहरेत् । अत:परं मासादुपेयात् ।"
"ऋतुस्नाता तु या नारी स्वप्ने मैथुनमावहेत् ।
आर्त्तवं वायुरादाय कुक्षौ गर्भं करोति हि ॥
मासि मासि विवर्द्धेत गर्भिण्या गर्भलक्षणम् ।
कललं जायते तस्या वर्ज्जितं पैतृकैर्गुणै: ॥"
इति सुश्रुते शारीरस्थाने द्वितीयेऽध्याये ॥)
व्रतदिवसे अष्टाङ्गमैथुनस्य त्याज्यत्वं यथा,—
"स्मरणं कीर्त्तनं केलि: प्रेक्षणं गुह्यभाषणम् ।
सङ्कल्पोऽध्यवसायश्च क्रियानिष्पत्तिरेव च ।
मैथुनं विविधं त्याज्यं व्रते क्रीडाविरहये ॥"
इति ब्रह्मवैवर्त्ते गणपतिखण्डे ४ अध्याय: ॥
अस्य विधिनिषेधौ यथा,—
"ऋतावुपगम: शस्त: स्वपत्न्यामवनीपते ! ।
पुन्नामर्क्षे शुभे काले ज्येष्ठयुग्मासु रात्रिषु ॥
नाप्नार्तां तु स्त्रियं गच्छेन्नातुरां न रजस्वलाम् ।
नानिष्टां न प्रकुपितां नाप्रशस्तां न गुर्व्विणीम् ॥
नादक्षिणां नान्यकामां नाकामां नान्ययोषितम् ।
क्षुत्क्षामामतिभुक्तां वा स्वयं चैभिर्गुणैर्युत: ॥
स्नात: स्रग्गन्धधृक् प्रीतो नाध्मात: क्षुधितोऽपि वा ।
सकाम: सानुरागश्च व्यवायं पुरुषो व्रजेत् ॥
चतुर्द्दश्यष्टमी चैव अमावास्याथ पूर्णिमा ।
पर्व्वाण्येतानि राजेन्द्र ! रविसंक्रान्तिरेव च ॥
तैलस्त्रीमांससम्भोगी पर्व्वस्वेतेषु वै पुमान् ।
विण्मूत्रभोजनं नाम प्रयाति नरकं मृत: ॥
अशेषपर्व्वस्वेतेषु तस्मात् संयमिभिर्बुधै: ।
भाव्यं सच्छास्त्रदेवेज्याध्यानजप्यपरैर्नरै: ॥
नान्ययोनावयोनौ वा नोपभुक्तौषधस्तथा ।
देवद्विजगुरूणाञ्च व्यवायी नाश्रयी भवेत् ॥
चैत्यचत्वरतीर्थेषु नैव गोष्ठे चतुष्पथे ।
नैव श्मशानोपवने सलिलेषु महीपते ! ॥
प्रोक्तपर्व्वस्वशेषेषु नैव भूपाल ! सन्ध्ययो: ।
गच्छेद्व्यवायं मतिमान्न मूत्रोच्चारपीडित: ।
पर्व्वस्वभिगमोऽधन्यो दिवा पापप्रदो नृप ! ।
भुवि रोगावहो नृणामप्रशस्तो जलाशये ॥
परदारान्न गच्छेत मनसापि कदाचन ।
किमु वाचास्थिबन्धोऽपि नास्ति तेषु व्यवायिनाम्
मृतो नरकमभ्येति हीयतेऽत्रापि चायुष: ।
परदाररति: पुंसामुभयत्रापि भीतिदा ॥
इति मत्वा स्वदारेषु ऋतुमत्सु बुधो व्रजेत् ।
यथोक्तदोषहीनेषु सकामेष्वनृतावपि ॥"
इति विष्णुपुराणे । ३ । ११ । १११-१२४ ॥
परस्त्र्यादिगमने दण्डो यथा,—
"ब्राह्मण: क्षत्रियो वैश्य: क्षत्रविट्शूद्रयोषि
व्रजन्दाप्यो भवेद्राज्ञा दण्ड उत्तमसाहसम् ॥
वैश्यागमे च विप्रस्य क्षत्रियस्यान्त्यजागमे ।
मध्यमं प्रथमं वैश्यो दण्ड्य: शूद्रागमाद्भवेत् ।
शूद्र: सवर्णागमने शतं दण्ड्यो महीभुजा ।
वैश्यश्च द्विगुणं राजन् ! क्षत्रियस्त्रिगुणं तथ
ब्राह्मणश्च भवेद्दण्ड्यस्तथा राजंश्चतुर्गुणम् ।
अगुप्तासु भवेद्दण्ड: स्वगुप्तास्वधिको भवेत् ॥
माता मातृष्वसा श्वश्रूर्मातुलानी पितृष्वसा
पितृव्यसखिशिष्यस्त्री भगिनी तत्सखी तथा
भागिनेयी तथा चैव राजपत्नी तथैव च ।
तथा प्रव्रजिता नारी वर्णोत्कृष्टा तथैव च ।
इत्यगम्यास्तु निर्द्दिष्टास्तासान्तु गमने नर: ।
शिश्नस्योत्कर्त्तनं कृत्वा ततस्तु वधमर्हति ॥
आत्मभार्य्यागमे पूर्व्वाद्दण्डस्तु द्विगुणो भवेत् ।
चाण्डालीञ्च श्वपाकीं वा गच्छन् वधमवाप्नुया
तिर्य्यग्योनौ च गोवर्ज्यं मैथुनं योऽभिसेवते
स पणं प्राप्नुयाद्दण्डं तस्याश्च यवसोदकम् ॥
सुवर्णञ्च भवेद्दण्डो गां व्रजन् मनुजोत्तम ! ।
वेश्यागामी द्विजो दण्ड्यो वेश्याशुल्कसमं पणम्
गृहीत्वा वेतनं वेश्या लोभादन्यत्र गच्छति ।
वेतनं द्विगुणं दद्याद्दण्डञ्च द्विगुणन्तथा ॥
अन्यमुद्दिश्य यो दद्यात् नयेदन्यस्य कारणात्
तस्य दण्डं भवेद्राजन् ! सुवर्णस्य च माषकम्
नीत्वा भोगान्न यो दद्याद्दाप्यो द्विगुणवेतनम्
राज्ञश्च द्विगुणं दण्डस्तथा धर्म्मो न हीयते ॥
बहूनां व्रजतामेकां सर्व्वे ते द्विगुणं दमम् ।
दद्यु: पृथक् पृथक् सर्व्वे दण्डञ्च द्विगुणं परम्
इति मात्स्ये २०१ अध्याय:

मैनाक:, पुं, ( मेनकाया अपत्यं पुमान् । मेनका भव इति वा । मेनका+अण् । पृषोदरादित्व

साधु ।) पर्व्वतविशेष । तत्पर्य्याय । हिरण्यनाभ २ सुनाभ ३ हिमवत्सुत ४ । इति जटाधर । स तु हिमालयस्य ज्येष्ठपुत्र । यथा,—
'ततो भगवती प्राह मेनकां सुप्रियप्रियाम् ।
हितसपूर्ब्बं सदा तस्याः पूरयन्ती मनोरथम् ॥
श्रीदेव्युवाच ।
शत पुत्रा भवन्तु भवत्या वीर्य्यसंयुता ।
तत्रैको बलवान् मुख्यः प्रथमं सम्भविष्यति ॥
एवमुक्ता जगद्धात्री तत्रैवान्तरधीयत ।
मेनका चाऽसुर लब्धा स्वस्थानं प्रविवेश ह ॥
तत काले तु सम्प्राप्ते मैनाकमचलोत्तमम् ।
पक्षैश्च सह योऽद्यापि सिन्धुमध्ये प्रवर्त्तते ॥
मेनका सुषुवे हृष्टो देवेन्द्रः सख्यया गतम् ।
अन्यानूनशतं पुत्त्रान् क्रमात् सा सुषुवे च ह ॥"
इति कालिकापुराणे ४० अध्याय ॥
(दानवविशेष । इति हरिवंशे भविष्यपर्व्वणि । २३२ । ३ ॥)

मैनाकस्वसा, [ ऋ ] स्त्री (मैनाकस्य स्वसा ।) पार्व्वती । इति हेमचन्द्र । २ । ११८ ॥

मैनिक, पु, (मीनं हन्तीति । मीन+"पक्षि मत्स्यमृगान् हन्ति ।" ४ । ४ । ३५ । इति ठक ।) जालिक । इति त्रिकाण्डशेषः ॥

मैन्द, पुं, विष्णुवध्यासुरविशेष । इति हेमचन्द्र । २ । १३४ ॥ (यथा, हरिवंशे ।४१।१५८—१६० ।
'अपर केशवस्याय प्रादुर्भावो महात्मन ।
विख्यातो माथुरे कल्पे सर्व्वलोकहिताय वै ॥
यत्र शाल्वश्च मैन्दश्च द्विविद कंसमेव च ।
हत्वान् माधवदेहस्थान् सूदयामास वीर्य्यवान् ॥"
वानरविशेष । इति रामायणम् ॥ (यथा महाभारते । २ । ३१ । १८ ।
तत्र वानरराजाभ्यां मैन्देन द्विविदेन च ।
युयुधे दिवसान् सप्त न च तौ विकृतिं गतौ ॥')

मैन्दहा [न्] पु (मैन्दं हतवानिति । हन्+क्विप् ।) विष्णु । इति हेमचन्द्र ॥

मैरेय स्त्री (मारं कामं जनयतीति । मार+ढक । निपातनात् साधु ।) मद्यविशेष । इत्यमर । २ । १० । ४२ ॥ "यद्यपि ।
'धातुरिक्षुरसे पक्वैरपक्वैरासवो भवेत् ।
मैरेयं धातकीपुष्पगुडधानाम्लसंहितम् ॥
इति माधवेन भेदः कृत । तथापि स्वल्पभेदादभेदमत्रम् । मार कामं जनयति मैरेय क्लीव । निपातनाद्दात ऐत्वम् । इति भरत ॥ (यथा
'मद्यन्तु सीधुर्म्मैरेयमिरा च मदिरा सुरा ।
कादम्बरी वारुणी च हालापि बलवल्लभा ॥"
इति भावप्रकाशस्य पूर्ब्बखण्डे द्वितीये भ ॥
क्वचित् पुंलिङ्गेऽपि दृश्यते । यथा,—
'तीक्ष्ण कषायो मद्यत हृद्यामकफगुल्मकृत् ।
क्रिमिमेदोऽनिलहरो मैरेयो मधुरो गुरु ॥'
इति सुश्रुते सूत्रस्थाने ४५ अध्याये ॥)

मैरन्द्र, पुं भ्रमर । यथा । श्रीमन्मुरन्दरपदपाथोरुहनि मरन्दमन्दोदाहादमधुर

समसौमैरन्द इत्यादि ।" इति परपचिन्तमम कौमुद्यां रामप्रभृति ।

मोक्ष क्षेपे । इति कविकल्पद्रुम ॥ (चुरा० पक्षे भ्वा० पर० सक० सेट ।) कि, मोक्षयति मोक्षति । इति दुर्गादास ॥

मोक्ष, पुं (मोक्ष+भावे घञ । मोक्षणं दु समनेन । मोक्ष+करणे घञ । इति भरत ।) मुक्ति ॥ (यथा, पाञ्चधारे । २ । ७ । २५ ।
"न मोक्षो नभस पृष्ठे न पाताले न भूतले ।
सर्व्वाशासंक्षये चेत क्षयो मोक्ष इति श्रुते ॥")
मोक्षधर्म्मस्तु महाभारते शान्तिपर्व्वणि द्रष्टव्य ॥ पाटलिवृक्ष । मोक्षणम् । इति मेदिनी । षे २५ । (यथा मेघदूते । ६२ ।
"ताभ्यो मोक्षस्तव यदि सखे । घर्म्मलब्धस्य न स्यात्
क्रीडालोला श्रवणपरुषैर्गर्ज्जितैर्भाययेस्ता ॥")
मृत्यु । इति हेमचन्द्र । १ । ७५ ॥ (विशेष । यथा, श्रीमद्भगवद्गीतायाम् । ७ । २९ ।
"जरामरणमोक्षाय मामाश्रित्य यतन्ति ये ।
ते ब्रह्म तद्विदु कृत्स्नमध्यात्मं कर्म्म चाखिलम् ॥"
'मोक्षाय विश्लेषणार्थम् ।" इत्यानन्दगिरि । आत्मस्वरूपदर्शनम् । इति रामानुज । निरसनम् । इति श्रीधरस्वामी ॥ पतनम् । यथा, कुमारसम्भवे । ३ । ३१ ।
"मरोत्कला प्रत्यनिलं विचेरु
र्वनस्थलीर्म्मर्म्मरपत्रमोक्षा ।"
"मर्म्मरपत्रमोक्षा शीर्णपर्णपाता ।" इति तट्टीकायां मल्लिनाथ ॥)

मोक्षक, पु, (मोक्षतीति । मोक्ष+ण्वुल ।) मुष्ककवृक्ष । इति राजनिर्घण्ट ॥ (यथा, वृहत्संहितायाम् । ५४ । ११२ ।
"तोयं श्रुतं मोक्षकभस्मना वा
यत्पञ्चकृत्व परिषिञ्चनं तत् ॥"
त्रि, मोक्षणकर्त्ता । यथा, मनुसंहितायाम् । ४ । २४२ ।
"असन्दितानां सन्धाता सन्धितानाञ्च मोक्षक ॥")

मोक्षोपाय, पुं, (मोक्षस्य मुक्तेरुपाय ।) मुक्तिसाधनम् ॥ तत्तु तप । शमादि । योग । ज्ञानञ्च । इति हेमचन्द्र । १ । ७७ ॥ (यथा हरिवंशे । २५५ । ६१ ।
"स तं प्रकृतमत दृष्ट्वा तपसाभिपरिप्लुत ।
उवाच दानवश्रेष्ठ मोक्षोपाय ददामि ते ॥")

मोघ, त्रि, (मुह्यतेऽस्मिन्निति । मुह+घञ । न्यङ्क्वादित्वात् कुत्वम् ।) निरर्थकम् । इत्यमर । ३ । १ । ८१ ॥ (यथा, मनौ । ९ । ५० ।
"यद्वन्मोघ्न वृषभो वत्सानां जनयेच्छतम् ।
गोमिनामेव ते वत्सा मोघ स्कन्दितमार्षभम् ॥"
यथा च ।
प्रेतभूतपिशाचाश्च रक्षांसि विविधानि च ।
शरणाभिमुखं नित्यमुपसर्पन्ति मानवम् ॥
तानि भेषजवीर्य्याणि प्रतिघ्नन्ति जिघांसया ।
तस्मान्मोघा क्रिया सर्व्वा भवन्त्येव गतायुष ॥"
इति सुश्रुते सूत्रस्थाने ३१ अध्याये ।)
हीनम् । इति मेदिनी । घे, ४ ॥ (यथा, आर्य्यासप्तशत्याम् । ६७० ।
"सज्जन एव हि विद्या शोभायै भवति दुर्ज्जने मोघा ॥")

मोघ, पुं, (मुह्यत्यस्मिन् । मुह+घञ । कुत्वम् ।) प्राचीरम् । इति शब्दमाला ॥

मोघपुष्पा स्त्री (मोघं पुष्पं रजो यस्या ।) वन्ध्या । इति राजनिर्घण्ट ॥

मोघा, स्त्री, पुं (मुह्यत्यनया । मुह+घञ । कुत्वम् । स्त्रियां टाप् ।) पाटला । इति मेदिनी । घे ४ ॥ (अस्या पर्य्यायो यथा —
"पाटलि पाटला मोघा मधुदूती फलेरुहा ।
कृष्णवृन्ता कुबेराक्षी कालस्थाल्यलिवल्लभा ॥"
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे भागे ।)
विडङ्गम् । इति शब्दमाला ॥

मोघोलि, पुं, प्राचीरम् । इति हारावली । ८८ ॥

मोच, स्त्री (मुचति त्वगादिकमिति । मुच+अच ।) कदलीफलम् । इत्यमर ॥ (यथा सुश्रुते चिकित्सितस्थाने । ३९ अ । "तालनारिकेरपनसमोचपियालबिल्वमधूकश्लेष्मातकाम्रफलानि पित्तसंसृष्टे वायौ ।" विवरणमस्य कदलीफलशब्दे ज्ञातव्यम् ।)

मोच, पुं (मुचति त्वचमिति । मुच+अच ।) शोभाञ्जनवृक्ष । इति मेदिनी । चे, ८ ॥ (यथा, महाभारते । ३ । १५८ । ४३ ।
"पनसाल्लकुचान् मोचान् खर्ज्जूरानम्लवेतसान् ॥")

मोचक, पुं (मोचयति संसारादिति । मुच+णिच+ण्वुल ।) मोक्ष । (मुचति गन्धं त्वचमिति वा । मुच+ण्वुल ।) कदली । शिग्रु । (मुचति विषयानिति ।) विरागी । इति हेमचन्द्र । ४ । २०० ॥ मुष्ककवृक्ष । इति राजनिर्घण्ट ॥ (मुक्तिकारके, त्रि । यथा, शिवपुराणे वायुसंहितायां पूर्ब्बभागे । ३।५१ ।
'अशक्तो मोचकश्चायमकाश काकचोदक ॥")

मोचन, क्ली, (मुच+ल्युट ।) मोक्ष । (यथा, महाभारते । ५ । ८४ । २१ ।
"अवतीर्य्य रथात्तूर्णं कृत्वा शौचं यथाविधि ।
रथमोचनमादिश्य सन्ध्यामुपविवेश ह ॥")
कल्कनम् । दम्भ । शाठ्यम् । इति मुचधातो र्भावेऽनटप्रत्ययेन निष्पन्नम् ॥ (मोचयतीति । मोचि+ल्यु । मोचनकर्त्तरि, त्रि । यथा, भागवते । ६ । १३ । २३ ।
"इन्द्र यथास्य निखिलाघमोचन
रिपुक्षय स्वस्त्ययनं तथायुषम् ॥")

मोचनी स्त्री, (मोचयति रोगादिति । मुच+णिच+ल्यु । स्त्रियां ङीप ।) कण्टकारी । इति जटाधर ॥ मोचकर्णी च ॥

मोचरस पु (मोचस्य रस ।) शाल्मलिनिर्यास । तत्पर्य्याय । मोचस्रुत २ मोचसार ३ मोच

"मूर्व्वा मधुरसा देवी मोरटा तेजनी स्रुवा ।
मधूलिका मधुश्रेणी गोकर्णी पीलुपर्ण्यपि ॥'
इति भावप्रकाशस्य पूर्व्वखण्डे प्रथमे भागे ।)

मोषकः, पुं (मुष्णातीति । मुष + ण्वुल् ।) तस्करः । इत्यमरः । २ । १० । २४ ॥

मोषणं, क्ली, लुण्ठनम् । छेदनम् । वधः । इति मुषधातोर्भावेऽनट् । (ल्युट् ॥*॥ मुष्णातीति । मुष + ल्यु । अपहारके, त्रि । यथा भागवते । ५।२४।२२। "न वै भगवान् नूनममुष्यानुजग्राह यदुत पुनरात्मानुस्मृतिमोषणं मायामयं भोगै-श्वर्य्यमेवातनुतेति ॥')

मोषिता, [ऋ] त्रि, मोषणकर्त्ता । चौरः । इति मुषधातोस्तृन्प्रत्ययेन निष्पन्नः ॥

मोहः, पुं (मोहनमिति । मुह + भावे घञ् ।) मूर्च्छा । इत्यमरः । २ । ८ । १०९ ॥ (यथा उत्तररामचरिते ३ अङ्के ।
"वीचिवातैः शीकरक्षोदशीतै-
राकर्षद्भिः पद्मकिञ्जल्कगन्धान् ।
मोहे मोहे रामभद्रस्य जीवं
स्वैरं स्वैरं प्रेरितैस्तर्पयेति ॥"
अस्य विषयो यथा,—
'सन्नावहासु नाडीषु पिहितास्वनिलादिभिः ।
तमोऽभ्युपैति सहसा सुखदुःखव्यपोहकृत् ॥
सुखदुःखव्यपोहाच्च नरः पतति काष्ठवत् ।
मोहो मूर्च्छेति तां प्राहुः षड्विधा सा प्रकी-
र्त्तिता ॥"
इति सुश्रुते उत्तरतन्त्रे ४६ अध्याये ।)
अविद्या । इति मेदिनी । हे, ७ । दुःखम् । इति शब्दरत्नावली ॥ देहादिषु आत्मबुद्धिः । इति गीतासुबोधिन्यां श्रीधरस्वामी ॥ अयं ब्रह्मणो बुद्धितो जातः । यथा —
"बुद्धेर्मोहः समभवदहङ्कारादभून्मदः ।
प्रमोदश्चाभवत् कण्ठान्मृत्युर्लोचनतो नृप ! ॥"
इति मात्स्ये २ अध्यायः ॥
मोहस्वरूपं यथा,—
"मम माता मम पिता ममेयं गृहिणी गृहम् ।
एतदन्यं ममत्वं यत् स मोह इति कीर्त्तितः ॥'
इति पाद्मे क्रियायोगसारे १६ अध्यायः ॥*॥
धर्म्मविमूढत्वम् । यथा —
"अकामतः कृतं पापं वेदाभ्यासेन शुद्ध्यति ।
कामतस्तु कृतं मोहात् प्रायश्चित्तैः पृथग्विधै-
रिति ॥"
अत्र मोहादिति को मोहः । अत्र ।
"मोहशब्देन देवेन्द्र ! बुद्धिपूर्व्वो व्यतिक्रमः ।
उच्यते पण्डितैर्नित्यं पुराणे कर्षपायन ॥"
इति भविष्यपुराणवचनात् ज्ञातबुद्धिपूर्व्वो व्यतिक्रमो मोहः । इति मिश्राः । तन्न कामता सामर्थ्यादेव बुद्धिलब्धत्वात् । उच्यते । मूढस्य सद्धार्थी मोहादगच्छत इत्यादौ मुह वैचित्त्ये इति धात्वर्थानुसारात् अज्ञानमात्रं मोहः । यत्र तु कामनाशब्दोऽस्ति तत्र भविष्यपुराणपठितमोहशब्दो न ग्राह्यः । किन्तु धर्म्म-विमूढत्वं मोहः स चाधर्म्मवृद्धौ सत्यामधर्म्मेषु रागात् कर्त्तव्यताभ्रमः । यथा व्यासः ।
"मोहो धर्म्मविमूढत्वं मानस्त्वात्माभिमानिता ।"
एवञ्च भविष्यपुराणीयबुद्धिशब्दोऽप्यधर्म्मज्ञान-मेवाभिधत्ते अधर्म्मज्ञाने पापगौरवार्थमिदमुक्तं मोहादिति । इति प्रायश्चित्तविवेकः ॥*॥
मोहवृक्षो यथा —
सुमनोवाच ।
"अथतामभिधास्यामि सम्बन्धे हननाशनम् ।
स्वरूपमुपदेशस्य सर्व्वविज्ञानदर्शनम् ॥
लोभः पापस्य बीजोऽयं मोहो मूलन्तु तस्य
हि ।
असत्यं तस्य च स्कन्धो माया शाखासुविस्तरः ।
दम्भकौटिल्यपत्राणि कुरत्या पुष्पितः सदा ।
पैशुन्यं तस्य सौगन्ध्यमज्ञानं फलमेव हि ॥
छद्मपाखण्डचौराश्च क्रूराः क्रूराश्च पापिनः ।
पक्षिणो मोहवृक्षस्य मायाशाखासमा-
श्रिताः ॥
अज्ञानन्तु फलं तस्य रसोऽधर्म्मफलस्य हि ।
भावोदकेन संवृद्धस्तस्य स्वादः स तु प्रियः ॥
अधर्म्मस्तस्य सुरभिः क्लेदश्च मधुरायतः ।
तादृशैश्च फलैश्चैव सुपक्वो लोभपादपः ॥
तस्य च्छायां समाश्रित्य यो नरः परिवर्त्तते ।
फलानि तस्य योऽश्नाति सुपक्वानि दिने दिने ॥
फलानान्तु रसेनैव अधर्म्मेण तु पोषितः ।
सुखपुष्टो भवन्मर्त्त्यः पतनाय प्रयच्छति ॥"
इति पाद्मे भूमिखण्डे ११ अध्यायः ॥

मोहनं, क्ली, (मुह्यतेऽनेनेति । मुह + ल्युट् ।) सुरतम् । इति हेमचन्द्रः । ३ । २०० ॥ यथा, मार्कण्डेये । ५१ । ७७ ।
"प्रविश्य गर्भमन्त्राको भुक्त्वा मोहयतेऽपरा ।
जायन्ते मोहनात्तस्याः सर्व्वभक्ष्यकरूपाः ॥')
होममन्त्रौषध्यादिद्वारा मुग्धताकरणम् । तत्र होमेऽङ्गुलिनियमो यथा —
"मोहनं वश्यकामञ्च प्रीतिवर्द्धनं तथा ।
प्रदेशिनीकनिष्ठाभ्यां सर्व्वमेतत् प्रसिध्यति ॥
मोहनाकर्षणञ्चैव क्षोभणोच्चाटनं तथा ।
कनिष्ठामध्यमाङ्गुष्ठयोगेन तु कोशया ॥
विधियुक्तेन होमेन तथा द्रव्यानुयोगतः ।
सर्व्वे मन्त्राः प्रसिध्यन्ति सुनामन्त्रप्रयोगतः ॥"
इति तन्त्रसारः ॥
(नगरभेदः । यथा, महाभारते । २।९५३।८।
"मोहनं पत्तनञ्चैव त्रिपुरीं कोशलां तथा ।
एतान् सर्व्वान् विनिर्जित्य करमादाय सर्व्वशः ॥")

मोहनः, पुं, (मोहयतीति । मुह + णिच् + ल्यु ।) धुस्तूरवृक्षः । इति राजनिर्घण्टः ॥ कामदेवस्य पञ्चबाणान्तर्गतबाणविशेषः । इति त्रिकाण्डशेषः ॥ (यथा, कथासरित्सागरे । ७१ । १६२ ।
"कामस्येव जगज्जैत्रमोहनास्त्राधिदैवतम् ।
तद्रूपकृतचित्ताभूत् समाधिस्थेव तत्क्षणम् ॥"
नृपविशेषः । यथा, कथासरित्सागरे । ६७।६१।
"मौलं प्रथमं निहतं मोहनो नाम भूपतिः ।
अग्निपत्याहृताश्च स तारुधामाश सायकैः ॥"
मोहकारके, त्रि । यथा, गीतायाम् । १८।३९ ।
"यदग्रे चानुबन्धे च सुखं मोहनमात्मनः ।
निद्रालस्यप्रमादोत्थं तत्तामसमुदाहृतम् ॥
"अत्र मोहनं मोहकरम् ।' इति आनन्द-गिरिः ॥)

मोहनभोगः, पुं (मोहनश्चासौ भोगश्चेति ।) समिताशर्करादुग्धघृतादियुक्तमिष्टान्नविशेषः । इति पाकराजेश्वरः ॥

मोहना, स्त्री, (मोहयति पुष्पैरिति । मुह + ल्यु । टाप् ।) त्रिपुरमालीपुष्पम् । इति रत्नमाला ॥ मदमाला । इति शब्दमाला ॥

मोहनी, स्त्री, (मुह्यत्यनयेति । मुह + ल्युट् । स्त्रियां ङीप् ।) उपोदकी । इति राजनिर्घण्टः ॥ वटपत्री । इति भावप्रकाशः ॥ (तथास्याः पर्य्यायः ।
"मोहनी मल्लिकाख्या तु वटपत्रा च मोहना ।"
इति वैद्यकरत्नमालायाम् ॥)
माया । यथा, महाभारते । १४ । ८० । ४५ ।
"यथा तु मोहनी नाम मायैषा सम्प्रदर्शिता ।")

मोहरात्रिः, स्त्री (मोहस्य रात्रिः ।) दैनन्दिनप्रलयः । यथा,—
"एवं पञ्चाशदब्दे च गते तु ब्रह्मणो नृप ! ।
दैनन्दिनन्तु प्रलयं वेदेषु परिकीर्त्तितम् ॥
मोहरात्रिश्च सा प्रोक्ता वेदविद्भिः पुरातनैः ।
तत्र सर्व्वे प्रनष्टाश्च चन्द्रार्कादिदिगीश्वराः ॥
आदित्या वसवो रुद्रा मनवो मानवादयः ।
ऋषयो मुनयश्चैव गन्धर्व्वा राक्षसादयः ॥
मार्कण्डेयो लोमशश्च पेचकश्चिरजीविनः ।
इन्द्रद्युम्नश्च नृपतिश्चाकूपारश्च कच्छपः ।
नाडीजङ्घो बकश्चैव सर्व्वे नष्टाश्च तत्र वै ॥
ब्रह्मलोकादधः सर्व्वे लोका नागालयास्तथा ।
ब्रह्मलोकं ययुः सर्व्वे ब्रह्मलोकादधस्तथा ॥
गते दैनन्दिने ब्रह्मा लोकांश्च सृजते पुनः ।
एवं शताब्दपर्य्यन्तं परमायुश्च ब्रह्मणः ॥
ब्रह्मणश्च निपातेन महाकल्पो भवेन्नृप ! ।
प्रकीर्त्तिता महारात्रिः सा एव च पुरातनैः ॥"
इति ब्रह्मवैवर्त्ते प्रकृतिखण्डे । ५४ । ७२—७८ ॥*॥
मोहः कर्त्तव्याग्रहः स एव रात्रिरिव रात्रि-र्बुद्धिमोहकत्वान्निद्रारूपा । इदानीन्तनजनानां रात्रिरिति वा । इति देवीमाहात्म्यटीकायां विद्याविनोदः ॥*॥ जन्माष्टमीरात्रिः । यथा —
"दीपोत्सवचतुर्द्दश्यामसया घोरा एव चैत् ।
कालरात्रिर्म्महेशानि ! ताराकालीप्रियङ्करी ।
जन्माष्टमी महेशानि ! मोहरात्रिः प्रकीर्त्तिता ॥
तृतीया माधवे शुक्ला कुजवारसमन्विता ।
दारुणा कीर्त्तिता देवि ! सर्व्वसिद्धेश्वरी परा ॥"
इति शक्तिसङ्गमतन्त्रम् ॥

मोहशास्त्रं, क्ली, (मोहोत्पादकं शास्त्रमिति मध्यपदलोपिकर्म्मधारयः ।) अविद्यात्मकग्रन्थः । यथा,—
"गोपतिं प्राह विप्रेन्द्रामालोक्य भगवान् हरिः ।

न वेदवाह्यपुरुषे पुण्यलेशोऽपि शङ्कर ! ॥
गङ्गच्छते मया देव ! धर्म्मो वेदाद्धि निर्ब्बभौ ।
तथापि भक्तवात्सल्याद्रक्षितया महेश्वर ! ॥
अस्माभिः सर्व्व एवैमे गन्तारो नरकानपि ।
अस्मात् वेदवाह्यानां रक्षणाय च पापिनाम् ।
विमोहनाय शास्त्राणि करिष्यावो वृषध्वज ! ॥
एवं सम्बोधितो रुद्रो माधवेन मुरारिणा ।
चकार मोहशास्त्राणि केशवोऽपि शिवेरितः ॥
कापालं नाकुलं वामं भैरवं पूर्व्वपश्चिमम् ।
पञ्चरात्रं पाशुपतं तथान्यानि सहस्रशः ॥"
इति कौर्म्मे १४ अध्यायः ॥

मोहिनी, स्त्री, ( मोहयति सौन्दर्य्यादिनेति । मुह + णिच् + णिनिः । स्त्रियां ङीप् । ) त्रिपुरमालीपुष्पम् । इति रत्नमाला ॥ ( वटपत्री । तत्पर्य्यायो यथा,—
"वटपत्री तु कथिता मोहिनी रेचनी बुधैः ॥"
इति भावप्रकाशस्य पूर्व्वखण्डे प्रथमे भागे ॥) समुद्रमन्थनकाले देवानाममृतपानायासुराणां मोहनाय च भगवदवतारविशेषः । यथा,—
"धान्वन्तरं द्वादशमं त्रयोदशममेव च ।
अपाययत् सुरानन्यान् मोहिन्या मोहयन् स्त्रिया ॥"
इति श्रीभागवते १ स्कन्धे ३ अध्यायः ॥
खर्व्वेशापविशेषः । यस्याः शापात् ब्रह्मणोऽपूज्यत्वं जातम् । यथा,—
"यतो हससि गर्व्वेण ततोऽपूज्यो भवाचिरम् ।
अचिराद्दर्पभङ्गं ते करिष्यति हरिः स्वयम् ॥
निबोध शरणं ब्रह्मन् ! खर्व्वेशायाश्च साम्प्रतम् ॥
तवैव कवचं स्तोत्रं मन्त्रं गृह्णाति यो नरः ।
भविता तस्य विघ्नश्च स याश्यत्युपहास्यताम् ॥
भविता वार्षिकी पूजा देवतानां युगे युगे ।
तव माघाद्य संक्रान्त्यां न भविष्यति वा पुनः ॥
इत्युक्त्वा मोहिनी शीघ्रं जगाम मदनालयम् ।
तेन सार्द्धं रतिं कृत्वा बभूव विज्वरा पुनः ॥"
इति ब्रह्मवैवर्त्ते श्रीकृष्णजन्मखण्डे ३३ अध्यायः ॥
विस्तरस्तु ब्रह्मन्शब्दे द्रष्टव्यः ॥ ( मोहकर्त्तरि त्रि । यथा, भागवते । ३ । ६ । ३५ ।
"अतो भागवती माया मायिनामपि मोहिनी ।
यत् स्वयञ्चात्मवर्त्मात्मा न वेद किमुतापरे ॥")

मौकुलिः, पुं, काकः । इति हेमचन्द्रः । ४ । ३८८ ॥ ( यथा, उत्तररामचरिते २ अङ्के ।
"कूजत्कुञ्जकुटीरकौशिकघटाघुत्कारवत्कीचक-
स्तम्बाडम्बरमूकमौकुलिकुलः क्रौञ्चावतोऽयं गिरिः ।
एतस्मिन् प्रचलाकिनां प्रचलतामुद्वेजिताः कूजितै-
रुद्वेल्लन्ति पुराणचन्दनतरुस्कन्धेषु कुम्भीनसाः ॥")

मौक्तिकं, क्ली, ( मुक्तैव । मुक्ता + "विनयादिभ्यष्ठक् ।" ५ । ४ । ३४ । इति ठक् । ) मुक्ता । इत्यमरः ।२।६।९२॥ (यथा, चाणक्यशतके ।५५।
"शैले शैले न माणिक्यं मौक्तिकं न गजे गजे ।
साधवो नहि सर्व्वत्र चन्दनं न वने वने ॥"
तथास्य पर्य्यायः ।
"मौक्तिकं शौक्तिकं मुक्ता तथा मुक्ताफलञ्च तत् ।
अभावे मौक्तिकस्यापि मुक्ताशुक्तिं प्रयोजयेत् ॥"
इति भावप्रकाशस्य पूर्व्वखण्डे द्वितीये भागे ॥)

मौक्तिकतण्डुलः, पुं, ( मौक्तिकमिव शुक्लः तण्डुलोऽस्य । ) धवलयावनालः । इति राजनिर्घण्टः ॥

मौक्तिकप्रसवा, स्त्री, ( मौक्तिकस्य प्रसवा । ) शुक्तिः । इति राजनिर्घण्टः ॥

मौक्तिकशुक्तिः, स्त्री, ( मौक्तिकानां शुक्तिः । ) शुक्तिः । इति राजनिर्घण्टः ॥ मुक्तार झिनुक् इति भाषा ॥

मौखं, क्ली, ( मुखस्येदमिति । मुख + अण् । ) मुखसम्बन्धाधीनपापम् । तत्तु अभक्ष्यभक्षणरूपं तत्र क्लीवम् । संसर्गरूपस्य तस्य प्रायश्चित्तं यथा । सुमन्तुः । यश्च तैर्य्यौनमौखस्रौवाणां सम्बन्धानामन्यतमेन सह सम्पर्कमियात् तस्याप्येतदेव प्रायश्चित्तं विदध्यात् । इयात् कुर्य्यात् । एतदेवेति द्वादशवार्षिकमित्यर्थः । अत्र याजनादीनामन्यतमेन संवत्सरेण पततीत्यवगम्यते । इति शूलपाणिकृतप्रायश्चित्तविवेकः ॥ मुखसम्बन्धिनि, त्रि ॥

मौखर्य्यं, क्ली, मुखरत्वम् । मुखरस्य भाव इत्यर्थे ष्यञ्प्रत्ययेन निष्पन्नम् ॥

मौखिकं, त्रि, मुखसम्बन्धि । मुखस्येदमित्यर्थे ष्णिक् (ठक्) प्रत्ययेन निष्पन्नम् ॥

मौञ्जी, स्त्री, ( मुञ्जस्येयमिति । मुञ्ज + अण् । स्त्रियां ङीप् । ) मुञ्जनिर्म्मितमेखला ॥ ( यथा, शिशुपालवधे । १ । ६ ।
"पिशङ्गमौञ्जीयुजमर्ज्जुनच्छविं
वसानमेणाजिनमञ्जनद्युति ।
सुवर्णसूत्राकलिताधराम्बरां
विडम्बयन्तं शितिवाससस्तनुम् ॥"
"मुञ्जतृणविशेषसम्बन्धिमेखला मौञ्जी ।" इति तट्टीकायां मल्लिनाथः ॥ ) यथा,—
"विप्रस्य क्षत्त्रियस्यापि मौञ्जी स्याद्दक्षिणायने ।
उदीच्ये च विशां कार्य्यं नानध्याये न संक्रमे ॥"
मनुः ।
"मौञ्जी त्रिवृत्समा श्लक्ष्णा कार्य्या विप्रस्य मेखला ।
क्षत्त्रियस्य च मौर्व्वी ज्या वैश्यस्य शणतान्तवी ॥
मुञ्जालाभे तु कर्त्तव्या कुशाश्मन्तकवल्वजैः ।
त्रिवृता ग्रन्थिनैकेन त्रिभिः पञ्चभिरेव वा ॥"
इति संस्कारतत्त्वम् ॥

मौञ्जीटयाख्यः, पुं, ( मौञ्जीटयमित्याख्यास्य । ) मुञ्जः । इति राजनिर्घण्टः ॥

मौञ्जीपत्रा, स्त्री, ( मौञ्जीपत्रमिव पत्त्रमस्याः । ) वल्वजा । इति राजनिर्घण्टः ॥

मौञ्जीबन्धः, पुं, ( मौञ्ज्या बन्धः बन्धनम् । ) मुञ्जमेखलाबन्धनम् । उपनयनमिति यावत् । यथा,
"जन्मभादष्टमे सिंहे नीचस्थे शत्रुभे गुरौ ।
मौञ्जीबन्धः शुभः प्रोक्तश्चैत्रे मीनगते रवौ ॥"
इति ज्योतिर्निबन्धे नारदवचनम् ॥

मौढ्यं, क्ली, (मूढस्य भावः कर्म्म वा । मूढ + "गुणवचनब्राह्मणादिभ्यः कर्म्मणि च ।" ५।१।१२४ । इति ष्यञ् ।) मौर्ख्यम् । इति हेमचन्द्रः ।२।२३४॥ ( यथा, श्रीमद्भागवते । ३ । २९ । २२ ।
"यो मां सर्व्वेषु भूतेषु सन्तमात्मानमीश्वरम् ।
हित्वार्च्चां भजते मौढ्याद्भस्मन्येव जुहोति सः ॥"
पुं, मूढस्यापत्यम् । मूढ + "कुर्व्वादिभ्यो ण्यः ।" ४ । १ । १५१ । इति ण्यः । मूढपुत्त्रः । इति व्याकरणम् ॥)

मौद्गलिः, पुं, काकः । इति त्रिकाण्डशेषः ॥

मौद्गल्यः, पुं, (मुद्गलस्यापत्यमिति । मुद्गल + यञ् ।) मुद्गलमुनिपुत्त्रः । स च गोत्रकारकः । अस्य पञ्च प्रवराः यथा । और्व्वच्यवनभार्गवजामदग्न्याप्नुवन्तः । इति कुलदीपिका ॥ ( यथा, हरिवंशे । ३२ । ७० ।
"मुद्गलस्य तु दायादो मौद्गल्यः सुमहायशाः ॥)

मौद्गीनं, क्ली, ( मुद्गानां भवनं क्षेत्रमिति । मुद्ग + "धान्यानां भवने क्षेत्रे खञ् ।" ५ । २ । १ । इति खञ् । ) मुद्गभवोचितक्षेत्रम् । इत्यमरः । २ । ९ । ८ ॥

मौनं, क्ली, (मुनेर्भाव इति । मुनि + अण् ।) शब्दप्रयोगराहित्यम् ॥ तत्पर्य्यायः । अभाषणम् २ । तूष्णीम् ३ तूष्णीकाम् ४ । इत्यमरः ।३।७।३६ ॥ ( यथा, रघुवंशे । १ । २२ ।
"ज्ञाने मौनं क्षमा शक्तौ त्यागे श्लाघाविपर्य्ययः ।
गुणा गुणानुबन्धित्वात्तस्य सप्रसवा इव ॥" )
कर्म्मविशेषे मौनाचरणं यथा,—
"उच्चारे मैथुने चैव प्रस्रावे दन्तधावने ।
स्नाने भोजनकाले च षट्सु मौनं समाचरेत् ॥"
इति तिथ्यादितत्त्वम् ॥

मौनी, [न्] पुं, (मौनमस्यास्तीति । मौन + "अत इनिठनौ ।" ५।२।११५ । इति इनिः ।) मुनिः । इति जटाधरः ॥ ( यथा, मार्कण्डेये ।७५।१६ ।
"ततः स चिन्तयामास राजा जामातृकारणम् ।
विवेद च न तन्मौनी जगृहेऽर्थञ्च तं नृपः ॥")
मौनयुक्ते, त्रि । यथा,—
"सिनीवाली कुहूर्व्वापि यदि सोमदिने भवेत् ।
गोसहस्रफलं दद्यात् स्नानं यन्मौनिना कृतम् ॥
एतच्च मौनमरुणोदयमारभ्य स्नानपर्य्यन्तं कार्य्यं न तु स्नानकालमात्रे ।" इति तिथ्यादितत्त्वम् ॥

मौनेयः, पुं, ( मुनेरपत्यं पुमान् । मुनि + "इतश्चानिञः ।" ४।१।१२२ । इति ढक् । ) गन्धर्व्वगणविशेषः । यथा,—
"गन्धर्व्वाप्सरसः पुण्या मौनेयांस्तु निबोधत ।
चित्रसेनोग्रसेनौ तु ऊर्णायुरनघस्तथा ॥
धृतराष्ट्रश्च गोमांश्च सूर्य्यवर्च्चास्तथैव च ।
युगपत्तृणपत्कार्ष्णिर्नन्दिश्चित्ररथस्तथा ॥
त्रयोदशः शालिशिराः पर्ज्जन्यश्च चतुर्दशः ।
इत्येते देवगन्धर्व्वास्तुविंशश्छुभास्वराः ॥"
इति वह्निपुराणम् ॥

(चपरोभेदे, स्त्री । यथा, हरिवंशे ।२१८।४०।
"कायाः प्रारहती चैव मौरेयाःपरमः स्मृताः ।")
मौरजिकः, त्रि, ( मुरजवादनं शिल्पमस्य । मुरज+"शिल्पम् ।"४।४।५५। इति ठक् । ) मुरजवादकः । इत्यमरः ।२।१०।१३।
मौर्व्यं, क्ली, ( मूर्वस्य भावः । मूर्व+"वर्णदृढादिभ्यः ष्यञ् च ।"५।१।१२३। इति ष्यञ् ।) जाड्यम् । इति हेमचन्द्रः ।२।२२६। ( यथा, सुश्रुते शारीरस्थाने ४ अः ।
"अनवस्थितता मौर्व्यं भीरुत्वं जलिताधिता ।")
मौर्वी, स्त्री, (मूर्व्वाया विकारः । मूर्व्वा+"अवयवे च प्राण्यौषधिवृक्षेभ्यः ।" ४।३।१३५। इति अण् । ङीप् । ) धनुर्गुणः । इत्यमरः ।२।८।८५। (यथा, रघुः ।१।१८।
"आकर्णकुञ्चिता वृद्धिर्मौर्वी धनुषि चातता ।" अनलदृष्टौ । इति रत्नमाला । कोंगा इति भाषा । (मूर्वामयी । यथा, मनौ ।२।४२।
"मौञ्जी त्रिवृत्समा श्लक्ष्णा कार्य्या विप्रस्य मेखला ।
क्षत्रियस्य तु मौर्वी ज्या वैश्यस्य शणतान्तवी ।")
मौलः, पु, (मूलं वेदेति । मूल+अण् ।) भूम्यादेर्मूलज्ञाता । मौडल् इति भाषा । यथा,—
"यत् परम्परया मौलाः सामन्ताः स्वामिनं विदुः ।
तदन्वयस्यागतस्य दातव्या गोत्रजैर्मही ।"
इति दायतत्त्वम् ।
तस्य लक्षणं यथा,—
"ये तत्र पूर्व्वं सामन्ताः पश्चाद्देशान्तरं गताः ।
तन्मूलत्वात्तु ते मौला ऋषिभिः परिकीर्त्तिताः ।"
इति मिताक्षरा ।
( विजिगीषोरिमध्योदासीनः । यथा, कामन्दकीये ।८।३४।
"चत्वारः पार्थिवा मौलाः एषद्भिर्मित्रैः सहाष्टकम् ।"
मूलभूते, त्रि । यथा, तत्रैव ।८।२५। [ याः ।
"मौला द्वादश याश्चैता सुमान्याद्यास्तथा च सप्ततिश्चाधिका ख्याताः सर्व्वं प्रकृतिमण्डलम् ।")
मौलिः, पुं, स्त्री, (मूल+सुतङ्गमादित्वात् इञ् ।) चूडा । ( यथा, महाभारते ।८।५८।५।
"एवमुक्तः स वामेन पदा मौलिमपाहरत् ।
शिरश्च राजसिंहस्य पादेन समलोडयत् ।")
किरीटम् । ( यथा, हरिवंशे ।८०।३०।
"इयश्च सा मया मौलिरहृता वरुणालयात् ।")
संयतकेशः । इत्यमरः ।३।३।१८२। (यथा, रघौ ।७।६६।
"स चापकोटीनिहितैकबाहुः
शिरस्त्रनिष्कर्षणभिन्नमौलिः ।
ललाटबद्धश्रमवारिबिन्दुः
भीतां प्रियामेत्य वचो बभाषे ।")
मस्तकम् । इति हेमचन्द्रः ।३।२।२३०। ( यथा, आर्य्यासप्तशत्याम् ।४९४।।

"भालवयनेऽपि निरिन्द्रमौली गात्रे भुजङ्गमणिदीपाः ।"
प्रधानः । यथा, मार्कण्डेये ।५८।१४।
"मौलयस्ते महाकायाः शाकमीनकराशकाः ।")
मौलिः, पु, ( मूलस्यादूरभवः । मूल+सुतङ्गमादित्वादिञ् ।) अशोकवृक्षः । इति मेदिनी ।
मौलिः, स्त्री, ( मूले जाता । मूल+इञ् । ) भूमिः । इति मेदिनी ।
मौलिकः, पु, (मूले आद्ये जातः । मूल+ठञ् ।) कुलीनभिन्नः । यथा राढीयवारेन्द्रब्राह्मणस्य श्रोत्रियः तथा कायस्थस्य मौलिकः । एवं दाक्षिणात्यवैदिकब्राह्मणस्य अभवपूर्व्वोपरिस्थितापि सत् पदवाच्यः । बङ्गजकायस्थस्य स च मध्यमशब्दवाच्यः । यथा । अथ मध्यमलक्षणमाह । मध्यमशब्दो रूढ़ इत्यतः । ... मध्यम. कुलमध्यस्थकुलीनस्य विश्रामस्थल मित्यर्थः । मध्यमशब्दस्य लक्षणान्तरम् । कुलीनेतरसिद्धवंश्यजातकले सति दशपुरुषावधि अनवच्छिन्नकुलाचार्य्यत्वं मध्यमत्वम् । स च द्विविधः । सिद्धः साध्यश्च । सिद्धत्वं प्रकृतमध्यमत्वम् । प्रकृतसिद्धवंश्यजातत्वे सति दशपुरुषावधिकुलाचार्य्यकत्वं सिद्धत्वम् । सिद्धपदाकाङ्क्षित्वे सति दशपुरुषावधिकुलाचार्य्यकत्वं साध्यत्वम् । अस्य प्रशंसामाह ।
"कुलीनकुलदर्पाणां विवादेषु मीमांसया ।
एतेषां गुणमाश्रित्य मध्यमाः कुलमुत्तमम् ।"
इति कुलदीपिका ।*।
दक्षिणराढ़ीयकायस्थस्याष्टकमौलिका यथा,—
"गौडेऽष्टौ कीर्त्तिमन्तश्चिरवसतितया मौलिका ये हि सिद्धा-
स्ते दत्ताः सेनदासाः करगुहसहिताः पालिताः सिंहदेवाः ।
ये वा पद्माभिरुद्धाः क्षितितिलकयुताः सप्ततिस्ते द्विपूर्व्वा
मित्राद्या ढौष राष्ट्रा वरगुणयुता मौलिकास्तेन साध्याः ।"
अपि च ।
"सेनो दत्तः करो धौषो दासो देवः प्रतिष्ठितः ।
पालितः सिंहधर्म्मौ च गुहः सप्तमौलिकाः स्मृताः ।"*।
द्विसप्ततिसाध्यमौलिका यथा,—
"होड़ः खरधरश्चौ नाग
आचिच सोमः पेहुर साम ।
भञ्जो बिन्दो गुइ बल लोध
शर्म्मा वर्म्मा कुर भूयि चन्द्रः ।
बद्दो रक्षित राजारियो
विष्णुनागः श्रिल पिल गुप्तः ।
इन्दो गुम पालो भद्र
श्यामखाङ्कुर वन्धुर नाथः ।
घाँयिर्घोषाँ मालो शक्ती
राड्डा राना राहुत धाना ।
दाड्डा दावा सम उपमाना ॥

नाग सोमो घर से बाय
बोदसेनश्चाम्ब आद्यः ।
शक्तिभूतो भक्तो श्याम
हेमो हैमो वर्द्धन रङ्गः ।
गुह: कीर्त्तिपशः कुण्डो
नन्दी शीलो धनुर्गुणः ।"
इति द्विसप्ततिमौलिकाः ।*।
अन्यच्च ।
"देवो भूदेवभक्तो गुहघटशरणो दास ईशानदासः
सेनो दत्तः सुदत्तादिहितमनयः पालितो धर्म्मपालः ।
सिंहः सिंहप्रतापः क्षितिनिकरकरादानदत्तः करोऽष्टौ
गौडेऽष्टौ संस्थिमाप्ते गुणगणनिपुणा मौलिकास्तेन सिद्धाः ।*।
होड़खाधरबोधिलधोमा
ग्रामबिन्दुगुइराजराहुताः ।
इन्दपालबलसामरक्षिता
लोधशर्म्मपुंधिवर्म्मवसराः ।
चन्द्रमौ यिगुपिभद्रपेसुरा
नन्दगुप्तवरकीर्त्तिवर्द्धनाः ।
श्रीमहेमशखनागविष्णवो
वञ्चवङ्कपिलकुन्दधनुर्गुणाः ।
तेजोऽंशखरधरादिच शक्तिभूताः
श्यामौघ श्याम विदशील यशोम नन्दी ।
राडाङ्कुरेन्द्रगुभकुण्डमनोपमाना
दानाद्यमूलविदिता भुवि कीर्त्तिमन्तः ।
देवादियो दाय राना नाना च स्थामकसथा ।
द्विसप्ततिमिताः साध्या मौलिका विदिताः क्षितौ ।"
इति कुलाचार्य्यकारिका ।*।
( देशविशेषः । यथा, मार्कण्डेये ।५७।४८।
"मौलिका मौलिकाश्चैव अश्मका भोगवर्द्धनाः ।")
त्रि, मूलसम्बन्धिनि मौलसम्बन्धिनि च । (भारभूतं मूलं हरति वहत्यावहति वा । मूल+"तद्धरति वहत्यावहति भाराद्वंशादिभ्यः ।" ५।१।५०। इति ठञ् । मूलभारहारके मूलभारवाहके मूलभारानेतरि च । इति व्याकरणम् ।)
मौषलं, क्ली, ( मूषलमिव । मूषलस्येदमिति वा । मूषल+अण् । ) मूषलवत् । यथा,—
"अज्ञानां मौषलं स्नानं महापातकनाशनम् ।"
इति प्रायश्चित्ततत्त्वधृतभविष्यपुराणवचनम् । महाभारतस्याष्टादशपर्व्वान्तर्गतपर्व्वविशेषः । यथा,—
मौषलं पर्व्व चोद्दिष्टं ततो घोरं सुदारुणम् ।
महाप्रास्थानिकं पर्व्व स्वर्गारोहणिकं ततः ।"
इति महाभारते आदिपर्व्व ।
मूषलसम्बन्धिनि, त्रि ।

